मधुस्वरैर्मधुकरैर् विरुतान् कमलोत्करान् ॥ ५६
पश्यन्तस्ते मनोरम्यान् गन्धमादनसानुषु ॥ ५६॥
[1]तथैव पद्मषण्डैश्च मण्डितेषु समन्ततः ॥ ५७

शिखण्डिनीभिस्सहिताँल्लतामण्डपकेषु च ।
मेघतूर्यरवोद्दाममदनाकुलितान् भृशम् ॥ ५८

[2]श्रुत्वैव केकाविरुतं सङ्गीतं मधुरस्वरम् ।
चित्रान् कलापान् विस्तीर्य सविलासान् मदालसान् ॥ ५९

मयूरान् ददृशुश्चित्रान् नृत्यतो वनलालसान् ।
कान्ताभिस्सहितान् वश्यान् अपश्यन् रमतस्सुखम् ॥ ६०

[3]वल्लीलताकण्टकेषु कटकेषु स्थितांस्तथा ।
कांश्चिच्छकुनजातांस्ते विटपेषूत्कटानपि ॥ ६१

कलापरचिताटोपान् विचित्रमकुटानपि ।
विवरेषु तरूणां च विष्ठितान् ददृशुश्च ते ॥ ६२

सिन्धुवारानथोदारान् मन्मथस्येव तोमरान् ।
सुवर्णकुसुमाकीर्णान् गिरीणां शिखरेषु च ॥ ६३
कर्णिकारान् विचित्राभान् कर्णपूरानिवोत्तमान् ॥ ६३॥
अथाऽपश्यन् कुरवकान् वनराजिषु पुष्पितान् ।

---

1. ख—इदमर्धमेव नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इतो सप्तदशार्धानि न सन्ति

कामवश्योत्सुककरांस् तथैव वनराजिषु ॥　६४॥

तांस्त्वलङ्कारमधुरान् सहितान् सुमनोहरान् ।
विराजमानांस्तेऽपश्यंस् तिलकांस्तिलकानिव ॥　६५॥

तथा कामशराकारान् सहकामान् मनोरमान् ।
अपश्यन् भ्रमराकीर्णान् मञ्जरीभिर्विराजितान् ॥　६६॥

हिरण्यसदृशैः पुष्पैर् दावाग्निसदृशैरपि ।
[1]लोहितैरञ्जनाभैश्च वैडूर्यसदृशैरपि ॥　६७॥

तथा सालांस्तमालांश्च पाटलीर्बकुलांस्तथा ।
माला इव समासक्तान् शैलानां शिखरेषु च ॥　६८॥

[2]एवं क्रमेण ते वीरा वीक्षमाणास्समन्ततः ।
ययुर्नागसमाबाधं सिंहव्याघ्रसमाकुलम् ॥　६९॥

सर्वर्तुफलपुष्पाढ्यं गन्धमादनसानुषु ॥　७०
पीता भास्वरवर्णाभा बभूवुर्वनराजयः ॥　७०॥

[3]विमलस्फटिकाभानि पाण्डुरच्छदनैर्द्विजैः ।
राजहंसैरुपेतानि सारसाभिरुतानि च ॥　७१॥

सरांसि सरसाः पार्थाः पश्यन्तश्शैलसानुषु ।

---

1. घ—नास्तीदमर्धम्
2. ख—अन्यान् शकुनजातांश्च विटपेषूत्कटानपि ।　[अधिकः पाठः]
3. ख—इदमर्धं नास्ति

[1]पद्मोत्पलविचित्राणि सुखस्पर्शजलानि च ॥ ७२॥
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥ ७३
[2]अतीव वृक्षा राजन्ते पुष्पिताश्शैलसानुषु ॥ ७३॥
[3]एते चान्ये च बहवस् तत्र काननजा द्रुमाः ।
लताश्च विविधाकाराः पत्रपुष्पफलोपगाः ॥ ७४॥
[4]नात्र कण्टकिनः केचिन्नात्र केचिदपुष्पिताः ।
[5]स्निग्धपत्रफला वृक्षाः पर्वते गन्धमादने ॥ ७५॥
गजसङ्घसमाकीर्णं सिंहव्याघ्रसमाकुलम् ।
शरभोन्नादसङ्घुष्टं नानाविहगनादितम् ॥ ७६॥
सर्वर्तुफलपुष्पाढ्यं गन्धमादनसानुषु ।
पीता भास्करवर्णाभा बभूवुर्वनराजयः ॥ ७७॥
युधिष्ठिरस्तु तान् वृक्षान् पश्यमानो नगोत्तमे ।
भीमसेनमिदं वाक्यम् अब्रवीन्मधुराक्षरम् ॥ ७८॥

युधिष्ठिरः—

पश्य भीम शुभान् देशान् देवाक्रीडान् समन्ततः ।
अमानुषीं गतिं प्राप्तास् संसिद्धास्स्म वृकोदर ॥ ७९॥
[6]लताभिश्चैव वल्लीभिः पुष्पिताः पादपोत्तमाः ।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ॥ ८०॥

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. ख—इदमर्धं नास्ति
5. ख—इदमादि अर्धपञ्चकं नास्ति
6. ख—अर्धद्वयं नास्ति

शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम् ।
नर्दतां शृणु निर्घोषं भीम पर्वतसानुषु ॥ ८१॥

चकोराश्शतपत्राश्च मत्तकोकिलशारिकाः ।
पक्षिणः पुष्पितानेतान् संश्लिष्यन्ति महाद्रुमान् ॥ ८२॥

रक्तपीतारुणाः पार्थ पादपाग्रगता द्विजाः ।
परस्परमुदीक्षन्ते बहवो जीवजीवकाः ॥ ८३॥

[1]हरितारुणवर्णानां शाद्वलानां समन्ततः ।
सारसाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि ॥ ८४॥

वदन्ति मधुरा वाचस् सर्वभूतमनोनुगाः ।
भृङ्गराजोपचक्राश्च लोहपृष्ठाश्च पत्रिणः ॥ ८५॥

चतुर्विषाणाः पद्माङ्काः कुञ्जरास्सकरेणवः ।
एते वैडूर्यवर्णाभं क्षोभयन्ति महत् सरः ॥ ८६॥

बहुतालसमुत्सेधाश् शैलशृङ्गात् परिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्त्युत ॥ ८७॥

भास्कराभप्रभा भीमाश् शारदाभ्रघनोपमाः ।
शोभयन्ति महाशैलं नानारजतधातवः ॥ ८८॥

क्वचिदञ्जनवर्णाभाः क्वचित् काञ्चनसन्निभाः ।
धातवो हरितालस्य क्वचिद्धिङ्गुलकप्रभाः ॥ ८९॥

---

1. ख—इतो दशार्धानि न सन्ति

मनश्शिलागुहाश्चैव संध्याभ्रशिखरोपमाः ।
शशलोहितवर्णाभाः कचिद्गैरिकसप्रभाः ॥ ९०॥
सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः ।
एते बहुविधाश्शैलं शोभयन्ति महाप्रभम् ॥ ९१॥
गन्धर्वास्सह कान्ताभिर् यथेष्टं भीमविक्रमाः ।
दृश्यन्ते शैलशृङ्गेषु पार्थ किम्पुरुषैस्सह ॥ ९२॥
गीतानां करतालानां तथा साम्नां च निस्स्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ९३॥
महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभाम् ;
कलहंसगणैर्जुष्टाम् ऋषिकिन्नरसेविताम् ॥ ९४॥
[1]धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः ।
गन्धर्वैरप्सरोभिश्च काननैश्च मनोरमैः ॥ ९५॥
व्यालैश्च विविधाकारैश् शतशीर्षैस्समन्ततः ।
उपेतं पश्य कौन्तेय शैलराजमरिन्दम ॥ ९६॥

वैशम्पायनः—

ते प्रीतमनसस्सर्वे प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन् पर्वतेन्द्रस्य दर्शनेन परन्तपाः ॥ ९७॥
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।

1. ख—इदमर्धं नास्ति

आर्ष्टिषेणस्य राजर्षेर् आश्रमं ददृशुस्तदा ॥ ९८॥

ततस्तं तीव्रतपसं कृशं धमनिसन्ततम् ।
पारगं सर्वविद्यानाम् आर्ष्टिषेणमुपागमन् ॥ ९९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ९९॥ श्लोकाः ]

---

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

---

आर्ष्टिषेणेन राजर्षिणा युधिष्ठिरं प्रति अर्जुनागमनपर्यन्तं स्वाश्रम एव निवासचोदना ॥

---

वैशम्पायनः—

युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषम् ।
अभ्यवादयत प्रीतश् शिरसा नाम कीर्तयन् ॥ १

ततः कृष्णा च भीमश्च यमौ चापि तपस्विनौ ।
शिरोभिः प्राप्य राजर्षिं प्रणिपत्योपतस्थिरे ॥ २

तथैव धौम्यो धर्मज्ञः पाण्डवानां पुरोहितः ।
यथान्यायमुपागम्य तमृषिं संशितव्रतम् ॥ ३

अनुजानन् स धर्मज्ञो मुनिर्दिव्येन चक्षुषा ।

पाण्डोः पुत्रान् कुरुश्रेष्ठान् आस्यतामिति चाब्रवीत् ॥ ४

कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः ।
सह भ्रातृभिरासीनं पर्यपृच्छदनामयम् ॥ ५

आर्ष्टिषेणः—

नानृते कुरुषे भावं कच्चिद्धर्मेषु वर्तसे ।
मातापित्रोश्च ते वृत्तिः कच्चित् पार्थ न सीदति ॥ ६

कच्चित्ते गुरवस्सर्वे वृद्धा वैद्याश्च पूजिताः ।
[1]कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्मसु ॥ ७

सुकृतं प्रति कर्तुं च कच्चित् क्षन्तुं च दुष्कृतम् ।
यथान्यायं कुरुश्रेष्ठ जानासि न च कत्थसे ॥ ८

यथा सम्मानिताः कच्चित् त्वया नन्दन्ति साधवः ।
वनेष्वपि वसन् कच्चिद् धर्ममेवानुवर्तसे ॥ ९

कच्चिद्धौम्यस्त्वदाचारैर् न पार्थ परितप्यते ।
[2]दानधर्मतपश्शौचैर् आर्जवेन तितिक्षया ॥ १०

पितृपैतामहं वृत्तं कच्चित् पार्थानुवर्तसे ।
कच्चिद्राजर्षियातेन पथा गच्छसि पाण्डव ॥ ११

[3]स्वे स्वे किल कुले जाते पुत्रे नप्तरि वा पुनः ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

पितरः पितृलोकस्थाश् शोचन्ति च रमन्ति च ॥ १२
किं त्वस्य दुष्कृतेऽस्माभिस् सम्प्राप्तव्यं भविष्यति ।
किं चास्य सुकृतेऽस्माभिः प्राप्तव्यामपि शोभनम् ॥ १३
पिता माता तथा चाग्निर् गुरुरात्मा च पञ्चमः ।
यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ ॥ १४
अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसम् ।
जुषन्ते पर्वतश्रेष्ठम् ऋषयः पर्वसन्धिषु ॥ १५
कामिनस्सह कान्ताभिः परस्परमनुव्रताः ।
दृश्यन्ते शैलशृङ्गस्था यथा किम्पुरुषा नृप ॥ १६
अरजांसि च वासांसि वसानाः कौशिकानि च ।
दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः ॥ १७
विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः ।
महोरगगणाश्चैव सुपर्णाश्चारणादयः ॥ १८
अस्य चोपरि शैलस्य श्रूयन्ते पर्वसन्धिषु ।
भेरीपणवशङ्खानां मृदङ्गानां च निस्स्वनः ॥ १९
इहस्थैरेव तत् सर्वं श्रोतव्यं भरतर्षभाः ।
न कार्या वः कथञ्चित् स्यात् तत्राभिसरणे मतिः ॥ २०
न चाप्यतः परं गन्तुं शक्यं भरतसत्तमाः ।
विहारस्तत्र देवानाम् अमानुषगतिस्तथा ॥ २१

ईषच्चपलकर्माणं मनुष्यमिह भारत ।
द्विषन्ति सर्वभूतानि ताडयन्ति च पार्थिव ॥ २२

अस्यातिक्रम्य शिखरं शैलस्यास्य युधिष्ठिर ।
गतिः परमसिद्धानां देवर्षीणां प्रकाशते ॥ २३

चापलाद्धि न गन्तव्यं पार्थ यानमतः परम् ।
अयश्शूलादिभिर्घ्नन्ति राक्षसाश्शत्रुसूदन ॥ २४

अप्सरोभिः परिवृतस् समृद्ध्या नरवाहनः ।
इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते ॥ २५

[1]शिखरे तं समासीनम् अधिपं यक्षरक्षसाम् ।
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् ॥ २६

[2]देवदानवसिद्धानां तथा वैश्रवणस्य च ।
गिरेश्शिखरमुद्यानम् इदं भरतसत्तम ॥ २७

उपासीनस्य सततं तुम्बुरोः पर्वसन्धिषु ।
गीतसान्द्रध्वनिस्तात श्रूयते गन्धमादने ॥ २८

एतदेवंविधं चित्रम् इह तात युधिष्ठिर ।
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसन्धिषु ॥ २९

भुञ्जानास्सर्वभोज्यानि रसवन्ति फलानि च ।
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनम ॥ ३०

---

1. अ—अर्धद्वयं नास्ति 2. व—अर्धषट्कं नास्ति

न तात चपलैर्भाव्यम् इह प्राप्तैः कथञ्चन ।
चपलस्सर्वभूतानां द्वेष्यो भवति मानवः ॥ ३१

इहोषित्वा यथाकामं यथाश्रद्धं विहृत्य च ।
ततश्शस्त्रभृतां श्रेष्ठ पृथिवीं पालयिष्यसि ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

## ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

---

कदाचन गरुडपक्षवातानीताद्भुताम्बुजदर्शिन्या द्रौपद्या तादृशबहुपुष्पानयनं तथा दुष्टयक्षराक्षसक्षपणं च प्रार्थितेन भीमेन तदर्थं गन्धमादनशिखरारोहणम् ॥ १ ॥ तथा स्वीयशङ्खध्वनिश्रवणेनाभिद्रुतवतां मणिमदादीनां युद्धे हननम् ॥ २ ॥

---

जनमेजयः—

पाण्डोः पुत्रा महात्मानस् सर्वे दिव्यपराक्रमाः ।
कियन्तं कालमवसन् पर्वते गन्धमादने ॥ १

कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम् ।
[1]वसतां लोकवीराणाम् आसंस्तद्ब्रूहि सत्तम ॥ २

---

1. ख—इदमर्धं नास्ति

विस्तरेण च मे शंस भीमसेनपराक्रमम् ।
यद्यच्चक्रे महाबाहुस् तस्मिन् हैमवते गिरौ ॥ ३

[1]न खल्वासीत् पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम ।
धनदाध्युषिते नित्यं वसतस्तत्र पर्वते ॥ ४

कच्चित् समागमस्तेषाम् आसीद्वैश्रवणेन च ।
[2]तत्र ह्यायाति धनद आर्ष्टिषेणो यथाऽब्रवीत् ॥ ५

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
[3] न हि मे शृण्वतस्तृप्तिर् अस्ति तेषां विचेष्टितम् ॥ ६

वैशम्पायनः—

एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः ।
शासनं सततं चक्रुस् तथैव भरतर्षभाः ॥ ७

भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
[4]शुद्धबाणहतानां च मृगाणां पिशितानि च ॥ ८

मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ।
रसायनसमृद्धानि तत्रोषुस्ते स्म भारताः ॥ ९

तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ।
शृण्वतां लोमशोक्तानि वाक्यानि विविधानि च ॥ १०

---

1. ख—अर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. क—अर्धाष्टकं नास्ति

[1]कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः ।
राक्षसैस्सहितस्सर्वैः पूर्वमेव गतः प्रभो ॥ ११

आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ।
अगच्छन् बहवो मासाः पश्यतां महदद्भुतम् ॥ १२

तत्रैव रममाणैश्च विहरद्भिश्च पाण्डवैः ।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा ॥ १३

आजग्मुः पाण्डवान् द्रष्टुं सिद्धात्मानो यतव्रताः ।
एतैस्सह कथां चक्रुर् दिव्यां भरतसत्तमाः ॥ १४

ततः कतिपयाहस्सु महाह्रदनिवासिनम् ।
ऋद्धिमन्तं महानागं सुपर्णस्सहसाऽहरत् ॥ १५

प्राकम्पत महाशैलः [2]प्रादह्यन्त महाद्रुमाः ।
ददृशुस्सर्वभूतानि पाण्डवाश्च तदद्भुतम् ॥ १६

ततश्शैलोत्तमस्याग्रात् पाण्डवान् प्रति मारुतः ।
अवहत् सर्वमाल्यानि गन्धवन्ति शुभानि च ॥ १७

तत्र पुष्पाणि दिव्यानि सुहृद्भिस्सह पाण्डवाः ।
ददृशुस्सर्वभूतानि द्रौपदी च यशस्विनी ॥ १८

भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।

---

1. घ—अर्धचतुष्टयं नास्ति
2. अ—प्राकम्पन्त

[1]विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् ॥ १९

द्रौपदी—

सुपर्णानिलवेगेन श्वसनेन महाबल ।
पञ्चवर्णानि पात्यन्ते पुष्पाणि च फलानि च ॥ २०

दिव्यवर्णानि दिव्यानि दिव्यगन्धवहानि च ।
[2]मदयन्तीव गन्धेन मनो मे भरतर्षभ ॥ २१

[3]येषां च दर्शनात् स्पर्शात् सौरभ्याच्च तथैव च ।
नश्यतीव मनोदुःखं ममेदं शत्रुतापन ॥ २२

असमैः कुसुमैर्दिव्यैर् दिव्यगन्धवहैश्शुभैः ।
देवतान्यर्चयित्वाऽहम् इच्छेयं सङ्गमं त्वया ॥ २३

इदं तु पुरुषव्याघ्र विशेषेणाम्बुजं शुभम् ।
गन्धसंस्थानसम्पन्नं मम मानसवर्धनम् ॥ २४

प्रत्यक्षं सर्वलोकस्य न ह्यदृश्यत मां प्रति ॥ २४॥

[4]वासुदेवसहायेन वासुदेवप्रियेण च ।
खाण्डवे सत्यसन्धेन भ्रात्रा तव नरेश्वर ॥ २५॥

गन्धर्वोरगरक्षांसि वासवश्च पराजितः ॥ २६

हता माया विनश्योग्रं धनुः प्राप्तं च गाण्डिवम् ।

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. क—अर्धचतुष्टयं नास्ति
4. ख—अर्धचतुष्टयं नास्ति

तवापि सुमहत् तेजो महद्बाहुबलं च ते ॥ २७

अविषह्यमनाधृष्यं शक्रतुल्यबलोपमम् ॥ २७॥

त्वद्बाहुबलवेगेन त्रासितास्सर्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश ॥ २८॥

[1]ततश्शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ।
व्यपेतभयसम्मोहाः पश्यन्तु सुहृदस्तव ॥ २९॥

एवं प्रणिहितं भीम चिरात् प्रभृति मे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता ॥ ३०॥

[2]इच्छामि च नरव्याघ्र पुष्पं प्रत्यक्षमीदृशम् ।
आनीयमानं क्षिप्रं वै त्वया भरतसत्तम ॥ ३१॥

वैशम्पायनः—

ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः ।
नामृष्यत महाबाहुः प्रहारमिव सद्गजः ॥ ३२॥

सिंहर्षभगतिश्श्रीमान् उदारः कनकप्रभः ।
मनस्वी बलवान् दृप्तो मानी शूरश्च पाण्डवः ॥ ३३॥

लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
[3]सिंहदंष्ट्रो वृषस्कन्धस् सालपोत इवोद्गतः ॥ ३४॥

---

1. ख—अर्धद्वयं नास्ति　　2. ख—इदमर्धं नास्ति
3. ख—अर्धद्वयं नास्ति

महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाहनुः ।
रुक्मपृष्ठं धनुः खड्गं तूणी चापि परामृशन् ॥ ३५॥
केसरीव बलोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसम्मोहश् शैलमभ्यपतद्बली ॥ ३६॥
तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम् ।
ददृशुस्सर्वभूतानि पार्थं खड्गधनुर्धरम् ॥ ३७॥
द्रौपद्या वर्धयन् हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसम्मोहश् शैलराजं समाविशत् ॥ ३८॥
न ग्लानिर्न च कातर्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थम् आत्मजं मातरिश्वनः ॥ ३९॥
[1]तदेकायनमासाद्य विषमं भीमदर्शनम् ।
बहुतालोच्छ्रयं शृङ्गम् आरुरोह महाबलः ॥ ४०॥
[2]स किन्नरमहानागमुनिगन्धर्वराक्षसान् ।
[3]हर्षयन् पर्वतस्याग्रम् आरुरोह महाबलः ॥ ४१॥
ततो वैश्रवणावासं ददर्श भरतर्षभः ।
काञ्चनस्फटिकाकारैर् वेश्मभिस्समलङ्कृतम् ॥ ४२॥
ह्लादयन् सर्वभूतानि गन्धमादनसम्भवः ।

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति; घ—अर्धद्वयं नास्ति
3. ख—आरुरोह महाबाहुश् शृङ्गं बहुगुणान्वितम् । [पाठान्तरम्]

सर्वगन्धवहस्तत्र मारुतस्सुखशीतलः ॥ ४३॥

[1]चित्रा विविधवर्णाभाश् चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभनाः ॥ ४४॥

रत्नजालपरिक्षिप्तं चित्रमाल्यधरं शिवम् ।
राक्षसाधिपतेस्स्थानं ददृशे भरतर्षभः ॥ ४५॥

गदाखड्गधनुष्पाणिस् समभित्यक्तजीवितः ।
भीमसेनो महाबाहुस् तस्थौ गिरिरिवाचलः ॥ ४६॥

ततश्शङ्खमुपाध्माय द्विषतां रोमहर्षणम् ।
ज्याघोषं तलशब्दं च कृत्वा भूतान्यमोहयत् ॥ ४७॥

[2]ततः प्रहृष्टरोमाणस् तं शब्दमभिदुद्रुवुः ।
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ॥ ४८॥

गदापरिघनिस्त्रिंशशक्तिशूलपरश्वथाः ।
[3]प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ॥ ४९॥

[4]ततः प्रववृते युद्धं तेषां तस्य च भारत ।
संरब्धानां महाघोषं सिंहानामिव नर्दताम् ॥ ५०॥

तैः प्रमुक्तान् महाकायान् शूलशक्तिपरश्वथान् ।
भल्लैर्भीमः प्रचिच्छेद भीमवेगबलस्तदा ॥ ५१॥

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. अ—नास्तीदमर्धम्

अन्तरिक्षगतानां च भूमिष्ठानां च गर्जताम् ।
शरैर्विव्याध गात्राणि राक्षसानां महाबलः ॥ ५२॥

शोणितस्य ततः पेतुर् घनानामिव भारत ।
गात्रेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ॥ ५३॥

[1]सा लोहितमहावृष्टिर् अभ्यवर्षन्महाचलम् ।
कायेभ्यः प्रच्युता घोरा राक्षसानां समं तदा ॥ ५४॥

गदापरिघपाणीनां रक्षसां कायसम्भवा ॥ ५५

भीमबाहुबलोत्सृष्टैर् बहुधा यक्षरक्षसाम् ।
विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च ॥ ५६

प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ।
ददृशुस्सर्वभूतानि सूर्यमभ्रगणैरिव ॥ ५७

स रश्मिभिरिवादित्यश् शरैर्मर्मविदारणैः ।
सर्वानाच्छेन्महाबाहुर् बलवान् सत्यविक्रमः ॥ ५८

[2]अभितर्जयमानाश्च रुवन्तश्च महारवान् ।
सन्नाहं भीमसेनस्य ददृशुस्सर्वराक्षसाः ॥ ५९

ते हि विक्षतसर्वाङ्गा भीमसेनबलार्दिताः ।
भीममार्तस्वरं चक्रुर् विप्रकीर्णमहायुधाः ॥ ६०

उत्सृज्य ते गदाशूलान् असिशक्तिपरश्वथान् ।

---

1. ख—अर्धद्वयं नास्ति 2. ख—पूर्वमर्धं नास्ति

दक्षिणां दिशमाजग्मुस् त्रासिता स्थिरधन्वना ॥ ६१

तत्र शूलगदापाणिर् व्यूढोरस्को महाभुजः ।
सखा वैश्रवणस्यासीन्मणिमान् नाम राक्षसः ॥ ६२

दर्शयन् स प्रतीकारं पौरुषं च महाबलः ।
स तान् दृष्ट्वा पराघृत्तान् स्मयमान इवाब्रवीत् ॥ ६३

राक्षसः—

एकेन बहवस्सङ्ख्ये मानुषेण पराजिताः ।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम् ॥ ६४

वैशम्पायनः—

एवमाभाष्य तान् सर्वान् अभ्यवर्तत राक्षसः ।
शक्तिशूलगदापाणिर् अभ्यधावच्च पाण्डवम् ॥ ६५

तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनस्समार्पयत् ॥ ६६

मणिमानपि सङ्क्रुद्धः प्रगृह्य महतीं गदाम् ।
प्राहिणोद्भीमसेनाय परिक्षिप्य महाबलः ॥ ६७

विद्युद्रूपां महाघोराम् आकाशे महतीं गदाम् ।
शरैर्बहुभिरभ्यघ्नत् भीमसेनश्शिलाशितैः ॥ ६८

प्रत्यहन्यन्त ते सर्वे गदामासाद्य सायकाः ।
न वेगं धारयामासुर् गदावेगस्य तस्य वै ॥ ६९

गदायुद्धसमाचारान् युध्यमानस्स वीर्यवान् ।
व्यथयामास तत्रस्थः प्रहारैर्भीमविक्रमः ॥ ७०

ततश्शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ।
तस्मिन्नेवान्तरे तस्मै प्रचिक्षेप स राक्षसः ॥ ७१

सा भुजं भीमसङ्काशं भित्त्वा भीमस्य दक्षिणम् ।
साग्निज्वाला महारौद्रा पपात सहसा भुवि ॥ ७२

सोऽतिविद्धो महेष्वासश् शक्त्याऽमितपराक्रमः ।
गदां जग्राह कौरव्यो गदायुद्धविशारदः ॥ ७३

तां प्रगृह्योन्नदन् भीमश् [1]शैक्यां सर्वायसीं गदाम् ।
तरसा चाभिदुद्राव मणिमन्तं महाबलम् ॥ ७४

दीप्यमानं महाशूलं प्रगृह्य मणिमानपि ।
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ७५

हत्वा शूलं गदाग्रेण गदायुद्धविभागवित् ।
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ॥ ७६

सोऽन्तरिक्षमभिप्लुत्य विधूय सहसा गदाम् ।
प्रचिक्षेप महाबाहुर् निनदन् रणमूर्धनि ॥ ७७

सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा ।
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ७८

---

1. ख—सर्वशैक्यायसीं

तं राक्षसं भीमबलं भीमसेनबलाहतम् ।
ददृशुस्सर्वभूतानि सिंहेनेव महाद्विपम् ॥ ७९

तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः ।
भीममार्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ॥ ८०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ८० श्लोकाः]

---

## ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

भीमादर्शनेन दुर्मनायमानैर्युधिष्ठिरादिभिः पर्वताग्रारोहणेन भीमसमीपगमनम् ॥ १ ॥ भीमहतावशिष्टैर्निवेदितमणिमदादिवधेन कुबेरेण युयुत्सया भीमं प्रत्यागमनम् ॥ २ ॥ तत्र युधिष्ठिरादिदर्शनेन शान्तमन्युना तेन तान् प्रति स्वस्यागस्त्यशापावाप्तिकथनपूर्वकं भीमसेनकार्यानुमोदनम् ॥ ३ ॥

---

वैशम्पायनः—

श्रुत्वा बहुविधैश्शब्दैर् नाद्यमानां गिरेर्गुहाम् ।
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि ॥ १

धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा ।
भीमसेनमपश्यन्तस् सर्वे विमनसोऽभवन् ॥ २

द्रौपदीमार्ष्टिषेणाय प्रदाय तु महारथाः ।

सहितास्सायुधाश्शूराश् शैलमारुरुहुस्तदा ॥ ३
ततस्सम्प्राप्य शैलाग्रं वीक्षमाणा महारथाः ।
ददृशुस्ते महेष्वासा भीमसेनमरिन्दमम् ॥ ४

पुरतश्च महाकायान् गतसत्त्वांश्च राक्षसान् ।
महाबलान् महेष्वासान् भीमसेनेन पातितान् ॥ ५

शुशुभे स महाबाहुर् गदाखड्गधनुर्धरः ।
निहत्य समरे सर्वान् दानवान् मघवानिव ॥ ६

ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम् ।
तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम् ॥ ७
[1]तैश्चतुर्भिर्महेष्वासैर् गिरिश्शृङ्गमशोभत ।
लोकपालैर्महाभागैर् दिवं देववरैरिव ॥ ८
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान् ।
भ्राता भ्रातरमासीनम् अथोवाच युधिष्ठिरः ॥ ९

युधिष्ठिरः—

साहसाद्यदि वा मोहाद् भीम पापमिदं कृतम् ।
नैतत् ते सदृशं वीर मुनेरिव मृषा वचः ॥ १०
[2]राजद्विष्टं न कर्तव्यम् इति धर्मविदो विदुः ।
त्रिदशानामिदं द्विष्टं भीमसेन कृतं त्वया ॥ ११

1. ग—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

अर्थधर्मावनादृत्य यः पापे कुरुते मनः ।
कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम् ॥ १२

साहसं बत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ १३

वैशम्पायनः—

एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमुत्तमम् ।
[1]भीमसेनं महाबाहुम् अप्रधृष्यपराक्रमम् ॥ १४

अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
विरराम महातेजास् तमेवार्थं विचिन्तयन् ॥ १५

ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः ।
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति ॥ १६

ते जवेन महावेगाः प्राप्य वैश्रवणालयम् ।
भीममार्तस्वरं चक्रुर् भीमसेनभयार्दिताः ॥ १७

न्यस्तशस्त्रायुधाश्श्रान्ताश् शोणिताक्तपरिच्छदाः ।
प्रकीर्णमूर्धजा राजन् यक्षाधिपतिमब्रुवन् ॥ १८

राक्षसाः—

गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः ।
[2]राक्षसा निहतास्सर्वे तव देवपुरस्सराः ॥ १९

प्रमृद्य तरसा शैलं मानुषेण धनेश्वर ।

---

1. ख—इदमर्धं नास्ति
2. अ—अर्धद्वयं नास्ति

एकेन निहतास्सङ्ख्ये हताः क्रोधवशा गणाः ॥ २०
प्रवरा राक्षसेन्द्राणां यक्षाणां च धनाधिप ।
शेरते निहता देव गतसत्त्वाः परासवः ॥ २१
भग्नश्शैलो वयं भग्ना मणिमांस्ते सखा हतः ।
मानुषेण कृतं कर्म विधत्स्व यदनन्तरम् ॥ २२

वैशम्पायनः—

स तच्छ्रुत्वा तु सङ्क्रुद्धस् सर्वयक्षगणाधिपः ।
[1]कोपसंरक्तनयनः कथमित्यब्रवीद्वचः ॥ २३
द्वितीयमपराध्यन्तं भीमं श्रुत्वा नराधिप ।
चुक्रोध यक्षाधिपतिर् युध्यतामिति चाब्रवीत् ॥ २४
अथाभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ।
हयैस्संयोजयामासुर् गन्धर्वैरुत्तमं रथम् ॥ २५
तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः ।
तेजोबलजवोपेता नानारत्नविभूषिताः ॥ २६
शोभमाना रथे युक्तास् तरिष्यन्त इवाशुगाः ॥ २६॥
ततस्ते तु महायक्षाः क्रुद्धं दृष्ट्वा धनेश्वरम् ।
हर्षयामासुरन्योन्यम् इङ्गितैर्विजयावहैः ॥ २७॥
स तमास्थाय भगवान् राजराजो महारथम् ।
प्रययौ देवगन्धर्वैस् स्तूयमानो महाद्युतिः ॥ २८॥

1. क—अर्धचतुष्टयं नास्ति; ख—अर्धपञ्चकं नास्ति

तं प्रयान्तं महात्मानं सर्वे यक्षा नराधिप ।
अनुजग्मुर्महात्मानं धनदं घोरदर्शनाः ॥ २९॥

[1]रक्ताक्षा हेमसङ्काशा महाकाया महाबलाः ।
सायुधा बद्धनिस्त्रिंशा यक्षा बहुशतायुधाः ॥ ३०॥

ते जवेन महावेगाः प्लवमाना विहायसम् ।
गन्धमादनमाजग्मुः प्रकर्षन्त इवाम्बरम् ॥ ३१॥

तत् केसरिमहाजालं धनाधिपतिपालितम् ।
रम्यं चैव गिरेश्शृङ्गम् आसेदुर्यत्र पाण्डवाः ॥ ३२॥

कुबेरं च महात्मानं यक्षरक्षोगणावृतम् ।
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् ॥ ३३॥

कुबेरस्तु महासत्त्वान् पाण्डोः पुत्रान् महारथान् ।
आत्तकार्मुकनिस्त्रिंशान् दृष्ट्वा प्रीतोऽभवत् तदा ॥ ३४॥

[2]सर्वे चेमे नरव्याघ्राः पुरन्दरसमौजसः ।
देवकार्यं करिष्यन्ति हृदयेन तुतोष ह ॥ ३५॥

[3]ते पक्षिण इवोत्पेतुर् गिरिश्शृङ्गं महाजवाः ।
तस्थुस्तेषां सकाशे वै धनेश्वरपुरस्सराः ॥ ३६॥

ततस्संहृष्टमनसः पाण्डवान् प्रति भारत ।

---

1. ख—अर्धत्रयं नास्ति　　2. ख—इदमर्धं नास्ति
3. घ—अर्धत्रयं नास्ति

समीक्ष्य यक्षगन्धर्वा निर्विकारा व्यवस्थिताः ॥ ३७॥
पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ।
नकुलस्सहदेवश्च धर्मपुत्रश्च धर्मवित् ॥ ३८॥
अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयस्सर्वे परिवार्य धनेश्वरम् ॥ ३९॥
शय्यासनयुतं श्रीमत् पुष्पकं विश्वकर्मणा ।
विहितं चित्रपर्यन्तम् आतिष्ठत धनाधिपः ॥ ४०॥
तमासीनं महाकायाश् शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः ॥ ४१॥
शतशश्चापि गन्धर्वास् तथैवाप्सरसां गणाः ।
परिवार्योपतिष्ठन्ति यथा देवाश्शतक्रतुम् ॥ ४२॥
काञ्चनीं शिरसा बिभ्रद् भीमसेनस्स्रजं शिवाम् ।
बाणखड्गधनुष्पाणिर् उदैक्षत धनाधिपम् ॥ ४३॥
न भीर्भीमस्य न ग्लानिर् विक्षतस्यापि राक्षसैः ।
आसीत् तस्यामवस्थायां कुबेरमपि पश्यतः ॥ ४४॥
आददानं शितान् बाणान् योद्धुकाममवस्थितम् ।
दृष्ट्वा भीमं धर्मसुतम् अब्रवीन्नरवाहनः ॥ ४५॥

कुबेरः—

विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम् ।

निर्भयश्चापि शैलाग्रे वस त्वं सह बन्धुभिः ॥ ४६॥
न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ॥ ४७॥
व्रीडा चात्र न कर्तव्या साहसं यदिदं कृतम् ।
दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम् ॥ ४८॥
न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ ।
कर्मणाऽनेन भीमस्य मम तुष्टिरभूत् पुरा ॥ ४९॥

वैशम्पायनः—

स एवमुक्त्वा राजानं भीमसेनमभाषत ॥ ५०

कुबेरः—

नैतन्मनसि मे तात वर्तते कुरुसत्तम ।
यदिदं साहसं भीम कृष्णार्थे कृतवानसि ॥ ५१
मामनादृत्य देवांश्च विनाशयति राक्षसान् ।
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ॥ ५२
शापाच्चाहं विमुक्तोऽद्य घोरादस्माद्वृकोदर ॥ ५२॥
अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित् तस्यैषा निष्कृतिर्ध्रुवम् ॥ ५३॥
दृष्टो धर्मे परिक्लेशः पुरा पाण्डवनन्दन ।
तवात्र नापराधोऽस्ति न किञ्चिदपि शत्रुहन् ॥ ५४॥

युधिष्ठिरः—

[1]कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव यथैतच्छापकारणम् ॥ ५५॥

[2]इदं चाश्चर्यभूतं मे यत् क्रोधात्तस्य धीमतः ।
तदैव त्वं न निर्दग्धस् सबलस्सपदानुगः ॥ ५६॥

कुबेरः—

देवतानामभून्मन्त्रः कुशावत्यां नरेश्वर ॥ ५७

वृतस्तत्राहमगमं महापद्मशतैर्वृतः ।
यक्षाणां घोररूपाणां विविधायुधधारिणाम् ॥ ५८

अध्वन्यहमथापश्यम् अगस्त्यमृषिसत्तमम् ॥ ५८॥

[3]उग्रं तपस्तपस्यन्तं नानाद्रुमविभूषितम् ।
यमुनातीरमाश्रित्य पुण्यं देवर्षिसङ्कुलम् ॥ ५९॥

अथोर्ध्वबाहुं दृष्ट्वा तं अगस्त्यमृषिसत्तमम् ।
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ॥ ६०॥

राक्षसाधिपतिश्श्रीमान् मणिमान् नाम मे सखा ।
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च भारत ॥ ६१॥

न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ।

---

1. क—अर्धचतुष्टयं नास्ति; घ—अर्धत्रयं नास्ति
2. ख—अर्धद्वयं नास्ति
3. ख—इदमर्धं नास्ति; घ—अर्धत्रयं नास्ति

ततः क्रुद्धस्स भगवानुवाचेदं तपोधनः ॥ ६२॥

अगस्त्यः—

मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ।
धर्षणं कृतवानेतत् पश्यतस्ते धनेश्वर ॥ ६३॥

तस्मात् सहैभिस्सैन्यैस्तैर् वधं प्राप्स्यति मानुषात् ।
त्वं चाप्येभिर्हतैस्सैन्यैः क्लेशं प्राप्नुहि दुर्मते ॥ ६४॥

तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे ॥ ६५

सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम् ।
न शापं प्राप्यते घोरं गच्छ तेऽऽज्ञां करिष्यति ॥ ६६

कुबेरः—

एष शापो मया प्राप्तः प्राक् तस्मादृषिसत्तमात् ।
स भीमेन महाराज भ्रात्रा तव विमोक्षितः ॥ ६७

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ६७ श्लोकाः ]

---

Parvan, according to both Recensions is 11664.

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

कुबेरेण युधिष्ठिरानुशासनपूर्वकं स्वभवनगमनम् ॥ १ ॥ कुबेराज्ञया राक्षसपूजितैर्युधिष्ठिरादिभिस्तद्रात्रौ तद्गृहे सुखवासः ॥ २ ॥

धनदः—

युधिष्ठिर धृतिर्दाक्ष्यं देशकालपराक्रमाः ।
लोकतन्त्रविभागानाम् एष पञ्चविधो विधिः ॥ १

धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविभागज्ञा नराः कृतयुगेऽभवन् ॥ २

धृतिमान् देशकालज्ञस् सर्वधर्मविभागवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै ॥ ३

य एवं वर्तते पार्थ पुरुषस्सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥ ४

[1]देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
सम्प्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिस्सह ॥ ५

पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह च नश्यति ॥ ६

[2]अकालज्ञस्सुदुर्मेधाः कार्याणामविभागवित् ।

---

1. ख—अर्धद्वयं नास्ति 2. अ-क-ग—अर्धद्वयं नास्ति

वृथाचारसमारम्भः प्रेत्य चेह विनश्यति ॥ ७

साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वेषामर्थलिप्सूनां पापो भवति [1]निश्चयः ॥ ८

अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः ।
निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ ॥ ९

आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमम् ।
तमिस्रां प्रथमां तत्र वीतशोकभयो वस ॥ १०

अलकां सह गन्धर्वैर् यक्षैश्च सह राक्षसैः ।
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः ॥ ११
रक्षन्तु त्वां महाबाहो सहितं द्विजसत्तमैः ॥ ११॥

[2]साहसेषु च संतिष्ठंस् त्वया शैले वृकोदरः ।
वार्यतां साध्वयं राजंस् त्वया धर्मभृतां वर ॥ १२॥

इतः परं च द्रक्ष्यन्ति राजेन्द्र वनगोचराः ।
[3]उपस्थास्यन्ति वो राजन् रक्षिष्यन्ते च वस्सदा ॥ १३॥

तथैव चान्नपानानि स्वादूनि च बहूनि च ।
उपस्थास्यन्ति मत्प्रेष्यास् सदा वः पुरुषर्षभाः ॥ १४॥

यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः ।

---

1. क-ख-ब—नित्यशः
2. ख—इदमर्धं नास्ति
3. अ—अर्धद्वयं नास्ति

धर्मस्य त्वं यथा तात योगोत्पन्नो निजस्सुतः ॥ १५॥
आत्मजावात्मसम्पन्नौ यमौ चोभौ यथाऽश्विनोः ।
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर ॥ १६॥
अर्थतत्त्वविभागज्ञस् सर्वधर्मविशेषवित् ।
भीमसेनादवरजः फल्गुनः कुशलो दिवि ॥ १७॥
याः काश्चन मता लोके रक्ष्याः परमसम्पदः ।
जन्मप्रभृति तास्सर्वास् स्थितास्तात धनञ्जये ॥ १८॥
[1]दमो दानं बलं बुद्धिर् ह्रीर्धृतिस्तेज उत्तमम् ।
एतान्यपि महासत्त्वे स्थितान्यमिततेजसि ॥ १९॥
न मोहात् कुरुते जिष्णुः कर्म पाण्डव गर्हितम् ।
न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु ॥ २०॥
स देवपितृगन्धर्वैः कुरूणां कीर्तिवर्धनः ।
आनीतः कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥ २१॥
योऽसौ सर्वान् महीपालान् धर्मेण वशमानयत् ॥ २२
स शन्तनुर्महातेजाः पितुस्तव पितामहः ।
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना ॥ २३
[2]सम्यक् चासौ महावीर्यः कुलधुर्य इव स्थितः ॥ २३॥
पितृन् देवांस्तथाऽऽ[3]दित्यान् पूजयित्वा महायशाः ।

1. ख—अर्धद्वयं नास्ति 2. —अर्धद्वयं नास्ति 3. क-घ—विप्रान्

सप्त मुख्यान् महामेधान् आहरद्यमुनां प्रति ॥ २४॥

अधिराजस्स राजंस्त्वां शन्तनुः प्रपितामहः ।
स्वर्गजित् स्वर्गलोकस्थः कुशलं परिपृच्छति ॥ २५॥

वैशम्पायनः—

ततश्शक्तिं गदां खङ्गं धनुश्च भरतर्षभः ।
प्राध्वं कृत्वा नमश्चक्रे कुबेराय वृकोदरः ॥ २६॥

ततोऽब्रवीद्धनाध्यक्षश् शरण्यश्शरणागतम् ॥ २७

धनदः—

[1]मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः ।
विभयस्ताप शैलाग्रे वसानस्सह बन्धुभिः ॥ २८

सुपर्णपितृदेवानां सततं मानकृद्भव ।
ऋजुं पश्यत मा वक्रं सत्यं वदत माऽनृतम् ॥ २९

दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ।
स्वेषु वेश्मसु सर्वेषु वसतामित्रतापनाः ॥ ३०

कामानभिहरिष्यन्ति यक्षा वो भरतर्षभाः ॥ ३०॥

शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः ।
साक्षान्मघवतोत्सृष्टस् त्वां प्राप्स्यति धनञ्जयः ॥ ३१॥

वैशम्पायनः—

एवमुत्तमकर्माणम् अनुशास्य युधिष्ठिरम् ।

---

1. ख—इदमर्धं नास्ति

अस्तं गिरिमिवादित्यः प्रययौ गुह्यकाधिपः ॥ ३२॥
तं परिस्तोमसङ्कीर्णैर् नानारत्नविभूषितैः ।
यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३३॥
[1]पक्षिणामिव निर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानाम् ऐरावतपथे[2]यिनाम् ॥ ३४॥
ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः ।
प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ॥ ३५॥
ततस्तानि शरीराणि गतसत्त्वानि रक्षसाम् ।
अपाकृष्यन्त शैलाग्राद् धनाधिपतिशासनात् ॥ ३६॥
तेषां हि शापकालोऽसौ कृतोऽगस्त्येन धीमता ।
समरे निहतास्तस्मात् सर्वे मणिमता सह ॥ ३७॥
पाण्डवास्सुमहात्मानस् तेषु वेश्मसु तां क्षपाम् ।
सुखमूषुर्गतोद्वेगाः पूजितास्सह राक्षसैः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति  2. घ—यताम्

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

[आर्ष्टिषेणेन युधिष्ठिरं प्रति मेरुमन्दरवर्णनपूर्वकं सप्तर्षिदक्षादिप्रजापति-चतुर्मुखसदनवर्णनं कृत्वा प्रकृतेः परस्ताद्वर्तमानस्य श्रीवैकुण्ठस्य च वर्णन-पूर्वकं चन्द्रसूर्यादिगतिप्रकारनिरूपणम् ॥

वैशम्पायनः—

ततस्सूर्योदये धौम्यः पाञ्चालीसहितांश्च तान् ।
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत ॥ १

तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव हि ।
ततः प्राञ्जलयस्सर्वे ब्राह्मणांस्तानपूजयन् ॥ २

आर्ष्टिषेणः परिष्वज्य पुत्रवद्भरतर्षभ ।
धर्मराजं स्पृशन् पाणौ पाणिना स महातपाः ॥ ३

प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ॥ ३॥

आर्ष्टिषेणः—

असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति ।
शैलराजो महाराज मन्दरोऽभिविराजयन् ॥ ४॥

इन्द्रवैश्रवणोपेतां दिशं पाण्डव रक्षति ॥ ५

पर्वतैश्च वनान्तैश्च काननैश्चोपशोभितम् ।
एतमाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च ॥ ६

ऋषयस्सर्वधर्मज्ञास् सर्वे तात मनीषिणः ॥ ६॥

अतश्चोद्यन्तमादित्यम् उपतिष्ठन्ति वै प्रजाः ।
ऋषयश्चैव धर्मज्ञास् सिद्धास्साध्याश्च देवताः ॥ ७॥

यमस्तु राजा धर्मात्मा सर्वप्राणभृतां प्रभुः ।
प्रेतसत्त्वगतीमेतां दक्षिणामाश्रितो दिशम् ॥ ८॥

एतत् संयमनं पुण्यम् अतीवाद्भुतदर्शनम् ।
प्रेतराजस्य भवनम् ऋद्ध्या परमया युतम् ॥ ९॥

यं प्राप्य सविता राजन् सत्येन प्रतितिष्ठति ।
अस्तं पर्वतराजानम् एतमाहुर्मनीषिणः ॥ १०॥

एनं पर्वतराजानं समुद्रं च महोदधिम् ।
आवसन् वरुणो राजा भूतानि परिरक्षति ॥ ११॥

उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः ॥ १२॥

यस्मिन् ब्राह्मणसङ्घैश्च तिष्ठते वै प्रजापतिः ।
भूतात्मा विसृजन् [1]सर्गं यत् किञ्चिज्जङ्गमागमम् ॥ १३॥

यानाहुर्ब्रह्मणः पुत्रान् मानसान् दक्षसत्तमान् ।
तेषामपि महामेरुस् स्थानं शिव[2]मनामयम् ॥ १४॥

अत्रैव प्रतितिष्ठन्ति पुनरत्रोदयन्ति च ।
सप्त देवर्षयस्तात वसिष्ठप्रमुखास्तदा ॥ १५॥

---

1. क-ख-घ—विश्वं 2. क-ख-घ—मनुत्तमम्

देशं विरजसं पश्य मेरोश्शिखरमुत्तमम् ।
आत्मतृप्तैर्यतैर्यत्र देवैस्सह पितामहः ॥ १६॥

यमाहुस्सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् ।
अनादिनिधनं देवं प्रभुम् नारायणं परम् ॥ १७॥

ब्रह्मणस्सदनात् तस्य परं स्थानं प्रकाशते ।
देवाश्च यत्नात् पश्यन्ति सर्वतेजोमयं शिवम् ॥ १८॥

अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः ॥ १९॥

प्राच्यां नारायणस्थानं मेरावतिविराजते ॥ २०

[1]यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ।
भासयन् सर्वभूतानि सुश्रियाऽतिविराजते ॥ २१

नात्र ब्रह्मर्षयस्तात नात्र देवर्षयस्तदा ।
प्राप्नुवन्ति गतिं ह्येनां यतीनां भावितात्मनाम् ॥ २२

नात्र ज्योतींषि सर्वाणि प्राप्य भासन्ति भारत ।
स्वयंप्रभुरदीनात्मा तत्रैवाभिविराजते ॥ २३

यतयस्तत्र गच्छन्ति देवं नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिश्शुभैः ॥ २४

योगसिद्धा महात्मानस् तमोमोहविवर्जिताः ।

1. अ-क-व—षडर्धानि न सन्ति

तत्र गत्वा पुनर्नेमं लोकमायन्ति भारत ॥ २५

स्वयम्भुवं महात्मानं देवदेवं सनातनम् ॥ २५॥

स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत् प्रणमात्र युधिष्ठिर ॥ २६॥

एतं ज्योतींषि सर्वाणि प्रकर्षन् भगवानपि ।
कुरुते हि तपः कर्म आदित्यो हि प्रदक्षिणम् ॥ २७॥

अस्तं प्राप्य ततस्सन्ध्याम् अतिक्रम्य दिवाकरः ।
उदीचीं भजते काष्ठां बहुधा पर्वसन्धिषु ॥ २८॥

सुमेरुमनुवृत्तस्स उपगच्छति पाण्डव ।
प्राङ्मुखस्सविता देवस् सर्वभूतहिते रतः ॥ २९॥

[1]स सम्यग्विभजन् कालान् बहुधा पर्वसन्धिषु ।
[2]तथैव भगवान् सोमो [3]नक्षत्रैस्सह गच्छति ॥ ३०॥

[4]एवमेष परिक्रम्य महामेरुमतन्द्रितः ।
सोमश्च विभजन् कालं बहुधा पर्वसन्धिषु ॥ ३१॥

[5]भासयन् सर्वभूतानि पुनर्गच्छति सागरम् ॥ ३२

तथा तमिस्रहा देवो मयूखैर्भासयन् जगत् ।
मार्गमेतमसम्बाधम् आदित्यः परिवर्तते ॥ ३३

---

1. अ-क—नास्तीदमर्धम् 2. ख—इदमर्धं नास्ति
3. अ-क—मयूखैर्भासयञ्जगत् 4. अ-क-ख—अर्धद्वयं नास्ति
5. अ-क—अर्धद्वयं नास्ति

सिसृक्षुश्शिशिरं ह्येष दक्षिणां भजते दिशम् ।
ततस्सर्वाणि भूतानि कालश्शिशिरमृच्छति ॥ ३४

स्थावराणां च भूतानां जङ्गमानां च तेजसा ।
तेजांसि समुपादत्ते निवृत्तस्स विभावसुः ॥ ३५

ततस्स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान् ।
प्राणिभिस्सततं स्वप्नान् अभीक्ष्णं पर्युपासते ॥ ३६

एवमेतमनिर्देश्यं मार्गमावृत्य भानुमान् ।
पुनस्सृजति वर्षाणि भगवान् भासयन् प्रजाः ॥ ३७

वृष्टिमारुतसम्पातैस् सुखैस्स्थावरजङ्गमान् ।
वर्धयन् सुमहातेजाः पुनः प्रतिनिवर्तते ॥ ३८

एवमेष चरन् पार्थ कालचक्रमतन्द्रितः ।
प्रकर्षन् सर्वभूतानि सविता परिवर्तते ॥ ३९

संतता गतिरेतस्य नैष तिष्ठति पाण्डव ।
आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ४०

विभजन् सर्वभूतानाम् आयुः कर्म च भारत ।
अहोरात्रं कलाः काष्ठास् सृजत्येष सदा विभुः ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ अस्मिन्नध्याये ४१ श्लोकाः ]

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

इन्द्रादधिगतास्त्रेणार्जुनेन स्वर्गाद्गन्धमादननिवासिनो युधिष्ठिरादीन् प्रत्यागमनम् ॥ १ ॥ अर्जुनेन युधिष्ठिरादीन् प्रति संक्षेपेण स्वकीयस्वर्गनिवासप्रकारकथनम् ॥ २ ॥

वैशम्पायनः—

तस्मिन् नगेन्द्रे वसतां तु तेषां
महात्मनां सद्व्रतमाश्रितानाम् ।
रतिः प्रमोदश्च बभूव राज-
न्नाकाङ्क्षतां दर्शनमर्जुनस्य ॥ १

तान् वीर्ययुक्तान् सुविशुद्धसत्त्वांस्
तेजस्विनस्सत्यधृतां वरिष्ठान् ।
सम्प्रीयमाणा बहुधाऽभिजग्मुर्
गन्धर्वसङ्घाश्च महर्षयश्च ॥ २

तं पादपैः पुष्पफलैरुपेतं
नगोत्तमं प्राप्य महारथानाम् ।
मनःप्रसादः [1]परमो बभूव
यथा दिवं प्राप्य मरुद्गणानाम् ॥ ३

मयूरहंसस्वननादितानि
पुष्पोपकीर्णानि महाचलस्य ।

1. क-ख-ब—प्रथमो

शृङ्गाणि सानूनि च पश्यमाना
गिरेः परं हर्षमवाप्य तस्थुः ॥ ४

साक्षात् कुबेरेण कृताश्च तस्मिन्
नगोत्तमे संवृतकूटगुल्माः ।
कारण्डकादम्बकहंसजुष्टाः
पद्माकराः पुष्करिणीरपश्यन् ॥ ५

[1]क्रीडाप्रदेशांश्च समृद्धरूपान्
सवेदिकांस्ते न्यवसन् सुवेशान् ।
मणिप्रवीरान् सुमनोहरांश्च
यथा भवेयुर्धनदस्य राज्ञः ॥ ६

अनेकवर्णैश्च सुगन्धिभिश्च
महाद्रुमैस्संततमभ्रलेलिहैः ।
तपःप्रभावात् सततं चरन्तश्
शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ७

स्वतेजसा तस्य नगोत्तमस्य
महौषधीनां च तथा प्रभावात् ।
विभक्तरूपस्सविता बभूव
निशामुखं प्राप्य नरर्षभाणाम् ॥ ८

1. ख—अयं श्लोको नास्ति

[1]समास्थितस्स्थावरजङ्गमानां
विभावसुर्भावयिता हरीशः ।
तस्योदयं चास्तमयं च वीरास्
तत्राश्रितास्ते ददृशुर्नृसिंहाः ॥ ९

[2]रवेस्तमिस्रागमनिर्गमं च
तथोदयं चास्तमयं च शूराः ।
समावृताः प्रेक्ष्य तमोनुदस्य
गभस्तिजालैः प्रदिशो दिशश्च ॥ १०

स्वाध्यायवन्तस्सततक्रियाश्च
धर्मप्रधानाश्च शुचिव्रताश्च ।
सत्येरितास्तस्य महारथस्य
सत्यव्रतस्यागमनप्रतीक्षाः ॥ ११

इहैव हर्षोऽस्तु समागतानां
क्षिप्रं कृतास्त्रेण धनञ्जयेन ।
इति ब्रुवन्तः परमाशिषस्ते
पार्थास्तपोयोगपरा बभूवुः ॥ १२

दृष्ट्वा विचित्राणि गिरौ वनानि
किरीटिनं चिन्तयतामभीक्ष्णम् ।

1. ख—इदमर्धं नास्ति 2. ख—अयं श्लोको नास्ति

बभूव रात्रिर्दिवसश्च तेषां
　संवत्सरेणैव समानरूपः ॥ १३

यदैव धौम्यानुमते महात्मा
　कृत्वा जटां प्रव्रजितस्स जिष्णुः ।
तदैव तेषां न बभूव हर्षः
　कुतो रतिस्तद्गतमानसानाम् ॥ १४

[1]भ्रातुर्नियोगात् स युधिष्ठिरस्य
　यदा वनान्मत्तगजेन्द्रगामी ।
स काम्यकात् प्रव्रजितस्तदैव
　पार्थास्तदा शोकपरा बभूवुः ॥ १५

तथा तु तं चिन्तयतां सिताश्वम्
　अस्त्रार्थिनं वासवमभ्युपेतम् ।
कालस्स कृच्छ्रेण महानतीतस्
　तस्मिन् नगे भारत भारतानाम् ॥ १६

ततः कदाचिद्धरिसम्प्रयुक्तं
　महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य नरर्षभाणां
　हर्षोऽर्जुनं चिन्तयतां बभूव ॥ १७

---

1. क-ब—नास्त्ययं श्लोकः

स दीप्यमानस्सहसाऽन्तरिक्षं
प्रकाशयन् मातलिसङ्गृहीतः ।
बभौ महोल्केव घनान्तरस्था
शिखेव चाग्नेर्ज्वलिता विधूमा ॥ १८
तमास्थितस्संददृशे किरीटी
स्रग्वी नवान्याभरणानि बिभ्रत् ।
धनञ्जयो वज्रधरप्रभावश्
श्रिया ज्वलन् पर्वतमाजगाम ॥ १९
स शैलमासाद्य किरीटमाली
महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्वम्
अजातशत्रोस्तदनन्तरं च ॥ २०
वृकोदरस्यापि ववन्द पादौ
माद्रीसुताभ्यामभिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां
प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ॥ २१
बभूव तेषां परमः प्रहर्षस्
तेनाप्रमेयेण समेत्य तत्र ।
स चापि तं प्रेक्ष्य किरीटमाली
ननन्द राजानमभिप्रशंसन् ॥ २२

[1]यमास्थितस्सप्त जघान पूगान्
दितेस्सुतानां नमुचेर्निहन्ता ।
तमिन्द्रवाहं समुपेत्य पार्थाः
प्रदक्षिणं चक्रुरदीनसत्त्वाः ॥ २३

ते मातलेश्चक्रुरतीव हृष्टास्
सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसश्च
पप्रच्छुरेनं कुरुराजपुत्राः ॥ २४

तानप्यसौ मातलिरभ्यनन्दत्
पितेव पुत्राननुशिष्य चैनान् ।
ययौ रथेनाप्रतिमप्रभेण
पुनस्सकाशं त्रिदिवेश्वरस्य ॥ २५

गते तु तस्मिन् वरदेववाहे
शक्रात्मजस्सर्वरिपुप्रमाथी ।
[2]साक्षात् सहस्राक्ष इव प्रतीतश्
श्रीमान् स्वदेहादवमुच्य जिष्णुः ॥ २६

शक्रेण दत्तानि ददौ महात्मा
महाधनान्युत्तमरूपवन्ति ।

1. घ—यानास्थितः 2. क-ब—नास्तीदमर्धम्

दिवाकराभाणि विभूषणानि
प्रीतः प्रियायै सुतसोममात्रे ॥ २७

ततस्स तेषां कुरुपुङ्गवानां
तेषां च सूर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये
सर्वं यथावत् कथयांबभूव ॥ २८

अर्जुनः—

एवं मयाऽस्त्राण्युपशिक्षितानि
शक्राच्च वायोश्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिना च
प्रीतास्सुरा मे सहितास्सहेन्द्राः ॥ २९

वैशम्पायनः—

सङ्क्षेपतो वै स विशुद्धकर्मा
तेभ्यस्समाख्याय दिवः प्रदेशम् ।
माद्रीसुताभ्यां सहितः किरीटी
सुष्वाप तामावसतिं प्रतीतः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये ३० श्लोकाः ]

## ॥ अष्टात्रिंशदधिकशततमोऽध्यायः ॥

इन्द्रेण सभ्रातृकं युधिष्ठिरमेत्य जयाशीश्शंसनपूर्वकं पुनः स्वर्गं प्रति गमनम् ॥

वैशम्पायनः—

एतस्मिन्नेव काले तु सर्ववादित्रनिस्स्वनः ।
बभूव तुमुलश्शब्दस् त्वन्तरिक्षे दिवौकसाम् ॥ १
रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
[1]भुजङ्गव्याघ्रसिंहानां पक्षिणां चैव सर्वशः ॥ २
रवोन्मुखास्ते ददृशुः प्रीयमाणाः कुरूद्वहाः ।
मरुद्भिरन्वितं शक्रम् आपतन्तं विहायसा ॥ ३
ते समन्तादनुययुर् गन्धर्वाप्सरसस्तदा ।
विमानैस्सूर्यसङ्काशैर् देवराजमरिन्दमम् ॥ ४
ततस्स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ ५
पार्थानभ्याजगामाशु देवराजः पुरन्दरः ॥ ५॥
आगत्य च सहस्राक्षो रथादवरुरोह च ॥ ६
तं दृष्ट्वैव महात्मानं धर्मपुत्रो युधिष्ठिरः ।

---

1. ख—इदमर्धं नास्ति

भ्रातृभिस्सहितश्श्रीमान् देवराजमुपागमत् ॥ ७

पूजयामास चैवाथ विधिवद्भूरिदक्षिणः ।
[1]यथार्हममितात्मानं विधिदृष्टेन कर्मणा ॥ ८

धनञ्जयस्तु तेजस्वी प्रणिपत्य पुरन्दरम् ।
भृत्यवत् प्रणतस्तस्थौ देवराजसमीपतः ॥ ९

आघ्राय तं महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
धनञ्जयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ॥ १०

जटिलं देवराजस्य तपोयुक्तमकल्मषम् ।
हर्षेण महताऽऽविष्टः फल्गुनस्याथ दर्शनात् ॥ ११

तं तथाऽदीनमनसं राजानं हर्षसंयुतम् ।
उवाच वचनं धीमान् धर्मराजं पुरन्दरः ॥ १२

इन्द्रः—

त्वमिमां पृथिवीं राजन् प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् ॥ १३

अस्त्राणि लब्धानि च पाण्डवेन
सर्वाणि मत्तः प्रयतेन राजन् ।
कृतप्रियश्चास्मि धनञ्जयेन
जेतुं न शक्यस्त्रिभिरेव लोकैः ॥ १४

---

2. ख—इदमर्धं नास्ति

वैशम्पायनः—

एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टस् स्तूयमानो महर्षिभिः ॥ १५

धनेश्वरगृहस्थानां पाण्डवानां समागमम् ।
शक्रेण य इदं विद्वान् अधीयीत समाहितः ॥ १६

संवत्सरं ब्रह्मचारी नियतस्संशितव्रतः ।
[1]स जीवेद् भरतश्रेष्ठ सुसुखी शरदां शतम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

अर्जुनेन स्वस्य किरातरूपिणा महादेवेन सह युद्धप्रकारस्य पाशुपतास्त्रलाभप्रकारस्य च कथनम् ॥

---

वैशम्पायनः—

यथागतं गते शक्रे भ्रातृभिस्सह सङ्गतः ।
कृष्णया चापि बीभत्सुर् धर्मराजमपूजयत् ॥ १

अभिवादयमानं तु मूर्ध्न्युपाघ्राय पाण्डवम् ।

---

1. ख—पुत्रपौत्रैः परिवृतः श्रिया परमया युतः । [अधिकः पाठः]

[1]हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ २

युधिष्ठिरः—

कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ३
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि भारत ।
कच्चित् सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात् तव ॥ ४
यथा दृष्टश्च ते शक्रो भगवान् वा पिनाकधृत् ।
यथैवास्त्राण्यवाप्तानि यथा चाराधितश्च ते ॥ ५
यथोक्तवांस्त्वां भगवान् शतक्रतुररिन्दम ।
कृतप्रियस्तथाऽस्मीति तस्य ते किं प्रियं कृतम् ॥ ६
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ॥ ६॥
यथा तुष्टो महादेवस् सुरराजश्च तेऽनघ ॥ ७
[2]यच्चापि वज्रपाणेस्तु कृतं प्रियमरिन्दम ।
एतदाख्याहि मे सर्वं निखिलेन धनञ्जय ॥ ८

अर्जुनः—

शृणु त्वं हि महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तं च शङ्करम् ॥ ९
विद्यामधीत्य तां राजंस् त्वयोक्तामरिमर्दन ।

---

1. व—अर्धचतुष्टयं नास्ति  2. ख—इदमर्धं नास्ति

भवता च समादिष्टस् तपसे प्रस्थितो वनम् ॥ १०
भृगुतुन्दमथो गत्वा काम्यकादास्थितस्तपः ।
एकरात्रोषितः कश्चिद् अपश्यं ब्राह्मणं पथि ॥ ११
स मामपृच्छत् कौन्तेय कासि गन्ता ब्रवीहि मे ।
तस्मै चापि तथा सर्वम् अब्रुवं कुरुनन्दन ॥ १२
स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन् प्रीतिमांश्चाभवन्मयि ॥ १३
ततो मामब्रवीत् प्रीतस् तपस्तप्यं हि भारत ।
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपम् ॥ १४
ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरम् ।
तपस्तेपे महाराज मासं मूलफलाशनः ॥ १५
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ १६
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस् तदद्भुतमिवाभवत् ॥ १७
चतुर्थे मास्यतिक्रान्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागमत् ॥ १८
निघ्नन् प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
सम्मार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ १९

अनु तस्यापरं भूतं महत् कैरातमास्थितम् ।
धनुर्बाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा ॥ २०

ततोऽहं धनुरादाय तदक्षय्यौ महेषुधी ।
अताडयं शरेणाथ तद्भूतं रोमहर्षणम् ॥ २१

युगपत् स किरातश्च विकृष्य सुमहद्धनुः ।
[1]अभ्याजघ्ने दृढतरं कम्पयन्निव मेदिनीम् ॥ २२

स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ॥ २३

एष ते निशितैर्बाणैर् दर्पं हन्मि स्थिरो भव ।
[2]सङ्कर्षवान् महाकायस् ततो मामभ्यधावत ॥ २४

ततो गिरिरिवात्यर्थम् आवृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ २५

ततश्शरैर्दीप्तमुखैर् [3]नागैरिव विषोल्बणैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ २६

तस्य तच्छतधा रूपम् अभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमवाकिरम् ॥ २७

पुनस्तानि शरीराणि एकीभूतानि पाण्डव ।

---

1. अ—अनु तस्यापरं भूतं महत् कैरातमास्थितम्। [अधिकः पाठः]
2. क—स तु वर्षं; ख—स वर्मवान्; घ—स वर्ष्मवान्
3. क-ख-घ—पतितैरनुमन्त्रितैः

अदृश्यन्त महाराज तान्यहं व्यधमं पुनः ॥ २८
अणुर्बृहच्छिरा भूत्वा [1]महांश्चाणुशिरास्ततः ।
एकीभूतस्तदा राजन् सोऽभ्यवर्तत मां युधि ॥ २९
यदाऽभिभवितुं बाणैर् नैव शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ ३०
न चैनमशकं बोढुं तदद्भुतमिवाभवत् ।
तस्मिन् प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ ३१
तत्रापि च महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ३२
[2]स्थूणाकर्णमथो जालं शरवर्षं शरोल्बणम् ।
[3]शैलास्त्रमश्मवर्षं तु समास्थायाहमर्दयम् ॥ ३३
जग्राह प्रहसंस्तानि सर्वाण्यस्त्राणि भारत ।
तेषु सर्वेषु शान्तेषु ब्रह्मास्त्रं महदादिशम् ॥ ३४
ततः प्रज्वलितैर्बाणैस् सर्वतश्चोपचीयत ।
उपचीयमानश्च तदा सहास्त्रेणाभ्यवर्तत ॥ ३५
ततस्संतापितो लोको मत्प्रसूतेन तेजसा ।
क्षणेन च दिशः खं च सर्वतोऽभिविराजितम् ॥ ३६

1. ख—अयं पादोऽनन्तरश्च न स्तः
2. ख—इदमर्धं नास्ति
3. क-घ—शलभास्त्रमयं वर्षं समास्थायाहमभ्यगाम् ।

तदप्यस्त्रं महातेजाः क्षणेनैव व्यशामयत् ।
ब्रह्मास्त्रे निहते राजन् भयं मां महदाविशत् ॥ ३७
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ।
सहसाऽभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥ ३८
एतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेष्वपि ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ ३९
व्यायामं मुष्टिभिः कृत्वा तलैरपि समाहतौ ।
अपातयच्च मां भूतम् अहं चापातयं महीम् ॥ ४०
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ।
[1]सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ४१
मुख्यं कृत्वा स भगवांस् ततोऽन्यद्रूपमात्मनः ।
[2]दिव्यं चैव महाराज वसानोऽद्भुतमम्बरम् ॥ ४२

---

1. ख—ततश्चिन्तां समगमं पूजयिष्याम्यहं पुनः ॥
ततः पुष्पाण्युपाहृत्य सैकतं शङ्करं प्रभुम् ।
पूजयिष्यंस्तमद्राक्षं किरातं पुष्पधारिणम् ॥
ततश्चान्यानि पुष्पाणि पूजयिष्यन् पुनःपुनः ।
तानि सर्वाणि दृष्ट्वाऽहं किरातस्य च मूर्धनि ॥
इति कृत्वा महादेवं प्रणतोऽस्मि पुनः पुनः । [अधिकः पाठः]

2. घ—नास्तीदमर्धम्

हित्वा मृगयुरूपं तद् भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ४३

सोऽदृश्यत ततस्साक्षाद् भगवान् गोवृषध्वजः ।
धनुर्गृह्य तदा पाणौ बहुरूपः पिनाकधृत् ॥ ४४

स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परन्तप ॥ ४५

ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ ।
प्रादान्ममैव भगवान् वरयस्वेति चाब्रवीत् ॥ ४६

श्रीमहेश्वरः—

तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।
यत्ते मनोगतं वीर तद्ब्रूहि वितराम्यहम् ॥ ४७

अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ४७॥

अर्जुनः—

ततः प्राञ्जलिरेवाहम् अस्त्रेषु कृतमानसः ।
प्रणम्य शिरसा शर्वं ततो वचनमाददे ॥ ४८॥

भगवान् मे प्रसन्नश्चेद् ईप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ ४९॥

ददानीत्येव भगवान् अब्रवीत् त्र्यम्बकश्च माम् ।
रौद्रमस्त्रं मदीयं त्वाम् उपस्थास्यति पाण्डव ॥ ५०॥

प्रददौ च मम प्रीतस् सोऽस्त्रं पाशुपतं प्रभुः ।
उवाच च महादेवो दत्वा मेऽस्त्रं सनातनम् ॥ ५१॥

श्रीमहेश्वरः—

न प्रयोज्यं भवेदेतन्मानुषेषु कथञ्चन ।
पीड्यमानेन बलवत् प्रयोज्यं स्याद्धनञ्जय ॥ ५२॥
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ॥ ५३

अर्जुनः—

ततोऽप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ ५४
उत्सादनममित्राणां परसैन्यनिकर्तनम् ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ॥ ५५
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
पश्यतश्चैव मे देवस् तत्रैवान्तरधीयत ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

---

## ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥

अर्जुनेन स्वस्येन्द्रलोकगमनप्रकारस्य तत्र निवासप्रकारकथनपूर्वक-मिन्द्रादस्त्रप्राप्तिप्रकारस्य च कथनम् ॥ १ ॥ अस्त्रविद्यासमाप्तौ सहस्राक्षेण गुरुदक्षिणात्वेन निवातकवचानां क्षपणं भिक्षितेनार्जुनेन तदर्थं प्रस्थानम् ॥२॥

अर्जुनः—

ततस्तामवसं प्रीतो रजनीं तत्र भारत ।
[1]प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ॥ १
व्युषितो रजनीं तां च कृत्वा पौर्वाह्णिकीं क्रियाम् ।
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ २
तस्यैवाहं पुरावृत्तं सर्वमेव न्यवेदयम् ।
भगवन्तं महादेवं समेतोऽस्मीति भारत ॥ ३
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः ॥ ३॥

ब्राह्मणः—

दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ४
समेतं लोकपालैस्तु सर्वैर्वैवस्वतादिभिः ।
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ५

अर्जुनः—

एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः ।

1. ख—अर्धपद्यकं नास्ति

अगच्छत् स यथाकामं ब्राह्मणस्सूर्यसन्निभः ॥ ६
अथापराह्णे तस्याह्नः प्रावात् पुण्यस्समीरणः ।
[1]पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ॥ ७
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च ।
शैशिरस्य गिरेः पादे प्रादुरासीत् समन्ततः ॥ ८
वादित्राणि च दिव्यानि सुघोषाणि समन्ततः ।
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ॥ ९
गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च ।
पुरस्सरा देवपतेर् जगुर्गीतानि सर्वशः ॥ १०
मरुतां च गणास्तत्र देवयानैरुपागमन् ।
महेन्द्रानुचरा ये च देवसद्मनिवासिनः ॥ ११
ततो मरुत्वान् हरिभिर् युक्तैर्वाहैस्स्वलङ्कृतैः ।
शचीसहायस्तत्रायात् सह सर्वैस्सुरैस्तदा ॥ १२
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजँल्लक्ष्म्या परमया युतः ॥ १३
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ १४
ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः ॥ १४॥

1. ख—इदमर्धं नास्ति

देवाः—

सव्यसाचिन् समीक्षस्व लोकपालानवस्थितान् ॥ १५

सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शङ्करम् ।

अस्मत्तोऽपि गृहाण त्वम् अस्त्राणीति समन्ततः ॥ १६

अर्जुनः—

ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।

प्रत्यगृह्णां महास्त्राणि ह्यस्त्राणि विविधानि च ॥ १७

गृहीतास्त्रस्ततो देवैर् अनुज्ञातोऽस्मि भारत ॥ १७॥

अथ देवा ययुस्सर्वे यथागतमरिन्दम ॥ १८

मघवानपि मां देवो रथमारोप्य सुप्रभम् ।

उवाच वाक्यं भगवान् स्मयन्निव महायशाः ॥ १९

इन्द्रः—

पुरैवागमनादस्माद् वेदाहं त्वां धनञ्जय ।

अतः परं वै नाहं त्वां दर्शये भरतर्षभ ॥ २०

त्वया हि पुण्यतीर्थेषु समाक्रान्तमिहासकृत् ।

तपश्चैवं पुरा तप्तं स्वर्गं गन्तासि पाण्डव ॥ २१

भूयश्चैवाभितप्तव्यं तपश्चरणमुत्तमम् ।

दुश्चरं घोरमस्त्राणां तपोबलकरं तव ॥ २२

स्वर्गस्त्ववश्यं गन्तव्यस् त्वया शत्रुनिषूदन ।

मातलिर्मन्नियोगात् त्वां त्रिदिवं प्रापयिष्यति ॥ २३

[1]विदितस्त्वं हि देवानाम् ऋषीणां च महात्मनाम् ।
इहस्थः पाण्डवश्रेष्ठ तपः कुर्वन् सुदुष्करम् ॥ २४

अर्जुनः—

ततोऽहमब्रुवं शक्रं प्रसीद भगवन् मम ।
आचार्यं वरये त्वाऽहम् अस्त्रार्थे त्रिदशेश्वर ॥ २५

इन्द्रः—

क्रूरकर्माऽस्त्रवित् तात भविष्यसि परन्तप ।
यदर्थमस्त्राणीप्सुस्त्वं तं कामं समवाप्नुहि ॥ २६

अर्जुनः—

ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन् ।
मानुषेषु प्रयोक्ष्यामि विनाऽस्त्रप्रति[2]घातकम् ॥ २७
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप ।
लोकांश्चास्त्रजितान् पश्चाल्लभेयं सुरपुङ्गव ॥ २८

इन्द्रः—

परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनञ्जय ।
[3]ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ २९
शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत ।

---

1. ख—इदमर्धं नास्ति
2. क-ख-घ—कृन्तनम्
3. ख—इदमर्धं नास्ति

वायोरग्नेर्वसुभ्योऽथ वरुणात् समरुद्गणात् ॥ ३०
साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम् ।
वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च ॥ ३१
[1]मदीयानि च जानीहि सर्वास्त्राणि समाप्स्यसि ॥ ३१॥

अर्जुनः—

एवमुक्त्वा तु मां शक्रस् तत्रैवान्तरधीयत ॥ ३२
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं युक्तं मातलिना नृप ॥ ३३
[2]लोकपालेषु यातेषु मामुवाचाथ मातलिः ॥ ३३॥

मातलिः—

द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युतिः ॥ ३४
संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम् ।
पश्य पुण्यकृतां लोकान् सशरीरो दिवं व्रज ॥ ३५

अर्जुनः—

इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ।
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ॥ ३६
चोदयामास स हयान् मनोमारुतरंहसः ॥ ३६॥

---

1. क-ख—मद्गतानि च याम्यानि कौन्तेयास्त्राण्यवाप्स्यथ ।
ख—मदीयानि च यानीह कौन्तेयास्त्राण्यवाप्स्यसि ।

2. अ—नासीदमर्षणम्

[1]मातलिर्हयशास्त्रज्ञो यथावद्भूरिदक्षिणः ।
अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः ॥ ३७॥

तत्राभ्रान्तं रथे राजन् विस्मितश्चेदमब्रवीत् ॥ ३८

मातलिः—

अत्यद्भुतमिदं त्वद्य विचित्रं प्रतिभाति मे ।
यदास्थितो रथं दिव्यं पदान्न चलितो भवान् ॥ ३९

देवराजोऽपि हि मया नित्यमत्रोपलक्षितः ।
विचलन् प्रथमोत्पाते हयानां भरतर्षभ ॥ ४०

त्वं पुनास्स्थित एवात्र रथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सत्त्वं तवेति प्रतिभाति मे ॥ ४१

अर्जुनः—

इत्युक्त्वाऽऽकाशमाविश्य मातलिर्विबुधालयान् ।
दर्शयामास मे राजन् विमानानि च भारत ॥ ४२

नन्दनादीनि देवानां वनानि बहुलान्युत ।
[2]दर्शयामास मे प्रीत्या मातलिश्शक्रसारथिः ॥ ४३

ततश्शक्रस्य भवनम् अपश्यममरावतीम् ।
दिव्यैः [3]कमलषण्डैश्च वृक्षैरन्यैरलङ्कृताम् ॥ ४४

न तां भासयते सूर्यो न शीतोष्णे न च क्लमः ।

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. क-घ—कनकबन्धैश्च

रजःपङ्को न च तमस् तत्रास्ति न जरा नृप ॥ ४५
न तत्र शोको दैन्यं च वैवर्ण्यं चोपलक्ष्यते ।
[1]दिवौकसां महाराज न च ग्लानिररिन्दम ॥ ४६
न क्रोधलोभौ तत्रास्ताम् अशुभं वा विशां पते ॥ ४६॥
[2]नित्यं तुष्टाश्च हृष्टाश्च प्राणिनस्सुरवेश्मनि ।
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ४७॥
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ॥ ४८
[3]शीतस्तत्र ववौ वायुस् सुगन्धो वीजते शुभः ॥ ४८॥
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ।
मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ॥ ४९॥
विमानयायिनस्सर्वे दृश्यन्ते बहवोऽमराः ॥ ५०
ततोऽपश्यं वसून् रुद्रान् साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान् सर्वान् प्रत्यपूजयम् ॥ ५१
ते मां वीर्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त सङ्ग्रामे विजयेन च ॥ ५२
प्रविश्य तां पुरीं दिव्यां देवगन्धर्वपूजिताम् ।
देवराजं सहस्राक्षम् उपातिष्ठं कृताञ्जलिः ॥ ५३

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति
3. ख—अर्धचतुष्टयं नास्ति

वृद्धावर्धासनं प्रीतश् शक्रो मे ददतां वरः ।
बहुमानाच्च गात्राणि परपर्श मम वासवः ॥ ५४
तत्राहं देवगन्धर्वैस् [1]सहितो भूरिदक्षिणः ।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥ ५५
विश्वावसोश्च वै पुत्रश् चित्रसेनोऽभवत् सखा ।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥ ५६
तत्राहमवसं राजन् गृहीतास्त्रस्सुपूजितः ।
सुखं शक्रस्य भवने सर्वकामसमन्वितः ॥ ५७
शृण्वन् वै गीतशब्दं च तूर्यशब्दं च पुष्कलम् ।
पश्यंश्चाप्सरसश्श्रेष्ठा नृत्यमानाः परन्तप ॥ ५८
तत् सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहम् अस्त्रेष्वेव व्यवस्थितः ॥ ५९
ततोऽतुष्यत् सहस्राक्षस् तेन कामेन मे विभुः ॥ ६०
एवं मे वसतो राजन्नेष कालोऽत्यगादिति ॥* ६०॥
कृतास्त्रमतिविश्वस्तम् अथ मां हरिवाहनः ।
संस्पृश्य मूर्ध्नि पाणिभ्याम् इदं वचनमब्रवीत् ॥ ६१॥

इन्द्रः—

न त्वमद्य युधा जेतुं शक्यस्सुरगणैरपि ।

---

1. ख—कुर्वन्नस्त्राणि भारत मध्ये अर्धं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः ॥ ६२॥
अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ।
अजेयस्त्वं हि सङ्ग्रामे सर्वैरपि सुरासुरैः । ६३॥

अर्जुनः—

अथाब्रवीत् पुनर्देवस् सम्प्रहृष्टतनूरुहः ॥ ६४

इन्द्रः—

अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥ ६४॥
अप्रमत्तस्सदा दक्षस् सत्यवादी जितेन्द्रियः ।
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥ ६५॥
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च ।
पञ्चभिर्विधिभिः पार्थ विद्यते न त्वया समः ॥ ६६॥
प्रयोगमुपसंहारम् आवृत्तिं च धनञ्जय ।
प्रायश्चित्तं च वेत्थ त्वं प्रतीघातं च सर्वशः ॥ ६७॥
तव गुर्वर्थकालोऽयं समुत्पन्नः परन्तप ।
प्रतिजानीष्व तं कर्तुं ततो वेत्स्याम्यहं परम् ॥ ६८॥

अर्जुनः—

ततोऽहमब्रुवं राजन् देवराजमिदं वचः ।
विषह्यं यन्मया कर्तुं कृतमेव निबोध तत् ॥ ६९॥

ततो मामब्रवीद्राजन् प्रहसन् बलवृत्रहा ॥ ७०

इन्द्रः—

नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किञ्चन ॥ ७०॥

निवातकवचा नाम दानवा मम शत्रवः ।
समुद्रकुक्षिमासाद्य दुर्गे प्रतिवसन्त्युत ॥ ७१॥
तिस्रः कोट्यस्समाख्यातास् तुल्यरूपबलप्रभाः ।
तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ ७२॥

अर्जुनः—

ततो मातलिसंयुक्तं मयूरसमरोमभिः ।
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ॥ ७३॥
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ।
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ॥ ७४॥
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ।
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत् ॥ ७५॥
ततः प्रायामहं तेन स्यन्दनेन विराजता ।
येनाजयद्देवपतिर् बलिं वैरोचनिं पुरा ॥ ७६॥
ततो देवास्सर्व एव तेन घोषेण बोधिताः ।
मन्वाना देवराजं मां समाजग्मुर्विशां पते ॥ ७७॥
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन ।
तानब्रुवं तथाभूतान् इदं कर्ताऽस्मि संयुगे ॥ ७८॥
निवातकवचानां तु प्रस्थितं मां वधैषिणम् ।
निबोधत महाभागाश् शिवं चाशास्त मेऽनघाः ॥ ७९॥
ततो वाग्भिः प्रशस्ताभिस् त्रिदशाः पृथिवीपते ।

तुष्टुवुर्मां प्रसन्नास्ते यथा देवं पुरन्दरम् ॥ ८०॥

देवाः—

रथेनानेन मघवा जितवाञ् शम्बरं युधि ।
नमुचिं वलघ्नौ च प्रह्लादनरकावपि ॥ ८१॥

बहूनि च सहस्राणि प्रयुतान्यर्बुदान्यपि ।
[1]रथेनानेन दैत्यानां जितवान् मघवा युधि ॥ ८२॥

त्वमप्यनेन कौन्तेय निवातकवचान् रणे ।
विजेता युधि विक्रम्य पुरेव मघवा वशी ॥ ८३॥

अयं च शङ्खप्रवरो येन जेतासि दानवान् ।
अनेन विजिता लोकाश् शक्रेणापि महात्मना ॥ ८४॥

अर्जुनः—

प्रदीयमानं देवैस्तु देवदत्तं जलोद्भवम् ।
प्रत्यगृह्णां जयायैनं स्तूयमानस्तदाऽमरैः ॥ ८५॥

स खड्गी कवची बाणी प्रगृहीतशरासनः ।
दानवालयमत्युग्रं प्रयातोऽस्मि युयुत्सया ॥ ८६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ८६॥ श्लोकाः]

---

1. ख—इदमर्धं नास्ति

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

पार्थेन निवातकवचैस्सह युयुत्सया मातलिसनाथेनेन्द्ररथेन तत्पुरं प्रति गमनम् ॥ १ ॥ अर्जुनशङ्खध्वनिश्रवणेन सन्नद्धैर्निवातकवचैस्तेन सह युद्धारम्भः ॥ २ ॥

अर्जुनः—

[1]ततोऽहं स्तूयमानस्तु तत्र तत्र सुरर्षिभिः ।
अपश्यमुदधिं भीमम् अपांपतिमथाव्ययम् ॥ १
[2]फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ।
अदृश्यन्तोर्मयस्तत्र चलन्त इव पर्वताः ॥ २
नावस्सहस्रशस्तत्र रत्नपूर्णास्समन्ततः ।
नभसीव विमानानि विचरन्त्यो विरेजिरे ॥ ३
तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः ।
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः ॥ ४
शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः ।
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ॥ ५
[3]तथा सहस्रशस्तत्र रत्नसङ्घाः प्लवन्त्युत ।
वायुश्च घूर्णते भीमस् तदद्भुतमिवाभवत् ॥ ६
तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम् ।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ॥ ७

1. ख—नास्तीदमर्धम् 2. ख—इदमर्धं नास्ति
3. ख—अर्धद्वयं नास्ति

तत्रैव मातलिस्तूर्णं निपात्य धरणीतले ।
दानवान् रथघोषेण तत् पुरं समुपाद्रवत् ॥ ८
रथघोषं तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे ।
मन्वाना देवराजं मां संविग्ना दानवाऽभवन् ॥ ९
सर्वे सम्भ्रान्तमनसश् शरचापधरास्स्थिताः ।
तथा शूलासिपरशुगदामुसलपाणयः ॥ १०
ततो द्वाराणि पिदधुर् दानवास्त्रस्तचेतसः ।
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते ॥ ११
ततश्शङ्खमुपादाय देवदत्तं महास्वनम् ।
[1]पुरमासुरमासाद्य प्राधमं तं शनैरहम् ॥ १२
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत् ।
वित्रेसुश्च विलिल्युश्च भूतानि सुमहान्त्यपि ॥ १३
ततो निवातकवचास् सर्वे एव समन्ततः ।
दंशिता विविधैस्त्राणैर् विचित्रायुधपाणयः ॥ १४
आयसैश्च महाशूलैर् गदाभिर्मुसलैरपि ।
पट्टसैः करवालैश्च रथचक्रैश्च भारत ॥ १५
शतघ्नीभिर्भुसुण्डीभिः खड्गैश्चित्रैरलङ्कृतैः ।
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन् सहस्रशः ॥ १६
[2]ततो वेगेन महता दानवा मामुपाद्रवन् ।

1. ख-घ—आपूरयं　क—अपूरयन् समाश्लिष्य प्रभावं तं;　ख—प्रथमं तं
2. अ—अर्धद्वयं नास्ति

विमुञ्चन्तश्शितान् बाणाञ् शतशोऽथ सहस्रशः ॥ १७
[1]ततो विचार्य बहुशो रथमार्गेषु तान् हयान् ।
प्राचोदयत् समे देशे मातलिर्भरतर्षभ ॥ १८
[2]न तेषां तत्प्रणुन्नानाम् आशुत्वाच्छीघ्रगामिनाम् ।
अन्वपद्यत् तदा कश्चित् तन्मेऽद्भुतमिवाभवत् ॥ १९
ततस्ते दानवास्तत्र योधव्रातान्यनेकशः ।
विकृतस्वररूपाणि भृशं सर्वाण्यचोदयन् ॥ २०
तेन शब्देन सहसा समुद्रे पर्वता इव ।
आप्लवन्त गतैस्सत्त्वैर् मत्स्याश्शतसहस्रशः ॥ २१
स सम्प्रहारस्तुमुलस् तेषां च मम भारत ।
अवर्तत महाघोरो निवातकवचान्तकः ॥ २२
ततो देवर्षयश्चैव दानवर्षिगणाश्च ये ।
ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे ॥ २३
ते वै मामनुरूपाभिर् मधुराभिर्जयैषिणः ।
अस्तुवन्नृषयो वाग्भिर् यथेन्द्रं तारकामये ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

1. ख-ग—अर्धाष्टकं नास्ति
2. ख—अर्धद्वयं नास्ति

## ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

अर्जुनस्य निवातकवचैस्सह युद्धम् ॥

अर्जुनः—

ततो निवातकवचास् सर्वे वेगेन भारत ।
अभ्यद्रवन् मां सहिताः प्रगृहीतायुधा रणे ॥ १

आच्छाद्य रथपन्थानम् उत्क्रोशन्तो महारथाः ।
आवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥ २

ततोऽपरे महावीर्याश् शूलपट्टसपाणयः ।
शूलानि च भुसुण्डीश्च मुमुचुर्दानवा मयि ॥ ३

सुमहत् तुमुलं वर्षं गदाशक्तिसमाकुलम् ।
अनिशं सृज्यमानं तैर् अपतन्मद्रथोपरि ॥ ४

अन्योन्यमभिधावन्ति निवातकवचा युधि ।
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥ ५

तानहं विविधैर्बाणैर् वेगवद्भिरजिह्मगैः ।
गाण्डीवमुक्तैरभ्यघ्नम् एकैकं दशभिर्मृधे ॥ ६

ते कृता विमुखास्सर्वे मत्प्रयुक्तैश्शिलाशितैः ।
ततो मातलिना तूर्णं हयास्ते सम्प्रचोदिताः ॥ ७

अथ मार्गान् बहूंस्तत्र विचेरुर्वातरंहसः ।

सुसंयता मातलिना प्राभ्रमन्त दितेस्सुतान् ॥ ८
[1]शतं शतास्ते हरयस् तस्मिन् युक्ता महारथे ।
तदा मातलिना यन्त्रा व्यचरन्नेकवद्रथम् । ९
तेषां चरणपातेन रथनेमिस्वनेन च ।
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ॥ १०
गतासवस्तथा चान्ये दानवाः पाण्डवर्षभ ।
हतसारथयस्तत्र व्यकृष्यन्त तुरङ्गमैः ॥ ११
ते दिशो विदिशस्सर्वाः प्रतिरुध्य प्रहारिणः ।
घ्नन्ति स्म विविधैश्शस्त्रैस् ततो मे व्यथितं मनः ॥ १२
ततोऽहं मातलेर्वीर्यम् अद्भुतं समदर्शयम् ।
अश्वांस्तथा वेगवतो [2]यद्रथं नावधारयन् ॥ १३
ततोऽहं लघुभिश्चित्रैर् अस्त्रैस्तानसुरान् रणे ।
सायुधांश्चिच्छिदे राजन् शतशोऽथ सहस्रशः ॥ १४
एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन् ।
प्रीतिमानभवद् राजन् मातलिश्शक्रसारथिः ॥ १५
वध्यमानास्ततस्तेन हयैस्तेन रथेन च ।
अगमन् प्रक्षयं केचिन्न्यवर्तन्त तथाऽपरे ॥ १६

---

1. ख—अर्धद्वयं नास्ति
2. क—यथा वक्ता न्यवारयन्; ख—यथा यत्तानवारयत्;
घ—यथावन्ता न्यवारयन्

स्पर्धमाना इवास्माभिर् निवातकवचा रणे ।
शरवर्षैर्महद्भिर्मां समन्तात् प्रत्यवारयन् ॥ १७
शरवेगैर्निहत्याहम् अस्त्रैश्शरविघातिभिः ।
ज्वलद्भिः परमैश्शीघ्रैस् तानविध्यं सहस्रशः ॥ १८
ततस्सम्पीड्यमानास्ते क्रोधाविष्टा महासुराः ।
अपीडयन्मां सहिताश् शक्तिशूलासिवृष्टिभिः ॥ १९
ततोऽहमस्त्रं प्रायुञ्जं माधवं नाम भारत ।
दयितं देवराजस्य ब्रह्मदण्डसमं रणे ॥ २०
ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः ।
अस्त्रवीर्येण महता तैर्मुक्तानहमच्छिदम् ॥ २१
छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः ।
प्रत्यविध्यमहं रोषाद् दृढमुष्टिकृतैश्शरैः ॥ २२
गाण्डीवविततास्सङ्ख्ये यथा भ्रमरपङ्क्तयः ।
निष्पतन्ति तदा बाणास् तन्मातलिरपूजयत् ॥ २३
तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव ।
अवाकिरन्मां बलवत् तानहं व्यधमं शरैः ॥ २४
वध्यमानास्ततस्ते तु निवातकवचाः पुनः ।
शरवर्षैर्महद्भिर्मां समन्तात् पर्यवारयन् ॥ २५
शरवेगान् निहत्याहम् अस्त्रैरस्त्रविघातिभिः ।

ज्वलद्भिः परमैश्शीघ्रैस् तानविध्यं सहस्रशः ॥ २६

तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितम् ।
प्रावृषीवाभिवृष्टानि शृङ्गाणीव धराभृताम् ॥ २७

इन्द्राशनिसमस्पर्शैर् वेगवद्भिरजिह्मगैः ।
मद्बाणैर्वध्यमानास्ते समुद्विग्नास्स्म दानवाः ॥ २८

शतधा भिन्नदेहास्ते क्षीणप्रहरणौजसः ।
ततो निवातकवचा मामयुध्यन्त मायया ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये २९ श्लोकाः]

---

## ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

---

अर्जुनेन दिव्यास्त्रैर्मायानिरसनपूर्वकं दैत्यहननम् ॥

---

अर्जुनः—

ततोऽश्मवर्षं सुमहत् प्रादुरासीत् समन्ततः ।
नागमात्रं महाघोरं तन्मां दृढमपीडयत् ॥ १

तदहं वज्रसङ्काशैश् शरैरिन्द्रास्त्रचोदितैः ।
अचूर्णयं वेगवद्भिश् शतधैकैकमाहवे ॥ २

चूर्ण्यमानेऽश्मवर्षे तु पावकस्समजायत ।
[1]तत्राश्मचूर्णा न्यपतन् पावकप्रकरा इव ॥ ३

ततोऽश्मवर्षे विहते जलवर्षं महत्तरम् ।
धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके ॥ ४

[2]नभसः प्रच्युता धारास् तिग्मवीर्यास्सहस्रशः ।
आवृण्वन् सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ५

धाराणां च निपातेन वायोर्विस्फूर्जितेन च ।
गर्जितेन च मेघानां न प्राज्ञायत किञ्चन ॥ ६

[3]धारा दिवि च सम्बाधा वसुधायां च सर्वशः ।
मोहयन्ति स्म मां तत्र निपतन्त्योऽनिशं भुवि ॥ ७

तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम् ।
दीप्तं प्राहिणवं घोरम् अशुष्यत् तेन तज्जलम् ॥ ८

हतेऽश्मवर्षे तु तदा जलवर्षे च शोषिते ।
मुमुचुर्दानवा मायाम् अग्निं वायुं च मानद ॥ ९

ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः ।
शैलेन च महास्त्रेण वायोर्वेगमधारयम् ॥ १०

तस्यां प्रतिहतायां तु दानवा युद्धदुर्मदाः ।

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

प्राकुर्वन् विविधां मायां यौगपद्येन भारत ॥ ११
[1]ततो वर्षं प्रादुरासीत् सुमहद्रोमहर्षणम् ।
अस्त्राणां घोररूपाणाम् अग्नेर्वायोस्तथाऽश्मनाम् ॥ १२
सा तु मायामयी वृष्टिः पीडयामास मां युधि ॥ १२॥
अथ घोरं तमस्तीव्रं प्रादुरासीत् समन्ततः ॥ १३
तमसा संवृते लोके घोरेणावरणेन च ।
तुरगा विमुखाश्चासन् प्रास्खलच्चापि मातलिः ॥ १४
[2]हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि ।
असकृच्चापि मां भीतः किं करिष्याव इत्यपि ॥ १५
मां च भीराविशत् तीव्रा तस्मिन् विगतचेतसि ।
स च मां विगतज्ञानस् संत्रस्त इदमब्रवीत् ॥ १६
सुराणामसुराणां च सङ्ग्रामस्सुमहानभूत् ।
[3]अमृतार्थे पुरा पार्थ स च दृष्टो मयाऽनघ ॥ १७
शम्बरस्य वधे चापि सङ्ग्रामस्सुमहानभूत् ।
सारथ्यं देवराजस्य तत्रापि कृतवाहनम् ॥ १८
तथैव वृत्रस्य वधे सङ्गृहीता मया हयाः ।
वैरोचनेर्मया युद्धं दृष्टं चासीत् सुदारुणम् ॥ १९

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. अ-घ—अर्धद्वयं नास्ति

एते मया महाघोरास् सङ्ग्रामाः पर्युपस्थिताः ।
न चापि विगतज्ञानो भूतपूर्वोऽस्मि पाण्डव ॥ २०

पितामहेन संहारः प्रजानां विहितो ध्रुवम् ।
न हि युद्धमिदं युक्तम् अन्यत्र जगतः क्षयात् ॥ २१

तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना ।
मोहयन् दानवेन्द्राणाम् अहं मायामयं बलम् ॥ २२

[1]अब्रुवं मातलिं भीतं पश्य मे भुजयोर्बलम् ।
अस्त्राणां च प्रभावं मे धनुषो गाण्डिवस्य च ॥ २३

अस्त्रमाया च यैस्तेषां मायामेतां सुदारुणाम् ।
विनिहन्मि तमश्चोग्रं मा भैस्सूत स्थिरो भव ॥ २४

एवमुक्त्वाहमसृजम् अस्त्रमायां नराधिप ।
मोहनीं सर्वशत्रूणां हिताय त्रिदिवौकसाम् ॥ २५

पीड्यमानासु मायासु तासु तास्वसुरेश्वराः ।
पुनर्बहुविधा मायाः प्राकुर्वन्नसुरेश्वराः ॥ २६

पुनः प्रकाशमभवत् तमसा ग्रस्यते पुनः ।
व्रजत्यदर्शनं लोकः पुनरप्सु निमज्जति ॥ २७

सुसङ्गृहीतैर्हरिभिः प्रकाशे सति मातलिः ।
व्यचरत् स्यन्दनाग्र्येण सङ्ग्रामे रोमहर्षणे ॥ २८

1. अ—नास्तीदमर्धम्

ततः पर्यपतन्भूमौ निवातकवचा मयि ।
तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनम् ॥ २९

वर्तमाने तथा युद्धे निवातकवचान्तके ।
नापश्यं सहसा सर्वान् दानवान् मायया वृतान् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

---

अर्जुनेन निवातकवचवधानन्तरं पुनः स्वर्गं प्रति प्रस्थानम् ॥

---

अर्जुनः—

अदृश्यमानास्ते दैत्या योधयन्ति स्म मां युधि ।
अदृश्येनास्त्रवीर्येण तानप्यहमयोधयम् ॥ १

गाण्डीवमुक्तैर्विशिखैस् सम्यगस्त्रैः प्रचोदितैः ।
अच्छिन्दमुत्तमाङ्गानि यत्रयत्र स्म तेऽभवन् ॥ २

ततो निवातकवचा वध्यमाना मया युधि ।
संहृत्य मायां तरसा प्राविशन् पुरमात्मनः ॥ ३

व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने ।

अपश्यं दानवांस्तत्र हतान् शतसहस्रशः ॥ ४
विनिक्षिप्तानि तत्रैषां शस्त्राण्याभरणान्युत ।
[1]शतशस्स्म प्रदृश्यन्ते गात्राणि कवचानि च ॥ ५
हयानां नान्तरं ह्यासीत् पदाद्विचलितुं पदम् ।
[2]उत्पत्य सहसा तस्थुर् अन्तरिक्षगतास्ततः ॥ ६
ततो निवातकवचा व्योम सञ्छाद्य केवलम् ।
अदृश्या ह्यभ्यवर्तन्त विसृजन्तश्शिलोच्चयान् ॥ ७
अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथा ।
न्यगृह्णन् दानवा घोरा रथचक्रेण भारत ॥ ८
[3]विनिगृह्य हयांश्चान्ये रथं च मम युध्यतः ।
सर्वतो मामचिन्वन्त सरथं धरणीधरैः ॥ ९
पर्वतैरुपचीयद्भिः पतद्भिश्च तथाऽपरैः ।
स देशो यत्र वर्तामि गुहेव समपद्यत ॥ १०
पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः ।
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ॥ ११
लक्षयित्वा च मां भीतम् इदं वचनमब्रवीत् ॥ ११॥

मातलिः—

अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ॥ १२

---

1. ख–घ—कूटवत् प्रतिदृश्यन्तो गात्राणि च शिरांसि च। [पाठान्तरम्]
2. ख—इदमर्धं नास्ति 3. ख—इदमर्धं नास्ति

अर्जुनः—

ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ।
देवराजस्य दयितं वज्रमस्त्रं नराधिप ॥ १३
अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च ।
अमुञ्चं वज्रसंस्पर्शान् आयतान्निशितान् शरान् ॥ १४
ततो मायाश्च तास्सर्वा निवातकवचांश्च तान् ।
ते वज्रचोदिता बाणा वज्रभूतास्समाविशन् ॥ १५
ते वज्रवेगाभिहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन् पृथिवीतले ॥ १६
अन्तर्भूमौ च येऽगृह्णन् दानवा रथवाजिनः ।
अनुप्रविश्य तान् बाणाः प्राहिण्वन् यमसादनम् ॥ १७
हतैर्निवातकवचैर् निरस्तैः पर्वतोपमैः ।
समाच्छाद्यत देशस्स विकीर्णैरिव पर्वतैः ॥ १८
न हयानां क्षतिः काचिन्न रथस्य न मातलेः ।
मम चादृश्यत तदा तदद्भुतमिवाभवत् ॥ १९
ततो मां प्रहसन् राजन् मातलिः प्रत्यभाषत ।

मातलिः—

नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते ॥ २०
हतेष्वसुरसङ्घेषु दारास्तेषां च सर्वशः ।
प्राक्रोशन्नगरे तस्मिन् यथा शरदि लक्ष्मणाः ॥ २१

अर्जुनः—

ततो मातलिना:साधम् अहं तत्पुरमभ्यगाम् ।
त्रासयन् रथघोषेण निवातकवचास्त्रियः ॥ २२

तान् दृष्ट्वा दशसाहस्रान मयूरसदृशान् हयान् ।
रथं च रविसङ्काशं प्राद्रवन् गणशस्त्रियः ॥ २३

[1]ताभिराभरणैश्शब्दस् त्रासिताभिस्समीरितः ।
शिलानामिव शैलेषु पतन्तीनामभूत् तदा ॥ २४

वित्रस्ता दैत्यनार्यस्तास् स्वानि वेश्मान्यथाविशन् ।
बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ २५

तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ।
विशिष्टं देवनगराद् अपृच्छं मातलिं ततः ॥ २६

इदमेवंविधं कस्माद् देवता न विशन्त्युत ।
पुरन्दरपुराद्धीदं विशिष्टमिव लक्षये ॥ २७

मातलिः—

आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैर् इतः प्रच्यावितास्सुराः ॥ २८

तपस्तप्त्वा महत् तीव्रं प्रसाद्य च पितामहम् ।
इदं वृत्तं निवासाय देवेभ्यश्चाभयं युधि ॥ २९

ततश्शक्रेण भगवान् स्वयम्भूरभिचोदितः ।

1. ख—अर्धद्वयं नास्ति

[1]दत्तवान् भगवानस्त्रम् आत्मनो हितकाम्यया ॥ ३०

तत उक्तो भगवता दृष्टमात्रेण वासवः ।
भवितान्तस्त्वमेवैषां देहेनान्येन वृत्रहन् ॥ ३१

तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्यास्सुरैर्हन्तुं य एते निहतास्त्वया ॥ ३२

कालस्य परिणामेन ततस्त्वमिह भारत ।
एषामन्तकरः पार्थ त्वयापि च कृतं तथा ॥ ३३

दानवानां विनाशार्थं महास्त्राणां महद्बलम् ।
ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्रेदमुत्तमम् ॥ ३४

अर्जुनः—

ततः [2]प्रशाम्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धम् अगमं देवसद्म तत् ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

1. ख—इदमर्धं नास्ति 2. क-ख-म—प्रविश्य

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

निवातकवचवधानन्तरं स्वर्गं प्रत्यागच्छताऽर्जुनेन मध्येमार्गं हिरण्यपुरावलोकनम् ॥ १ ॥ ततस्तद्वासिनां पौलोमानां कालकेयानां च वधानन्तरं पुनः स्वर्गं प्रत्यागमनम् ॥ २ ॥

---

अर्जुनः—

निवर्तमानेन तदा महद्दृष्टं ततोऽपरम् ।
पुरं कामगमं दिव्यं पावकार्कसमप्रभम् ॥ १

द्रुमैरत्नमयैश्चित्रैर् भास्वरैश्च पतत्रिभिः ।
पौलोमैः कालकेयैश्च नित्यहृष्टैर्दुरासदम् ॥ २

गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम् ।
सर्वरत्नमयं दिव्यम् अद्भुतोपमदर्शनम् ॥ ३

[1]द्रुमैः पुष्पफलोपेतैस् सर्वरत्नमयैर्वृतम् ।
तथा पतत्रिभिर्दिव्यैर् उपेतं सुमनोहरैः ॥ ४

असुरैर्नित्यमुदितैश् शूलर्ष्टिमुसलायुधैः ।
चापमुद्गरहस्तैश्च स्रग्विभिस्सर्वतो वृतम् ॥ ५

तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन् किमिदं दृश्यतेति वै ॥ ६

---

1. ख—इदमर्धं नास्ति

मातलिः—

पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ॥ ७

तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददाद्वरम् ।
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ॥ ८

अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ।
रमणीयं पुरं चेदं खेचरं सुकृतप्रभम् ॥ ९

सर्वरत्नैस्समुदितं दुर्धर्षममरैरपि ।
[1]सयक्षगन्धर्वगणैः पन्नगासुरराक्षसैः ॥ १०

सर्वकामगुणोपेतं वीतशोकमनामयम् ।
ब्रह्मणो भवनाच्छ्रेष्ठं कालकेयकृतं विभो ॥ ११

तदेतत् खेचरं दिव्यं चरत्यमरवर्जितम् ।
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः ॥ १२

हिरण्यपुरमित्येतत् ख्यायते नगरं महत् ।
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ॥ १३

[2]त एते मुदिता राजन्नवध्यास्सर्वदैवतैः ।
निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः ॥ १४

सुरासुरैरवध्यानां दानवानां धनञ्जय ।

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धद्वयं नास्ति

मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ १५

अर्जुनः—

[1]सुरासुरैरधृष्यांस्तान् अहं ज्ञात्वा महासुरान् ।
अब्रुवं मातलिं हृष्टो याह्येतत् पुरमञ्जसा ॥ १६

त्रिदशेशद्विषो यावत् क्षयमस्त्रैर्नयाम्यहम् ।
[2]न कथञ्चिद्धि मे पापा न वध्या ये सुरद्विषः ॥ १७

उवाह मां ततश्शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ १८

ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ।
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः ॥ १९

ततो नालीकनाराचैर् भल्लैश्शक्त्यृष्टितोमरैः ।
प्रत्यघ्नन् दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ २०

तानहं शस्त्रवर्षेण महता समवारयम् ।
[3]अस्त्रैश्शस्त्रैर्महाराजन् विद्याबलमुपाश्रितः ॥ २१

व्यामोहयं च तान् सर्वान् रथमार्गैश्चरन् रणे ।
तेऽन्योन्यमभिसम्मूढाः पातयन्ति स्म दानवाः ॥ २२

तेषामेवं विमूढानाम् अन्योन्यमभिधावताम् ।

---

1. क-ख-ग—सुरैरधर्ष्यांस्तान् सर्वान् अहं ज्ञात्वा ततः प्रभो ।[पाठान्तरम्]
2. ख—नास्तीदमर्धम्
3. ख—इदमर्धमेव नास्ति

शिरांसि विशिखैर्दीप्तैर् अहरं[1] शतसङ्घशः ॥ २३

ते वध्यमाना दैतेयाः पुरमास्थाय तत् पुनः ।
खमुत्पेतुस्सनगरा मायामास्थाय दानवीम् ॥ २४

ततोऽहं शरवर्षेण महता प्रत्यवारयम् ।
मार्गमावृत्य दैत्यनां गतिं चैषामवारयम ॥ २५

तत्पुरं खचरं दिव्यं कामगं दीप्ततेजसम् ।
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् ॥ २६

अन्तर्भूमौ निपतितं पुनरूर्ध्वं प्रतिष्ठते ।
पुनस्तिर्यक् प्रयात्याशु पुनरप्सु निमज्जति ॥ २७

अमरावतिसङ्काशं पुरं कामग[2]माशुगम् ।
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णां नराधिप ॥ २८

ततोऽहं शरजालेन दिव्यास्त्र[3]घटितेन च ।
अगृह्णां सह दैतेयैस् तत्पुरं भरतर्षभ ॥ २९

विकीर्णं चाक्षयैर्बाणैर् मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन् प्रभग्नं पुरमासुरम् ॥ ३०

ते वध्यमाना मद्बाणैर् वज्रवेगैरयस्मयैः ।
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः ॥ ३१

1. क-ख-ग—च्छिन्नं
2. क-ख-ग—गमंच तत्
3. क-ख-घ—मुदितेनह

ततो मातलिरारुह्य पुरस्तान्निपतन्निव ।
महीमवातरत् क्षिप्रं रथेनादित्यवर्चसा ॥ ३२
ततो रथसहस्राणि षष्टिस्तेषां [1]महात्मनाम् ।
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ॥ ३३
तानहं निशितैर्बाणैर् व्यधमं गृध्रवाजितैः ॥ ३३॥
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ।
नेमे शक्ता मानुषेण युद्धेनेति विचिन्त्य वै ॥ ३४॥
ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयम् ॥ ३५
[2]ततस्तानि सहस्राणि रथिनां चित्रयोधिनाम् ।
अस्त्राणि मम दिव्यानि प्रत्यघ्नन् छनकैरिव ॥ ३६
रथमार्गान् विचित्रांस्ते विचरन्तो महारथाः ।
प्रत्यदृश्यन्त सङ्ग्रामे शतशोऽथ सहस्रशः ॥ ३७
विचित्रमुकुटापीडा विचित्रकवचध्वजाः ।
विचित्राभरणाश्चैव मम प्रीतिकराऽभवन् ॥ ३८
अहं तु शरवर्षैस्तान् अस्त्रप्रमुदितै रणे ।
नाशक्नुवं पीडयितुं ते तु मां प्रत्यपीडयन् ॥ ३९
तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि ।
व्यथितोऽस्मि महायुद्धे भयं चागान्महन्मम ॥ ४०

1. क-ख-घ—महायुधि
2. ख—इदमर्धं नास्ति

ततोऽहं परमायत्तो मातलिं परिपृष्टवान् ।
किमेते मम बाणौघैर् दिव्यास्त्रप्रतिमन्त्रितैः ॥ ४१
न वध्यन्ते महाघोरैस् तत्त्वमाख्याहि पृच्छतः ॥ ४१॥
स मामुवाच पर्याप्तम् त्वमेषां भरतर्षभ ।
[1]तानुद्दिश्याथ मर्माणि प्रतिघातं तदाचर ॥ ४२॥
एतच्छ्रुत्वा तु राजेन्द्र सम्प्रहृष्टस्तमूचिवान् ।
निवर्तय रथं शीघ्रं पश्य चैतान्निपातितान् ॥ ४३॥
एवमुक्तो रथं तत्र मातलिः पर्यवर्तयत् ॥ ४४
ततो मत्वा रणे भग्नं दानवाः प्रतिहर्षिताः ।
विचुक्रुशुर्महाराज स्वरेण महता मुहुः ॥ ४५
अभग्नः कैश्चिदप्येष पाण्डवो रणमूर्धनि ।
अस्माभिस्समरे भग्न इत्येवं सङ्कुशस्तदा ॥ ४६
ततोऽहं देवदेवाय [2]रुद्रायाव्यक्तमूर्तये ।
[3]प्रयतः प्रणतो भूत्वा नमस्कृत्य महात्मने ॥ ४७
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समयोजयम् ।
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ॥ ४८
[4]महत् पाशुपतं दिव्यं सर्वलोकनमस्कृतम् ॥ ४८॥

---

1. ख—इदमर्धं नास्ति
2. क-ख-घ—रुद्राय प्रणतो रणे
3. क-ख-घ—नास्तीदमर्धम्
4. क—नास्तीदमर्धम्

ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम् ।
[1]त्रिमुखं षड्भुजं दीप्तम् अर्कज्वलनमूर्धजम् ॥ ४९॥
लेलिह्यानैर्महानागैः कृतचिह्नममित्रहन् ।
[2]भक्तानुकम्पिनं देवं नागयज्ञोपवीतिनम् ॥ ५०॥
[3]विचिन्त्याहं तदस्त्रं तु घोरं रौद्रं सनातनम् ।
[4]दृष्ट्वा गाण्डीवसंयोगम् आनीय भरतर्षभ ॥ ५१॥
नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे ।
मुक्तवान् दानवेन्द्राणां पराभावाय भारत ॥ ५२॥
मुक्तमात्रे ततस्तस्मिन् रूपाण्यासन् सहस्रशः ।
मृगाणामथ सिंहानां व्यालानां च विशां पते ॥ ५३॥
ऋक्षाणां महिषाणां च पन्नगानां गवां तथा ।
गजानां [5]चमराणां च वृषभाणां च वाजिनाम् ॥ ५४॥
ऋषभाणां वराहाणां मार्जाराणां तथैव च ।
[6]ऋक्षाश्वगजवक्त्राणाम् उलूकानां तथैव च ॥ ५५॥
मीनवायसरूपाणां नानावक्त्रप्रचारिणाम् ।
सालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ॥ ५६॥

---

1. क—अर्धद्वयं नास्ति; ख—नास्तीदमर्धम्
2. घ—नास्तीदमर्धम्
3. क-ख-घ—सोऽहं ततस्तद
4. ख—इदमर्धं नास्ति
5. क-ख-घ—शरभाणां च चमराणां च सर्वशः
6. ख—अर्धद्वयं नास्ति

गृध्राणां गरुडानां च मकाराणां तथैव च ।
पिशाचानां च यक्षाणां रक्षसां च सुरद्विषाम् ॥ ५७॥

[1]गुह्यकानां च सङ्ग्रामे नैर्ऋतानां तथैव च ।
[2]सर्पास्य गजवक्त्राणाम् उलूकानां तथैव च ॥ ५८॥

[3]दीनवायसकर्माणां नानाशस्त्रासिपाणिनाम् ।
तथैव यातुधानानां गदामुद्गरधारिणाम् ॥ ५९॥

एतैश्चान्यैश्च बहुभिर् नानारूपधरैस्तदा ।
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ६०॥

त्रिशिरोभिश्चतुर्दंष्ट्रैश् चतुरास्यैश्चतुर्भुजैः ।
अनेकरूपसंयुक्तैर् [4]मांसमेदोवसाशिभिः ॥ ६१॥

अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ।
अर्कज्वलनतेजोभिर् वज्राशनिसमप्रभैः ॥ ६२॥

अद्रिसारमयैश्चान्यैर् बाणैररिविदारणैः ।
न्यहनं दानवान् सर्वान् मुहूर्तेनैव भारत ॥ ६३॥

गाण्डीवास्त्रप्रणुन्नांस्तान् गतासून्नभसश्च्युतान् ।
दृष्ट्वाऽहं प्राणमं भूयस् त्रिपुरघ्नाय वेधसे ॥ ६४॥

---

1. ख—अर्धचतुष्टयं नास्ति 2. क—नास्तीदमर्धम्
3. घ—तथा मुसलहस्तानां नानाशस्त्रास्त्रधारिणाम्। [पाठान्तरम्]
4. ख—वज्राशनिसमप्रभैः मध्ये अर्धद्वयं नास्ति ।

तथा रौद्रास्त्रनिष्पिष्टान् दिव्याभरणभूषितान् ।
निशाम्य परमं हर्षम् अगमद् देवसारथिः ॥ ६५॥

तदसह्यं कृतं कर्म देवैरपि सुदुस्सहम् ।
दृष्ट्वा मां पूजयामास मातलिश्शक्रसारथिः ॥ ६६॥

उवाच वचनं चेदं प्रीयमाणः कृताञ्जलिः ।
हतांस्तान् दानवान् दृष्ट्वा मया सङ्ख्ये सहस्रशः ॥ ६७॥

मातलिः—

सुरासुरैरसह्यं हि कर्म यत् साधितं त्वया ।
न ह्येतत् संयुगे कर्तुम् अपि शक्तस्सुरेश्वरः ॥ ६८॥

ध्रुवं धनञ्जय प्रीतस् त्वयि शक्रः पुरंदर ॥ ६९

सुरासुरैरवध्यं हि पुरमेतत् खगं महत् ।
त्वया विमथितं वीर स्ववीर्याच्च तपो बलात् ॥ ७०

अर्जुनः—

विध्वस्ते तु पुरे तस्मिन् दानवेषु हतेषु च ।
विनदन्त्यः स्त्रियस्सर्वा निष्पेतुर्नगराद्बहिः ॥ ७१

प्रकीर्णकेश्यो व्यथितास् सुदीनाः करुणस्वनाः ।
कुरर्य इव वाश्यन्त्यो दुःखिता वा मुहुर्मुहुः ॥ ७२

पेतुः पुत्रान् पितॄन् भ्रातॄन् शोचमाना महीतले ।
रुदत्यो दीनकण्ठ्यस्तु निनदन्त्यो हतेश्वराः ॥ ७३

उरांसि पाणिभिर्घ्नन्त्यो [1]विस्रस्तस्रग्विभूषणाः ॥ ७३॥
तच्छोकयुक्तमश्रीमद् दुःखशोकसमागमम् ।
न बभौ दानवपुरं हतत्विट्कं हतेश्वरम् ॥ ७४॥
गन्धर्वनगराकारं हृतनागमिव ह्रदम् ।
शुष्कवृक्षमिवारण्यम् अदृश्यमभवत् पुरम् ॥ ७५॥
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाहवात् ॥ ७६॥
हिरण्यपुरमारुह्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहं शक्रमागमम् ॥ ७७॥
मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ।
सर्वं विश्रावयामास यथाभूतं महाद्युते ॥ ७८॥
हिरण्यपुरघातं च मायानां च निवारणम् ।
निवातकवचानां च वधं सङ्ख्ये महौजसाम् ॥ ७९॥
कालकेयवधं चैव अद्भुतं रोमहर्षणम् ।
तच्छ्रुत्वा भगवान् प्रीतस् सहस्राक्षः पुरन्दरः ॥ ८०॥
मरुद्भिस्सहितश्श्रीमान् साधुसाध्वित्यथाब्रवीत् ।
परिष्वज्य च मां प्रेम्णा मूर्ध्नि चाघ्राय सस्मितम् ॥ ८१॥
ततस्स मां देवराजस् समाश्वास्य पुनः पुनः ।

1. अ—विस्रस्तवस्त्रभूषणाः ; क-ख-ग—प्रस्रस्ताम्बरभूषणाः

अब्रवीद्विबुधैस्सार्धम् इदं सुमधुरं वचः ॥ ८२॥

इन्द्रः—

अतिदेवासुरं कर्म कृतमेव त्वया रणे ।
गुर्वर्थश्च कृतः पार्थ महाशत्रून् घ्नता मम ॥ ८३॥

एवमेव सदा भाव्यं स्थिरेणाजौ धनञ्जय ।
असम्मूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् । ८४॥

अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्वैस् सपक्षिगणपन्नगैः ॥ ८५॥

वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम् ।
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ८६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

॥ ३५ ॥ यक्षयुद्धपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ८६॥ श्लोकाः]

---

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥



अर्जुनेन युधिष्ठिरं प्रति इन्द्रेण स्वस्मै सानुग्रहं कवचकिरीटादिदान-कथनम् ॥ १ ॥ तथा युधिष्ठिरेण दिव्यास्त्रप्रदर्शनचोदनायां श्वःप्रदर्शनप्रति-ज्ञानम् ॥ २ ॥

---

अर्जुनः—

ततो मामतिविश्वस्तं संरूढशरविक्षतम् ।
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ॥ १

इन्द्रः—

दिव्यास्त्राणि च सर्वाणि त्वयि तिष्ठन्ति भारत ।
न त्वाऽभिभवितुं शक्तो मानुषो भुवि कश्चन ॥ २

भीष्मो द्रोणः कृपः कर्णश् शकुनिस्ससुयोधनः ।
सङ्ग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ॥ ३

अर्जुनः—

इदं च मे तनुत्राणं प्रायच्छन्मघवान् विभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ ४

देवदत्तं च मे शङ्खं देवः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥ ५

ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ॥ ६

एवं सम्पूजितस्तत्र सुखमस्म्युषितो नृप ।
इन्द्रस्य भवने पुण्ये गन्धर्वशिशुभिस्सह ॥ ७

ततो मामब्रवीच्छक्रः प्रीतिमानमरैस्सह ॥ ७॥

इन्द्रः—

समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ॥ ८

अर्जुनः—

एवमिन्द्रस्य भवने पञ्च वर्षाणि भारत ।

उषितानि मया राजन् स्मरता द्यूतजं कलिम् ॥ ९
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ।
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि ॥ १०

युधिष्ठिरः—

दिष्ट्या धनञ्जयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ ११
दिष्ट्या च भगवान् स्थाणुर् देव्या सह परंतप ।
साक्षाद्दृष्टस्सुयुद्धेन तोषितश्च त्वयाऽनघ ॥ १२
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
[1]दिष्ट्या वर्धामहे सर्वे दिष्ट्याऽसि पुनरागतः ॥ १३
अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम् ।
पश्यामि भूमिं कौन्तेय त्वया मे प्रतिपादिताम् ॥ १४
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ १४॥
तानि त्विच्छामि ते द्रष्टुं दिव्यान्यस्त्राणि भारत ।
यैस्तथा वीर्यवन्तस्ते निवातकवचा हताः ॥ १५॥

अर्जुनः—

श्वः प्रभाते भवान् द्रष्टा दिव्यान्यस्त्राणि सर्वशः ।
निवातकवचा घोरा यैर्मया विनिपातिताः ॥ १६॥

---

1. क-घ—पार्थैश्च संयुक्तो; ख—इदमर्धं नास्ति

वैशम्पायनः—

एवमागमनं तत्र कथयित्वा धनञ्जयः ।
भ्रातृभिस्सहितस्सर्वै रजनीं तामुवास ह ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये १७॥ श्लोकाः]

---

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

अर्जुनेन युधिष्ठिराय दिव्यास्त्रप्रदर्शनम् ॥ १ ॥ अस्त्रतेजसा जगत्क्षोभे सति इन्द्रचोदनया नारदेनार्जुनं प्रत्यस्त्रप्रदर्शनप्रतिषेधनम् ॥ २ ॥

---

वैशम्पायनः—

तस्यां रजन्यां व्युष्टायां धर्मराजो युधिष्ठिरः ।
उत्थायावश्यकार्याणि कृतवान् भ्रातृभिस्सह ॥ १
ततस्सञ्चोदयामास सोऽर्जुनं भ्रातृनन्दनम् ॥ १॥

युधिष्ठिरः—

दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥ २

वैशम्पायनः—

ततो धनञ्जयो राजन् देवैर्दत्तानि पाण्डवः ।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥ ३

यथान्यायं महातेजाः परमं शौचमास्थितः ।
नमस्कृत्य त्रिनेत्राय वासवाय च पाण्डवः ॥ ४

[1]त्रिकूबरं सुभद्राश्वं त्रिभिर्वंशैस्त्रिवेणुमत् ।
पार्थिवं रथमास्थाय शोभमानो धनञ्जयः ॥ ५

ततस्सुदंसितस्तेन कवचेन सुवर्चसा ।
धनुरादाय गाण्डीवं देवदत्तं च वारिजम् ॥ ६

शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः ।
[2]अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे ॥ ७

तेन प्रयोक्ष्यमाणेन दिव्यान्यस्त्राणि भारत ।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा ॥ ८

क्षुभितास्सरितश्चैव तथैव च महोदधिः ।
शैलाश्चापि व्यदीर्यन्त न ववौ च समीरणः ॥ ९

न बभासे सहस्रांशुर् न जज्वाल च पावकः ।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथञ्चन ॥ १०

अन्तर्भूमिगता ये च प्राणिनो जनमेजय ।
पीड्यमानास्समुत्थाय पाण्डवं पर्यवारयन् ॥ ११

वेपमानाः प्राञ्जलयस् ते सर्वे विनताननाः ।

---

1. क-ख-घ—गिरिपक्षं पादपाङ्गं गिरित्रेणुं त्रिवेणुमत्। [पाठान्तरम्]
2. क-घ—अर्धद्वयं नास्ति

दह्यमानास्तदाऽस्त्रैस्ते याचन्ति स्म धनञ्जयम् ॥ १२

ततो ब्रह्मर्षयश्चैव सिद्धा ये च महर्षयः ।
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे ॥ १३

देवर्षयश्च प्रवरास् तथैव च दिवौकसः ।
यक्षराक्षसगन्धर्वास् तथैव च पतत्रिणः ॥ १४

ततः पितामहश्चैव लोकपालाश्च सर्वशः ।
भगवांश्च महादेवस् सगणोऽभ्याययौ तदा ॥ १५

ततो वायुर्महाराज दिव्यैर्माल्यैस्सुगन्धिभिः ।
अभितः पाण्डवं चित्रैर् अलञ्चक्रे समन्ततः ॥ १६

जगुश्च गाथा विविधा गन्धर्वास्सुरचोदिताः ।
[1]ननृतुस्सङ्घशश्चैव राजन्नप्सरसां गणाः ॥ १७

तस्मिंश्च तादृशे काले नारदश्चोदितस्सुरैः ।
आगम्याह वचः पार्थं श्रवणीयमिदं नृप ॥ १८

नारदः—

अर्जुनार्जुन मा युङ्क्ष्व दिव्यान्यस्त्राणि भारत ।
[2]नैतानि निरधिष्ठानं प्रयुज्यन्ते कथञ्चन ॥ १९
[3]प्रयोगे हि महान् दोषो ह्यस्त्राणां कुरुनन्दन ॥ १९॥

1. ख—अर्धद्वयं नास्ति 2. घ—अर्धत्रयं नास्ति
3. क—अधिष्ठाने च नान्यस्त प्रयुञ्जीत कथञ्चन । [अधिकः पाठः]

एतानि रक्ष्यमाणानि धनञ्जय यथागमम् ।
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः ॥ २०॥

अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव ।
प्रभवन्ति विनाशाय मैवं भूयः कृथाः क्वचित् ॥ २१॥

अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे ।
योज्यमानानि ते भ्रात्रा द्विषतामवमर्दने ॥ २२॥

वैशम्पायनः—

निवार्याथ ततः पार्थं सर्वे देवा यथागतम् ।
[1]जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ ॥ २३॥

तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः ।
तस्मिन्नेव वने हृष्टास् तऊषुस्सह कृष्णया ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ ३५ ॥ यक्षयुद्धपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]
॥ समाप्तं च यक्षयुद्धपर्व ॥

---

1. ख—इदमर्धं नास्ति

## ॥ अष्टाचत्वारिंशदधिकशततमोऽध्यायः ॥

(आजगरपर्व ॥)

अर्जुनसमागमानन्तरं युधिष्ठिरेण गन्धमादनादवतरणाध्यवसायः ॥ १ ॥ लोमशेन पाण्डवान् प्रति उपाशीर्वचनपूर्वकं स्वर्गं प्रति गमनम् ॥ २ ॥ गन्धमादनादवतीर्णैः पाण्डवैः क्रमेण कैलासवृषपर्वसुबाह्वादिनिवासगमनपूर्वकं पुनर्द्वैतवनमेत्य सरस्वतीतीरे सुखविहरणम् ॥ ३ ॥

जनमेजयः—

तस्मिन् कृतास्त्रे रथिनां प्रधाने
प्रत्यागते भवनाद्वृत्रहन्तुः ।
अतः परं किमकुर्वन्त पार्थास्
समेत्य शूरेण धनञ्जयेन ॥ १

वैशम्पायनः—

वनेषु तेष्वेव तदा नरेन्द्रास्
सहार्जुनेनेन्द्रसमेन वीराः ।
तस्मिंश्च शैलप्रवरे सुरम्ये
धनेश्वराक्रीडगता विजह्रुः ॥ २

[1]वेश्मानि तान्यप्रतिमानि पश्यन्
क्रीडाश्च नानाद्रुमसन्नि[2]रुद्धाः ।

1. ख—इदमर्धद्वयं नास्ति 2. क-घ—कर्षाः

चचार धन्वी बहुधा नरेन्द्रस्
सोऽस्त्रेषु यत्तस्सततं किरीटी ॥ ३
अवाप्य वासं नरदेवपुत्राः
प्रसादजं वैश्रवणस्य राज्ञः ।
न प्राणिनां ते स्पृहयन्ति राजन्
शिवश्च कालस्स बभूव तेषाम् ॥ ४
समेत्य पार्थेन यथैकरात्रम्
ऊषुस्समास्तत्र तथा चतस्रः ।
पूर्वाश्च षट् तत्र च पाण्डवानां
शिवा बभूवुर्वसतां वनेषु ॥ ५
ततोऽब्रवीद्वायुसुतस्तरस्वी
[1]जिष्णुश्च राजानमुपोपविश्य ।
यमौ च वीरौ सुरराजकल्पा-
वेकान्तमास्थाय हितं प्रियं च ॥ ६

भीमसेनः—

[2]तव प्रतिज्ञां कुरुराज सत्यां
चिकीर्षमाणास्त्वदनुप्रियं च ।
[3]इमे हि गच्छाम वनान्यपास्य
सुयोधनं सानुचरं निहन्तुम् ॥ ७

---

1. ख—जिष्णुंष 2. अ—नासीदमर्धम्
3. क-ख-ब—ततोऽभिगच्छेम

एकादशं वर्षमिदं वसामस्
सुयोधनेनात्तसुखास्सुखार्हाः ।
तं वञ्चयित्वाऽसमशीलबुद्धिम्
अज्ञातवासं सुखमाप्नुयामः ॥ ८

तवाज्ञया पार्थिव निर्विशङ्का
विहाय मानं विचरामो वनानि ।
समीपवासेन [1]विमोहितास्ते
ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ९

संवत्सरं तत्तु विहृत्य गूढं
नराधमं तं सुखमुद्धरेम ।
निर्यात्य वैरं सफलं सुपुष्पम्
तस्मै नरेन्द्राधमपूरुषाय ॥ १०

दुर्योधनायानुचरैर्वृताय
ततो महीं प्राप्नुहि धर्मराज ।
स्वर्गोपमं शैलमिमं चरद्भिश्
शक्यो विहन्तुं नरदेव शोकः ॥ ११

कीर्तिस्तु ते भारत पुण्यगन्धा
नश्येद्धि लोकेषु चराचरेषु ।

1. क—तिरोहितांस्ते; ख—विलोभितास्ते; व—तिरोहितास्ते

[1]तत् प्राप्य राज्यं कुरुपुङ्गवानां
शक्यं महत् प्राप्तुमथ क्रियाश्च ॥ १२

इदं तु शक्यं सततं नरेन्द्र
प्राप्तुं त्वया यल्लभसे कुबेरात् ।
कुरुष्व बुद्धिं द्विषतां वधाय
कृतागसां भारत निग्रहेषु ॥ १३

तेजस्तवोग्रं न सहेत राजन्
समेत्य साक्षादपि वज्रपाणिः ।
न हि व्यथां जातु करिष्यतस्तौ
समेत्य देवैरपि धर्मराज ॥ १४

त्वदर्थसिद्ध्यर्थमभिप्रवृत्तौ
सुपर्णकेतुश्च शिनेश्च नप्ता ।
यथैव कृष्णोऽप्रतिमो बलेन
तथैव राजन् स शिनिप्रवीरः ॥ १५

तवार्थसिद्ध्यर्थमभिप्रवृत्तौ
यथैव कृष्णस्सह यादवैस्तैः ।
तथैव चेमौ नरदेववर्य
यमौ च वीरौ कृतिनौ प्रयोगे ॥ १६

1. ख—इदमर्धद्वयं नास्ति

[1]त्वदर्थयोगप्रभवप्रधानाश्
शमं करिष्याम परान् समेत्य ॥ १६॥

वैशम्पायनः—
ततस्तदाज्ञाय मतं महात्मा
तेषां स धर्मस्य सुतो वरिष्ठः ॥
प्रदक्षिणं स्थानमुपेत्य राजा
पर्याक्रमद्वैश्रवणस्य राज्ञः ॥ १७॥
आमन्त्र्य वेश्मानि सरांसि नद्यस्
सर्वाणि रक्षांसि स धर्मराजः ।
यथागतं मार्गमवेक्षमाणः
पुनर्गिरिं चैव निरीक्षमाणः ॥ १८॥
समाप्तकर्मा सहितस्सुहृद्भिर्
जित्वा सपत्नान् प्रतिलभ्य राज्यम् ।
शैलेन्द्र भूयस्तपसा धृतात्मा
द्रष्टा तवास्मीति मतिं चकार ॥ १९॥
वृतस्स सर्वैरनुजैर्द्विजैश्च
तेनैव मार्गेण पुनर्निवृत्तः ।
उवाह चैनान् [2]गणशस्तथैव
घटोत्कचः पर्वतनिर्झरेषु ॥ २०॥

1. क—इदमर्धं नास्ति 2. अ—सगणा

तान् प्रस्थितान् प्रीतमना महर्षिः
पितेव पुत्राननुशिष्य सर्वान् ।
स लोमशो दिवमेवोत्तमश्रीर्
जगाम तेषां विजयं तथोक्त्वा ॥ २१॥

तेनानुशिष्टास्त्वार्ष्टिषेणेन चापि
तीर्थानि रम्याणि तपोवनानि ।
महान्ति चान्यानि सरांसि पार्थास्
सम्पश्यमानाः प्रययुर्नराग्र्याः ॥* २२॥

नगोत्तमं प्रस्रवणैरुपेतं
सदिग्गजैः किन्नरपक्षिसङ्घैः ।
सुखं [1]निवासं जहतां हि तेषां
न प्रीतिरासीद् भरतर्षभाणाम् ॥ २३॥

ततस्तु तेषां पुनरेव हर्षः
कैलासमालोक्य महान् बभूव ।
कुबेरकान्तं भरतर्षभाणां
महीधरं वारिधरप्रकाशम् ॥ २४॥

[2]समुच्छ्रयान् पर्वतसन्निरोधान्
गोष्ठान गिरीणां गिरिगह्वराणि ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. अ—निवासो जगतां हितैषिणां 2. ख—इदमर्धं नास्ति

वहुप्रकाराणि समीक्ष्य राजन्
स्थलानि निम्नानि च तत्र तत्र ॥ २५॥

तथैव चान्यानि महावनानि
मृगद्विजानेकपसेवितानि ।
आलोकयन्तोऽभिययुः प्रतीतास्
ते धन्विनः खड्गधरा नराग्र्याः ॥ २६॥

वनानि रम्याणि सरांसि नद्यो
गुहा गिरीणां गिरिगह्वराणि ।
[1]एते निवासास्सततं वभूवुर्
निशामुखं प्राप्य नरर्षभाणाम् ॥ २७॥

ते दुर्गवासं वहुधा निरुष्य
व्यतीत्य कैलासमचिन्त्यरूपम् ।
आसेदुरत्यर्थमनोरमं तु
तमाश्रमाग्र्यं वृषपर्वणस्ते ॥ २८॥

[2]समेत्य राज्ञा वृषपर्वणा ते
प्रत्यर्चितास्तेन च वीतमोहाः ।
शशंसिरे विस्तरतः प्रवासं
शिवं यथावद्वृषपर्वणस्ते ॥ २९॥

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

सुखोषितास्तत्र त एकरात्रं
　पुण्याश्रमे देवमहर्षिजुष्टे ।
अभ्याययुस्ते बदरीं विशालां
　सुखेन वीराः पुनरेव वासम् ॥ ३०॥

ऊषुस्ततस्तत्र महानुभावा
　नारायणस्थानगताः नराग्र्याः ।
कुबेरकान्तां नलिनीं विशोकास्
　सम्पश्यमानास्सुरसिद्धजुष्टाम् ॥ ३१॥

[1]तां चाथ दृष्ट्वा नलिनीं विशोकाः
　पाण्डोः सुतास्सर्वनरप्रधानाः ।
ते रेमिरे नन्दनवासमेत्य
　द्विजर्षभा वीतभया यथावत् ॥ ३२॥

ततः क्रमेणोपययुश्च वीरा
　यथागतेनैव पथा नराग्र्याः ।
विहृत्य मासं सुखिनो बदर्यां
　किरातराज्ञो विषयं सुबाहोः ॥ ३३॥

[2]चीनांस्तुषारान् दरदान् विदर्भान्
　देशान् कुणिन्दस्य च भूरिरम्यान् ।

1. अ-स—नास्तीदमर्धम्　　2. स—इदमर्धं नास्ति

अतीत्य दुर्गं हिमवत्प्रदेशं
पुरं सुबाहोर्ददृशुर्नृवीराः ॥ ३४॥

[1]श्रुत्वा च तान् पार्थिव पुत्रपौत्रान्
प्राप्तान् सुबाहुर्विषयान् समग्रान् ।
प्रत्युद्ययौ प्रीतियुतस्तदानीं
तं चाभ्यनन्दन् वृषभाः कुरूणाम् ॥ ३५॥

समेत्य राज्ञा तु सुबाहुना ते
सुतैर्विशोकप्रमुखैश्च सर्वैः ।
सहेन्द्रसेनैः परिचारमुख्यैः
पौरोगवा ये च महानसस्थाः ॥ ३६॥

सुखोषितास्तत्र त एकरात्रं
सूतानुपादाय रथांश्च सर्वान् ।
घटोत्कचं सानुचरं विसृज्य
ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ ३७॥

तस्मिन् गिरौ प्रस्रवणोपपन्ने
हिमोत्तरीयारुणपाण्डुवर्णे ।
विशाखयूपं समुपेत्य चक्रुस्
तदा निवासं पुरुषप्रवीराः ॥ ३८॥

1. ख—अर्धद्वयं नास्ति

वराहनानामृगपक्षिजुष्टं
महावनं चैत्ररथं[1] प्रहृष्टाः ।
शिवेन यात्वा मृगयाप्रधानास्
संवत्सरं तत्र वने विजह्रुः ॥ ३९॥

तत्रासमादातिबलं भुजङ्गं
क्षुधार्दितं मृत्युमिवोग्ररूपम् ।
वृकोदरः पर्वतकन्दरायां
विषादमोहव्यथितान्तरात्मा ॥ ४०॥

द्वीपोऽभवद्यत्र वृकोदरस्य
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
अमोचयच्चैनमनन्ततेजा
ग्राहेण संवेष्टितसर्वकायम् ॥ ४१॥

ते द्वादशं वर्षमथोपयातं
वने विहर्तुं कुरवः प्रयाताः ।
तस्माद्वनाच्चैत्ररथात् प्रहृष्टाश्
श्रिया ज्वलन्तस्तपसा च युक्ताः ॥ ४२॥

ततः प्रयाता मरुधन्वपार्श्वं
तदा धनुर्वेदरतिप्रधानाः ।

1. क-ख-घ—प्रविष्टाः

सरस्वतीमेत्य निवासकामास्
[1]सरस्ततो द्वैतवनं प्रतीयुः ॥ ४३॥

[2]श्रुत्वैव तान् द्वैतवनं प्रविष्टान्
निवासिनस्तत्र ततोऽभिजग्मुः ।
तपोदमाचारसमाधियुक्तास्
तृणोदपात्रावरणाश्मकुट्टाः ॥ ४४॥

[3]प्लक्षाक्षरौहीतकवेतसाश्च
स्नुही बदर्यः खदिराश्शिरीषाः ।
बिल्वेङ्गुदाः पीलुशमीकरीरास्
सरस्वतीतीररुहा बभूवुः ॥ ४५॥

तां यक्षगन्धर्वमहर्षिकान्ताम्
अगाधभूतामिव देवतानाम् ।
सरस्वतीं प्रीतियुताश्चरन्तस्
सुखं विजह्रुर्नरदेवपुत्राः ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
॥ ३६ ॥ आजगरपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

---

1. क-व—निवासिनस्तत्र ततोऽभिजग्मुः; ख—सरस्तथा
2. क-व—नास्तीदमर्धम्
3. क-ख-व—प्लक्षाश्च नागार्जुनवेतसाश्चमूस्नुही

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

वने मृगयार्थमटतो भीमस्य महताऽजगरेण ग्रहणम् ॥

जनमेजयः—

कथं नागायुतप्राणो भीमो भीमपराक्रमः ।
भयमाहारयत् तीव्रं तस्मादजगरान्मुने ॥ १
पौलस्त्यं यो[1]ह्वयेद् युद्धे धनदं बलदर्पितः ।
नलिन्यां कदनं कृत्वा वराणां यक्षरक्षसाम् ॥ २
[2]तं शंससि भयाविष्टम् आपन्नमरिसूदनम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ३

वैशम्पायनः—

बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम् ।
प्राप्तानामाश्रमं राजन् राजर्षेर्वृषपर्वणः ॥ ४
यदृच्छया धनुष्पाणिर् बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगन्धर्वपूजितम् ॥ ५
स ददर्श शुभान् देशान् गिरेर्हिमवतस्तदा ।
देवर्षिसिद्धचरितान् अप्सरोगणसेविताम् ॥ ६
चकोरैरुपचक्रैश्च पक्षिभिर्जीवजीवकैः ।

1. क-ख-घ—ऽभ्ययात्　　2. अ—नास्तीदमर्धम्

कोकिलैर्भृङ्गराजैश्च तत्रतत्र विनादितान् ॥ ७
नित्यपुष्पफलैर्वृक्षैर् [1]हिमसंस्पर्शकोमलैः ।
उपेतान् बहुलच्छायैर् मनोनयननन्दनैः ॥ ८

स सम्पश्यन् गिरिनदीर् वैडूर्यमणिसंनिभैः ।
सलिलैर्हिमसङ्काशैर् हंसकारण्डवायुतैः ॥ ९

वनानि देवदारूणां मेघानामिव वागुराः ।
हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ १०

मृगयां परिधावन् स समेषु मरुधन्वसु ।
विध्यन् मृगाञ् शरैश्शुभ्रैश् चचार सुमहाबलः ॥ ११

स ददर्श महाकायं भुजङ्गं रोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ १२
पर्वताभोगवर्ष्माणं [2]भोगैश्चन्द्रार्कमण्डलैः ।
चित्राङ्ग[3]मङ्गजैश्चित्रैर् हरिद्रासदृशच्छविम् ॥ १३
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहन्तं सृक्किणी मुहुः ॥ १४
त्रासनं सर्वभूतानां कालान्तकयमोपमम् ।

1. ख—अयं पादोऽनन्तरश्च न स्तः
2. ख—अयं पादोऽनन्तरश्च न स्तः
3. क-ख—मजिनैश्चित्रैर्हारिद्रसदृशस्फुटम् ।

निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिवोच्छ्रितम् ॥ १५
स भीमं सहसाऽभ्येत्य पाण्डवं क्षुधितो भृशम् ।
जग्राहाजगरो ग्राह्रो भुजयोरुभयोर्बलात् ॥ १६
तेन संस्पृश्यमानस्य भीमसेनस्य वै तदा ।
संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ १७
दशनागसहस्राणि धारयन्ति हि यद्बलम् ।
[1]तद्बलं भीमसेनस्य भूजयोर्न समं परम् ॥ १८
स तेजस्वी तथा तेन भुजगेन वशीकृतः ।
विस्फुरद्दशनो भीमो न शशाक विचेष्टितुम् ॥ १९
नागायुतसमप्राणस् सिंहस्कन्धो महाभुजः ।
गृहीतो व्यजहात् सत्त्वं वरदानेन मोहितः ॥ २०
स हि प्रयत्नमकरोत् तीव्रमात्मविमोक्षणे ।
न चैनमशकद्वीरः कथञ्चित् प्रतिबाधितुम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

॥ ३६ ॥ आजगरपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. ख—इदमर्धं नास्ति

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

अजगरेण भीमं प्रति स्वस्याजगरत्वप्रापककारणाभिधानम् ॥ १ ॥ दुर्निमित्तदर्शनाद्दुर्मनायमानेन युधिष्ठिरेण भीममार्गानुसरणेनाजगर-गृहीतभीमस्य दर्शनम् ॥ २ ॥

वैशम्पायनः—

स भीमसेनस्तेजस्वी यथा सर्पवशं गतः ।
चिन्तयामास सर्पस्य वीर्यमत्यद्भुतं महत् ॥ १

स उवाच महासत्त्वं [1]को मम ब्रूहि पन्नग ।
कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ॥ २

पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
नागायुतसमप्राणस् त्वया नीतः कथं वशम् ॥ ३

सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा ।
समागताश्च बहुशो निहताश्च महामृधे ॥ ४

नागाश्चापि पिशाचाश्च यक्षाश्चाप्यथ राक्षसाः ।
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ५

किं नु विद्याबलं किं वा वरदानमथो तव ।
उद्यमं ह्यपि कुर्वाणो विवशोऽस्मि कृतस्त्वया ॥ ६

अनित्यो विक्रमो नृणाम् इति मे [2]धीयते मतिः ।

1. क-ख-ग—किमेवं ब्रूहि 2. क-ख-ग—निश्चिता

पृथेदं त्वयि मे नाग बलं प्रतिहतं महत् ॥ ७
इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम् ।
भोगेन महता सर्पस् समन्तात् पर्यवेष्टयत् ॥ ८
निगृह्य तं महाबाहुं ततस्स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ९

सर्पः—

दिष्टस्त्वं क्षुधितस्याद्य भक्ष्यो देवैर्महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ॥ १०
यथा त्विदं मया प्राप्तं भुजङ्गत्वमरिन्दम ।
तदवश्यं त्वया मत्तश् श्रोतव्यं शृणु तन्मम ॥ ११
इमामवस्थां सम्प्राप्तो ह्यहं कोपान्महर्षिणा ।
शापस्यान्तं परिप्रेप्सुस् सर्वस्य कथयामि तत् ॥ १२
नहुषो नाम राजर्षिर् व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषाम् आयोर्वंशकरस्सुतः ॥ १३
सोऽहं शापादगस्त्यस्य ब्राह्मणानवमत्य च ।
इमामवस्थामापन्नः पश्य दैवकृतं मम ॥ १४
त्वां चेदवध्यमायान्तम् अतीव प्रियदर्शनम् ।
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् ॥ १५
न हि मे मुच्यते कश्चित् कदाचिद् ग्रहणं गतः ।

गजो वा महिषो वाऽपि षष्ठे काले नरोत्तम ॥ १६
नासि केवलसर्पेण तिर्यग्योनिषु वर्तता ।
गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ॥ १७
पतता हि विमानाग्रान्मया शक्रासनात् तदा ।
कुरु शापान्तमित्युक्तो भगवान् मुनिसत्तमः ॥ १८
स मामुवाच तेजस्वी कृपयाऽभिपरिप्लुतः ॥ १८॥

अगस्त्यः—

[1]मोक्षस्ते भविता राजन् कस्माच्चित् कालपर्ययात् ॥ १९

सर्पः—

ततोऽस्मि पतितो भूमौ न च मां प्रजहात् स्मृतिः ।
स्मार्तमस्ति पुराणं वै यथैवाधिकृतं तथा ॥ २०
यस्तु मे व्याहृतान् प्रश्नान् प्रतिब्रूयाद्वि[2]शेषतः ।
[3]स मां मोक्षयिता शापाद् इति मामब्रवीदृषिः ॥ २१
[4]गृहीतस्य त्वया राजन् प्राणिनोऽपि बलीयसः ।
बलभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥ २२
इति चाप्यहमश्रौषं वचस्तेषां दयावताम् ।
मयि सञ्जातहार्दानाम् अथ तेऽन्तर्हिता द्विजाः ॥ २३
सोऽहं परमदुष्कर्मा वसामि निरयेऽ[5]शुचौ ।

---

1. ख—यस्त्वयावेष्टितो राजन् मोहमेति महाबलः । [अधिकः पाठः]
2. क-ख-घ—विशेषवित्
3. क—नास्तीदमर्धम्
4. ख—इदमर्धद्वयं नास्ति
5. ख—वसामीह वने शुभे । क-घ—ऽशुभे ।

सर्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते ॥ २४

वैशम्पायनः—

तमुवाच महाबाहुर् भीमसेनो भुजङ्गमम् ॥ २४॥

भीमसेनः—

न ते कुप्ये महासर्प नात्मने द्विजसत्तम ॥ २५

यस्मादभावी भावी वा मनुष्यस्सुखदुःखयोः ।
आगमे यदि वाऽपाये न तत्र ग्लपयेन्मनः ॥ २६

दैवं पुरुषकारेण को वञ्चयितुमर्हति ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २७

पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् ।
इमामवस्थां सम्प्राप्तम् अनिमित्तमिहाद्य माम् ॥ २८

किं तु मां नानुशोचामि तथाऽऽत्मानं विनाशितम् ।
यथा तु विपिने न्यस्तान् भ्रातॄन् राज्यपरिच्युतान् ॥ २९

हिमवांश्च सुदुर्गोऽयं यक्षराक्षससङ्कुलः ।
मां च ते समुद्वीक्षन्तः प्रयतिष्यन्ति विह्वलाः ॥ ३०

[1]विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः ।
धर्मशीला मया ते हि बाध्यन्ते राज्यगृध्नुना ॥ ३१

अथवा नार्जुनो धीमान् विषादमुपयास्यति ।

---

1. ख—इदमर्धं नास्ति

दिव्यास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ३२

समर्थस्स महाबाहुर् एकाह्ना सुमहाबलः ।
देवराजमपि स्थानात् प्रच्यावयितु[1]मञ्जसा ॥ ३३

किं पुनर्धृतराष्ट्रस्य पुत्रं दुर्द्यूतदेविनम् ।
[2]विद्विष्टं सर्वलोकस्य दम्भमोहपरायणम् ॥ ३४

मातरं त्वनुशोचामि कृपणां पुत्रगृध्नुनीम् ।
याऽस्मासु नित्यमाशास्ते महत्त्वमधिकं परैः ॥ ३५

तस्याः कथं त्वनाथाया मद्विनाशाद्भुजङ्गम ।
[3]सफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः ॥ ३६

नकुलस्सहदेवश्च यमौ च गुरुवर्तिनौ ।
मद्बाहुबलतस्तब्धौ नित्यं पुरुषमानिनौ ॥ ३७

[4]निरुत्साहौ भविष्येते भ्रष्टवीर्यपराक्रमौ ।
मद्विनाशात् परिद्यूनाविति मे वर्तते मतिः ॥ ३८

वैशम्पायनः—

एवंविधं बहु तदा विललाप वृकोदरः ।
भुजङ्गभोगसंरुद्धो नाशकच्च विचेष्टितुम् ॥ ३९

युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः ।

---

1. क-ख-ग—मोजसा
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. अ—नास्तीदमर्धम्

अनिष्टदर्शनान् घोरान् उत्पातान् परिचिन्तयन् ॥ ४०

दारुणं ह्यशिवं नादं शिवा दक्षिणतस्स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ॥ ४१

एकपक्षाक्षिचरणा नर्तका घोरदर्शना ।
[1]रक्तं रुदन्ती ददृशे प्रत्यादित्यमपस्वनम् ॥ ४२

प्रववौ चानिलो रूक्षश् चण्डश्शर्करकर्षणः ।
अपसव्यानि सर्वाणि मृगपक्षिरुतानि च ॥ ४३

पृष्ठतो वायसः कृष्णो याहियाहीति वाशति ।
मुहुर्मुहुः प्रस्फुरते दक्षिणश्च भुजस्तथा ॥ ४४

हृदयं चरणश्चापि वामोऽस्य परितप्यते ।
सव्यस्याक्ष्णो विकारश्चाप्यनिष्टस्समपद्यत ॥ ४५

धर्मराजस्स मेधावी शङ्कमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ ४६

शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ॥ ४६॥

स प्रतस्थे महाबाहुर् धौम्येन सहितः प्रभुः ॥ ४७

द्रौपद्या रक्षणं कार्यम् इत्युवाच धनञ्जयम् ।
नकुलं सहदेवं च व्यादिदेश द्विजान् प्रति ॥ ४८

---

1. क-घ—रुधिरं वमतो दर्शत् प्रत्यादित्यं खरस्वनात् ।
ख—वमन्तो रुधिरं भूरि प्रत्यादित्यं खरस्वनाः । [पाठान्तरम्]

स तस्य पदमुन्नीय तस्मादेवाश्रमात् प्रभुः ।
[1]मृगयामास कौन्तेयो भीमसेनं महावने ॥ ४९

स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर् भीमस्य परिचिह्निताम् ॥ ५०

धावतस्तस्य वीरस्य मृगार्थे वातरंहसः ।
ऊरु[2]वेगविनिर्भग्नान् द्रुमान् व्यावर्जितान् पथि ॥ ५१

स गत्वा तैस्तथा चिह्नैर् ददर्श गिरिगह्वरे ।
गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ ३६ ॥ आजगरपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ५२ श्लोकाः ]

---

## ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥

---

युधिष्ठिराजगरयोः संवादः ॥

---

वैशम्पायनः—

युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम् ।
भ्रातरं दयितं धीमान् इदमित्यब्रवीद् वचः ॥ १

---

1. ख-ध—अर्धद्वयं नास्ति
2. क-ख-ध—वात ख—पातविनिर्भिन्नान्

युधिष्ठिरः—
कुन्तीमातः कथमिमं पातकं त्वमिहाप्तवान् ।
कश्चायं पर्वताकारभोगः पन्नगसत्तमः ॥ २
वैशम्पायनः—
धर्मराजं समालक्ष्य भ्राता भ्रातरमग्रजम् ।
कथयामास तत् सर्वं ग्रहणादिविचेष्टितम् ॥ ३
युधिष्ठिरः—
देवो वा दैत्यनाथो वा उरगो वा भवान् यदि ।
सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः ॥ ४
किमाहृत्य विदित्वा किं प्रीतिस्ते स्याद्भुजङ्गम ।
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम् ॥ ५
सर्पः—
नहुषो नाम राजाऽहम् आसं पूर्वस्तवानघ ।
प्रथितः पञ्चमस्सोमाद् आयोः पुत्रो नराधिप ॥ ६
क्रतुभिस्तपसा चैव स्वाध्यायेन बलेन च ।
त्रैलोक्यैश्वर्य[1]मप्राप्यं प्राप्य विक्रमणेन च ॥ ७
[2]तदैश्वर्यं समासाद्य दर्पो मामगमत् तदा ।
सहस्रं हि द्विजातीनां वहन्ति शिबिकां मम ॥ ८
ऐश्वर्यमदमत्तोऽहम् अवमत्य ततो द्विजान् ।
इमामगस्त्येन दशाम् आनीत इति मे स्मृतिः ॥ ९

1. क-ख-घ—मप्यग्रं प्राप्तो विक्रमणेन च ।
2. ख—इदमर्धं नास्ति

न तु मामजहात् प्रज्ञा यावदन्वेति पाण्डवः ।
तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः ॥ १०

षष्ठे काले [1]समाहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यदपि कामये ॥ ११

प्रश्नानुच्चारितान् सत्यं व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ १२

युधिष्ठिरः—

ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छकुयां प्रीतिम् आहर्तुं ते भुजङ्गम ॥ १३

वेद्यं तु ब्राह्मणेनेह तद्भवान् वेत्ति केवलम् ।
सर्पराज हि तच्छ्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ १४

सर्पः—

[2]ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिनोमि ते ॥ १५

युधिष्ठिरः—

सत्यं दानं क्षमा शीलम् आनृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥ १६

वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।

---

1. घ—ममाहारं ख—यमाहारः
2. ख—शरीरनिष्ठं ब्राह्मण्यमात्मनिष्ठमथापि वा । [अधिकः पाठः]

यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥ १७

सर्पः—

चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ॥ १८

आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ।
वेद्यं यच्चास्य निर्दुःखम् असुखं च नराधिप ॥ १९

ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ १९॥

युधिष्ठिरः—

शूद्रे तु यद्भवेल्लक्ष्यं द्विजे चैतन्न दृश्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च ॥ २०॥

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणस्स्मृतः ।
तत्रैतन्न भवेत् सर्व तं शूद्रमिति निर्दिशेत् ॥ २१॥

यत् पुनर्भवता प्रोक्तं न वेद्यं विद्यतेति ह ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ २२॥

एवमेतन्मतं सर्प ताभ्यां हीनं तु विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ २३॥

एवं वै सुखदुःखाभ्यां हीनमस्ति पदं क्वचित् ।
एषा मम मतिस्सर्प यथा वा मन्यते भवान् ॥ २४॥

सर्पः—

यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।

[1]वृथा जातिस्तदायुष्मन् कृतिर्या चात्र विद्यते ॥ २५॥

युधिष्ठिरः—

जातिरत्र महासर्प मनुष्यत्वे महामते ।
सङ्करात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ २६॥

सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
[2]वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ २७॥

इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ २८॥

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ।
[3]ततस्तु नामकरणं ततश्चौलं विधीयते ॥ २९॥

तथोपनयनं प्रोक्तं द्विजातीनां यथाक्रमम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ३०॥

वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते ।
अस्मिन्नेवं मतिर्द्वैधा मनुस्स्वायंभुवोऽब्रवीत् ॥ ३१॥

कृतकृत्यास्सर्ववर्णा यदि वृत्तं न पश्यति ।
[4]संस्कारस्तत्र नागेन्द्र फलभाक् न समीक्ष्यते ॥ ३२॥

---

1. क-ख-घ—व्यर्था जातिस्तदायुष्मन् जातिर्या चात्र दृश्यते ।[पाठान्तरम्]
2. ख—इदमर्धं नास्ति 3. क-घ—नासीदमर्धम्
4. क-घ—बलवाचा समीक्ष्यते
ख—संस्कारस्तत्र नागेन्द्र बलवान् प्रसमीक्ष्यते । [पाठान्तरम्]

यत्वेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वम् उक्तवान् भुजगोत्तम ॥ ३३॥

सर्पः—

श्रुतं विदितवेद्यस्य तव वाक्यं महामते ।
भक्षयेयमहं कस्माद् भ्रातरं ते वृकोदरम् ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

॥ ३६ ॥ आजगरपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये ३४॥ श्लोकाः ]

---

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

स्वप्रश्नस्योत्तरदानतुष्टेनाजगररूपिणा नहुषेण युधिष्ठिरं प्रति स्वस्याजगरभावसम्भवहेतुकथनपूर्वकं भीमं विमुच्य पुनः स्वर्गं प्रति गमनम् ॥

---

युधिष्ठिरः—

भवानेतादृशो लोके वेदवेदाङ्गपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ १

सर्पः—

[1]पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतस्स्वर्गं गच्छेदिति मतिर्मम ॥ २

1. ख—एतदादि अर्धचतुष्टयं नास्ति

युधिष्ठिरः—

दानं वा सर्प सत्यं वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चापि गुरुलाघवमुच्यताम् ॥ ३

सर्पः—

दाने रतत्वं सत्यं च अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद् दृश्यते गुरुलाघवम् ॥ ४

कचिद्दानप्रयोगाद्धि सत्यमेव विशिष्यते ।
[1]सत्यवाक्याच्च राजेन्द्र कचिद्दानं विशिष्यते ॥ ५

एवमेव महेष्वास प्रियवाक्यान्महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥ ६

एवमेतद्भवेद्राजन् कार्यापेक्षमनन्तरम् ।
[2]यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ७

युधिष्ठिरः—

कथं स्वर्गे गतिस्सर्प कर्मणां च फलं ध्रुवम् ।
अशरीरस्य दृश्येत विषयांश्च ब्रवीहि मे ॥ ८

सर्पः—

तिस्रो वै गतयो राजन् जगत्येषां यथाविधि ।
मानुषं स्वर्गवासश्च तिर्यग्योनिश्च तात्त्रिधा ॥ ९

[3]तत्र वै मानुषाल्लोकाद् दानादिभिरनादिभिः ।

---

1. अ—नास्तीदमर्धम् 2. ख—अर्धचतुष्टयं नास्ति
3. ख—तत्रैव मानुषाल्लोकात्तपोदानक्रियादिभिः । [पाठान्तरम्]

अहिंसार्थसमायुक्तैः कारणैस्स्वर्गमश्नुते ॥ १०

विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् ।
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ॥ ११

[1]यदा त्वल महत्त्वेन हिंसार्थो लोभ एव च ।
मानुष्यमाविशेन्मोहाद् स तिर्यगवशो व्रजेत् ॥ १२

तिर्यग्योन्याः पृथग्भावो मानुष्यत्वे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ १३

सोऽयमेता गतीस्सर्वा जन्तुश्चरति कार्यवान् ।
निम्ने महति चात्मानम् अवस्थाप्य च वै नृप ॥ १४

जातो जातश्च बलवान् भुङ्क्ते नाम्नाऽथ देहवान् ।
[2]फलार्थस्तात निर्वृत्तः प्रजालक्षणभावनः ॥ १५

युधिष्ठिरः—

शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।
तस्याधिष्ठानमव्यग्रं ब्रूहि सर्प यथातथम् ॥ १६

युगपच्च महाबुद्धे विषयं किं न गृह्यते ।
[3]एतावदुच्यतां चोक्तं सर्वं ब्रूहि महामते ॥ १७

---

1. ख—यथात्वल ममत्वेन हिंसालोभसमन्वितः ।
मानुष्यमाविशेन्मोहात्स तिर्यग्वशगो भवेत् । [पाठान्तरम्]
2. क-ख-घ—प्रजार्थे न तु निर्वृत्तः
3. ख—इदमर्धं नास्ति

सर्पः—

तदात्मद्रव्यमायुष्मन् देहसंश्रयणान्वितम् ।
करणाधिष्ठितं भोगान् उपभुङ्क्ते यथाविधि ॥ १८

ज्ञानं चैव मनश्चात्र बुद्धिश्च नरसत्तम ।
तस्य भोगाधिकरणे करणानि निबोध मे ॥ १९

[1]मनसा तात पर्येति क्रमशो विषयानिमान् ।
विषयायतनस्थेन भूतात्मा क्षेत्रविष्ठितः ॥ २०

अत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते ।
तस्माद्युगपदत्रास्य ग्रहणं नोपपद्यते ॥ २१

स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः ।
द्रव्येषु सृजते बुद्धिं विविधेषु परावराम् ॥ २२

बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः ।
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ॥ २३

युधिष्ठिरः—

मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ २४

सर्पः—

बुद्धिरात्मानुगा तात उत्पातेन विधीयते ।
तदाश्रिता हि संज्ञैषा विधिस्तस्यैषणे भवेत् ॥ २५

1. ख—इदमर्धं नास्ति

बुद्धिरुत्पाद्यते कार्ये मनस्तूत्पन्नमेव च ।
[1]बुद्धेर्गुणविधिर्नास्ति मनस्तु गुणवद्भवेत् ॥ २६

एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम् ।
[2]त्वमप्यत्राभिसम्बुद्धः कथं वा मन्यसे स्वयम् ॥ २७

युधिष्ठिरः—

अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ २८

सर्वज्ञं त्वां कथं मोहो ह्यगमत् स्वर्गवासिनम् ।
एवमद्भुतकर्माणम् इति मे संशयो महान् ॥ २९

सर्पः—

सुप्रज्ञमपि चेच्छूरं बुद्धिर्मोहयते नरम् ।
वर्तमानस्सुखे सर्वो नावैतीति मतिर्मम ॥ ३०

सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसम्बुद्धस् त्वां तु सम्बोधयाम्यहम् ॥ ३१

कृतं कार्यं महाराज त्वया मम परंतप ।
क्षीणश्शापस्सुकृच्छ्रो मे त्वया सम्भाष्य साधुना ॥ ३२

अहं हि दिवि दिव्येन विमानेन चरन् पुरम् ।
अभिमानेन मत्तो वै कञ्चिदन्यन्न चिन्तये ॥ ३३

ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसपन्नगाः ।

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

वरं मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ ३४

चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥ ३५

ब्रह्मर्षीणां सहस्राणि वहन्ति शिबिकां मम ।
स मामपनयो राजन् भ्रंशयामास वै श्रियः ॥ ३६

तत्र त्वगस्त्यः पादेन वहन् स्पृष्टो महामुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ३७

ततस्तस्माद्विमानाग्र्यात् प्रच्युतश्च्युतभूषणः ।
प्रपतन् बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ३८

अयाचं तमहं विप्रं शापस्यान्तो भवेदिति ।
[1]प्रमादात् सम्प्रवृत्तस्य भगवन् क्षम्यतामिति ॥ ३९

ततस्स मामुवाचेदं प्रपतन्तं कृपान्वितः ।
युधिष्ठिरो धर्मराजश् शापात् त्वां मोक्षयिष्यति ॥ ४०

अभिमानस्य चैतस्य बलस्य च नराधिप ।
फले क्षीणे ह्यनिर्दिष्टं फलं पुण्यमवाप्स्यसि ॥ ४१

ततो मे विस्मयो जातस् तद्दृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥ ४२

सत्यं दमस्तपो योगम् अहिंसा ज्ञाननित्यता ।

---

1. क-ख-घ—अज्ञानात्

साधकानि सतां पुंसां न जातिर्न कुलं नृप ॥ ४३
अरिष्ट एष ते भ्राता मुक्तो भीमो महाभुज ।
स्वस्ति तेऽस्तु महाराज गमिष्येऽहं दिवं पुनः ॥ ४४

[1]स चायं पुरुषव्याघ्र कालः पुण्य उपागतः ।
तदस्मात् कारणात् पार्थ कार्यं मम महत् कृतम् ॥ ४५

वैशम्पायनः—

ततस्तस्मिन् मुहूर्ते तु विमानं कामगामि वै ।
अवपातेन महता तत्रावाप तदुत्तमम् ॥ ४६

इत्युक्त्वाऽऽजगरं देहं मुक्त्वा स नहुषो नृपः ।
[2]दिव्यां दिव्यवपुर्भूत्वा स्वकर्मविजितां ययौ ॥ ४७

युधिष्ठिरस्तु धर्मात्मा भ्रात्रा भीमेन सङ्गतः ।
धौम्येन सहितश्श्रीमान् आश्रमं पुनरागमत् ॥ ४८

ततो द्विजेषु सर्वेषु समेतेषु यथातथम् ।
कथयामास तत् सर्वं धर्मराजो युधिष्ठिरः ॥ ४९

तच्छ्रुत्वा ते द्विजश्रेष्ठा भ्रातरश्चास्य ते त्रयः ।
आसन् सुव्रीडिता राजन् द्रौपदी च यशस्विनी ॥ ५०
ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
मैवमित्यब्रुवन् भीमं गर्हयन्तोऽस्य साहसम् ॥ ५१

---

1. ख—इदमर्धं नास्ति
2. अ-क-ख-घ—दिव्यं; "दिव्यां इति पाठः साधुः

पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयाञ्चक्रुर् विजह्रुश्च मुदा युताः ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ ३६ ॥ आजगरपर्वणि पञ्चमोऽध्ययायः ॥ ५ ॥
[ अस्मिन्नध्याये ५२ श्लोकाः ]
॥ आजगरपर्व समाप्तम् ॥

---

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

(मार्कण्डेयसमास्यापर्व)

वर्षाशरद्वर्णनम् ॥ १ ॥ युधिष्ठिरादिभिर्द्वैतवनात्पुनः काम्यकवनप्रवेशः ॥ २ ॥

---

वैशम्पायनः—

निदाघान्तकरः कालस् सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृट्कालोऽभ्यपद्यत ॥ १

छादयन्तो महाघोषाः खं दिशश्च बलाहकाः ।
प्रववर्षुर्दिवारात्रम् असितास्सततं तदा ॥ २

तपात्ययनिकेतास्तु शतशोऽथ [1]सहस्रशः ।
अपेतार्कप्रभाजालास् सविद्युन्मण्डलप्रभाः ॥ ३

---

1. क-ख-ग—बलाहकाः

विरूढशष्पा पृथिवी मत्तदंशसरीसृपा ।
बभूव पयसा सिक्ता शान्तधूमरजोगुणा ॥ ४

न स्म प्रज्ञायते किञ्चिद् अद्भिर्लोके परिप्लुते ।
समं वा विषमं वाऽपि नद्यो वा स्थावराणि वा ॥ ५

क्षुब्धतोया महाघोषाश् [1]श्वसन्त्य इव शीघ्रगाः ।
सिन्धवश्शोभयाञ्चक्रुः काननानि तपात्यये ॥ ६

नर्दतां काननान्तेषु श्रूयन्ते विविधास्स्वनाः ।
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ॥ ७

[2-3]स्तोककाश्शिखिनश्चैव पुंस्कोकिलगणैस्सह ।
मत्ताः परिपठन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ८

तदा बहुविधाकारा प्रावृण्मेघाविनादिता ।
अभ्यतीयात् शिवा तेषां चरतां वसुधन्वसु ॥ ९

[4]ततः क्रौञ्चगणाकीर्णा शरत् प्रणिहिताऽभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ १०

विमलाकाशनक्षत्रा शरत्तेषां शिवाऽभवत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ११

---

1. ख—श्वसन्ते इव ; घ—श्वसन्त इव
2. ख—गणाः परिनदन्ति स्म तर्पिताश्चैव दर्पिताः । [अधिकः पाठः]
3. ख—अर्धचतुष्टयं नास्ति
4. क—अर्धद्वयं नास्ति

पश्यन्तश्शान्तरजसः क्षपाजलदशीतलाः ।
ग्रहनक्षत्रसङ्घैश्च सोमेन च विराजिताः ॥ १२
कुमुदैः पुण्डरीकैश्च शीतवारिधराश्शिवाः ।
पुष्करिण्यश्च नद्यश्च ददृशुस्समलङ्कृताः ॥ १३
आकाशसङ्काशजलां तीरवानीरसङ्कुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥ १४
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ १५
तेषां पुण्यतमा रात्रिः पर्वसन्धौ स्म शारदी ।
तत्रैव वसतामासीत् कार्तिकी जनमेजय ॥ १६
पुण्यकृद्भिर्महासत्त्वैस् तापसैस्सह पाण्डवाः ।
तत् सर्वं भरतश्रेष्ठास् समूषुर्योगमुत्तमम् ॥ १७
अस्मिन्नभ्युदये तत्र धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैस्सार्धं काम्यकं प्रययुर्वनम् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

पाण्डवानां पुनः काम्यकागमनं श्रुतवता कृष्णेन सत्यभामया सह तत्रागमनम् ॥ १ ॥ तथा नारदमार्कण्डेययोरागमनं च ॥ २ ॥ मार्कण्डेयेन श्रीकृष्णचोदनया पुराणकथाकथनारम्भः ॥ ३ ॥

वैशम्पायनः—

काम्यकं प्राप्य कौन्तेय युधिष्ठिरपुरोगमाः ।
कृतातिथ्या मुनिगणैर् निषेदुस्सह कृष्णया ॥ १
ततस्तान् परिविश्वस्तान् वसतः पाण्डुनन्दनान् ।
ब्राह्मणा बहवस्तत्र समन्तात् पर्यवारयन् ॥ २
अथाब्रवीद्द्विजः कश्चिद् अर्जुनस्य प्रियस्सखा ॥ २॥

द्विजः—

एष्यतीह महाबुद्धिर् वशी शौरिरुदारधीः ।
विदिता हि हरेर्यूयम् इहायाताः कुरूद्वहाः ॥ ३॥
सदा हि दर्शनाकाङ्क्षी श्रेयोन्वेषी च वो हरिः ॥ ४
बहुवत्सरजीवी च मार्कण्डेयो महातपाः ।
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान् समेष्यति ॥ ५

वैशम्पायनः—

तथैव तस्य ब्रुवतः प्रत्यदृश्यत केशवः ।
सैन्यसुग्रीवयुक्तेन रथेन रथिनां वरः ॥ ६

मघवानिव पौलोम्या सहितस्सत्यभामया ।
उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ७

अवतीर्य रथात् कृष्णो धर्मराजं यथाविधि ।
ववन्दे मुदितो धीमान् भीमं च बलिनां वरम् ॥ ८

पूजयामास धौम्यं स यमाभ्यामभिवादितः ।
परिष्वज्य महाभागां द्रौपदीं परिसान्त्व्य च ॥ ९

स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम् ।
पर्यष्वजत दाशार्हः पुनः पुनररिन्दमः ॥ १०

तथैव सत्यभामाऽपि द्रौपदीं परिषस्वजे ।
पाण्डवानां प्रियां भार्यां कृष्णस्य महिषी प्रिया ॥ ११

ततस्ते पाण्डवास्सर्वे सभार्यास्सपुरोहिताः ।
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः ॥ १२

कृष्णस्तु पार्थेन समेत्य विद्वान्
धनञ्जयेनासुरमर्दनेन ।
बभौ यथा भूतपतिर्महात्मा
समेत्य साक्षाद्भगवान् गुहेन ॥ १३

ततस्समस्तानि किरीटमाली
वनेषु वृत्तानि गदाग्रजाय ।

उक्त्वा यथावत् पुनरन्वपृच्छत्
तस्मिन् सुभद्रां च तथाऽभिमन्युम् ॥ १४

धौम्यं च कृष्णां च युधिष्ठिरं च
यमौ च भीमं च दशार्हसिंहः ।
उवाच दिष्ट्या भवतां शिवेन
प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ १५

स पूजयित्वा मधुहा यथावत्
पार्थांश्च कृष्णां च पुरोहितं च ।
उवाच राजानमभिप्रशंसन्
युधिष्ठिरं तेन सहोपविश्य ॥ १६

श्रीभगवान्—

धर्मः परः पाण्डव राज्यलाभात्
तस्यादिमाहुस्तप एव राजन् ।
सत्यार्जवाभ्यां चरता स्वधर्मं
जितस्त्वयाऽयं च परश्च लोकः ॥ १७

[1]अधीतमग्रे चरितं व्रतं च
सम्यग्धनुर्वेदमवाप्य कृत्स्नम् ।
क्षात्रेण धर्मेण वसूनि लब्ध्वा
सर्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ १८

1. ख—इदमर्धं नास्ति

न ग्राम्यधर्मेषु रतिस्तवास्ति
कामान्न किञ्चित् कुरुषे नरेन्द्र ।
न चार्थलोभात् प्रजहासि धर्मं
तस्मात् स्वभावादसि धर्मराजः ॥ १९

दानं च सत्यं च तपश्च राजन्
क्षमा च शान्तिश्च दमो धृतिश्च ।
अवाप्य राष्ट्राणि वसूनि भोगान्
एषां द्विषां पार्थरतिस्सदारैः ॥ २०

राज्ये निविष्टः कुरुजाङ्गलानां
कृष्णां सभायामवशामपश्यत् ।
अपेतधर्मव्यवहारवृत्तं
सहेत तत् पाण्डव कस्त्वदन्यः ॥ २१

असंशयं सर्वसमृद्धकामः
क्षिप्रं प्रजाः पालयितासि सम्यक् ।
अद्यैव तन्निग्रहणं कुरूणां
यदि प्रतिज्ञा भवतस्समाप्ता ॥ २२

वैशम्पायनः—

प्रोवाच कृष्णामपि याज्ञसेनीं
दशार्हभर्ता सहितस्सुहृद्भिः ।

[1]दिष्ट्या समग्राऽसि धनञ्जयेन
समागतेत्येवमुवाच कृष्णः ॥ २३

श्रीभगवान्—
कृष्णे धनुर्वेदरतिप्रधानास्
सत्यव्रतास्ते शिशवस्सुशीलाः ।
सद्भिस्सदैवाचरितं समाधिं
चरन्ति पुत्रास्तव याज्ञसेनि ॥ २४

[2]राज्ये नियुक्तैश्च निमन्त्र्यमाणाः
पित्रा च कृष्णे तव सोदरैश्च ।
न यज्ञसेनस्य न मातुलानां
गृहेषु बाला रतिमाप्नुवन्ति ॥ २५

आनर्तमेवाभिमुखाश्शिवेन
गत्वा धनुर्वेदरतिप्रधानाः ।
तवात्मजा वृष्णिपुरं प्रविश्य
न दैवतेभ्यस्स्पृहयन्ति कृष्णे ॥ २६

यथा त्वमेवार्हसि तेषु वृत्तिं
प्रयोक्तुमार्या च यथैव कुन्ती ।
तेष्वप्रमादेन सदा करोति
तथा च भूयश्च ततस्सुभद्रा ॥ २७

1. ख—इदमर्धं नास्ति　2. ख—इदमर्धं नास्ति

यथाऽनिरुद्धस्य यथाऽभिमन्योर्
यथा सुनीथस्य यथैव भानोः ।
तथा विनेता च गतिश्च कृष्णे
तवात्मजानामपि रौक्मिणेयः ॥ २८

गदासिचर्मग्रहणेषु शूरान्
अस्त्रेषु शिक्षासु रथाश्वयाने ।
सम्यग्विनेता विनयेदतन्द्रीस्
तांश्चाभिमन्युं च सदा कुमारान् ॥ २९

स चापि सम्यक् प्रणिधाय शिक्षां
शस्त्राणि चैषां गुरुवत् प्रदाय ।
तवात्मजानां च तथाऽभिमन्योः
पराक्रमैस्तुष्यति रौक्मिणेयः ॥ ३०

यथा विहारं प्रसमीक्षमाणाः
प्रयान्ति पुत्रास्तव याज्ञसेनि ।
एकैकमेषामनुयान्ति तत्र
यथाश्वयानानि च दन्तिनश्च ॥ ३१

वैशम्पायनः—
अथाब्रवीद्धर्मराजं तु कृष्णो
दशार्हयोधाः कुरुजाङ्गलाश्च ॥ ३१॥

श्रीभगवान्—
एते निदेशं तव पालयन्तस्
तिष्ठन्तु यत्रेच्छसि तत्र राजन् ॥ ३२

आवर्ततां कार्मुकवेगवाता
  हलायुधप्रग्रहणा मधूनाम् ।
सेना तवार्थाय नरेन्द्र यत्ता
  ससादिपत्त्यश्वरथा सनागा ॥ ३३

प्रस्थाप्यतां पाण्डव धार्तराष्ट्रस्
  सुयोधनः पापकृतां वरिष्ठः ।
स सानुबन्धस्ससुहृद्गणश्च
  सौभस्य सौभाधिपतेश्च मार्गम् ॥ ३४

कामं तथा तिष्ठ नरेन्द्र तस्मिन्
  यथा कृतस्ते समयस्सभायाम् ।
दाशार्हयोधैश्च ससादियोधं
  प्रतीक्षतां नागपुरं प्रभग्नम् ॥ ३५

व्यपेतमन्युर्व्यपनीतपाप्मा
  [1]विहृत्य यद्वेच्छसि तत्र कालम् ।
ततस्समृद्धप्रभवं विशोकः
  प्रपत्स्यसे नागपुरं सराष्ट्रम् ॥ ३६

वैशम्पायनः—
ततस्तदाज्ञाय मतं महात्मा
  यथावदुक्तः पुरुषोत्तमेन ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

प्रविश्य विप्रेक्ष्य च धर्मराजः
कृताञ्जलिः केशवमित्युवाच ॥ ३७

युधिष्ठिरः—
कालोदये तच्च ततश्च कर्ता
तथा भवान् कर्म न संशयोऽस्ति ॥ ३७॥
यथाप्रतिज्ञं च [1]विहृत्य काले
ततस्समा द्वादश निर्जनेषु ।
अज्ञातचर्यां विधिवत् समाप्य
भवद्गताः केशव पाण्डवेयाः ॥ ३८॥
असंशयं पाण्डव केशवानां
भवान् गतिस्त्वच्छरणा हि पार्थाः ॥ ३९

वैशम्पायनः—
तथा वदति वार्ष्णेये धर्मराजे च पार्थिवे ।
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक् ॥ ४०
प्रत्यदृश्यत धर्मात्मा मार्कण्डेयो महामुनिः ॥ ४०॥
तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम् ।
उपातिष्ठन्त ते सर्वे पाण्डवास्सहयादवाः ॥ ४१॥
तमर्चितं सुविश्वस्तम् आसीनमृषिसत्तमम् ।
[2]ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ॥ ४२॥

---

1. क—विसृज्य कालं. सर्वाः; ख-ब—विहृत्य कालं. सर्वाः
2. ख—इदमर्धं नास्ति

श्रीभगवान्—

शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः ।
द्रौपदी सत्यभामा च तथाऽहं परमं वचः ॥ ४३॥

पुरावृत्ताः कथाः पुण्यास् सदाचारास्सनातनाः ।
राज्ञां स्त्रीणामृषीणां च मार्कण्डेय प्रचक्ष्व नः ॥ ४४॥

वैशम्पायनः—

तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः।
आजगाम विशुद्धात्मा पाण्डवानवलोककः ॥ ४५॥

तमप्यथ महात्मानं सर्वे ते पुरुषर्षभाः ।
पाद्यार्घ्याभ्यां यथान्यायम् उपतस्थुर्मनीषिणः ॥ ४६॥

नारदस्त्वथ देवर्षिस् तान् विज्ञाय कृतक्षणान् ।
मार्कण्डेयस्य वदतस् तां कथामन्वमोदत ॥ ४७॥

उवाच चैनं कालज्ञं स्मयन्निव स नारदः ॥ ४८

नारदः—

ब्रह्मर्षे कथ्यतां यत्तत् पाण्डवेषु विवक्षितम् ॥ ४८॥

वैशम्पायनः—

एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ॥ ४९

मार्कण्डेयः—

क्षणं कुरुध्वं विपुलम् आख्यातव्यं भविष्यति ॥ ४९॥

वैशम्पायनः—

एवमुक्ताः क्षणं चक्रुः पाण्डवास्सह तैर्द्विजैः ।
मध्यंदिने यथादित्यं पश्यन्तस्ते महामुनिम् ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]

---

## ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरादीन् प्रति प्राणिनां सुकृतदुष्कृतफलभोगादिप्रकारनिरूपणम् ॥

---

वैशम्पायनः—

तं विवक्षन्तमालक्ष्य कुरुराजो महामुनिम् ।
कथासञ्जननार्थाय चोदयामास पाण्डवः ॥ १

युधिष्ठिरः—

भगवान् देवदैत्यानाम् ऋषीणां च महात्मनाम् ।
राजर्षीणां च पूर्वेषां चरितज्ञस्सनातनः ॥ २
सेव्यश्चोपासितव्यश्च मतो नः काङ्क्षितश्चिरम् ।
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ३
भ्रमत्येव हि मे बुद्धिर् दृष्ट्वाऽऽत्मानं सुखाच्च्युतम् ।

1. अ—अर्धमयं नास्ति

धार्तराष्ट्रांश्च दुर्वृत्तान् ऋद्ध्यतः प्रेक्ष्य सर्वशः ॥ ४

कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य वा ।
स्वफलं तदुपाश्नाति कथं कर्ता स्विदीश्वरः ॥ ५

अथवा सुखदुःखेषु नृणां ब्रह्मविदां वर ।
इह वा कृतमन्वेति परदेहेऽथवा पुनः ॥ ६

देही च देहं संत्यज्य मृग्यमाणश्शुभाशुभैः ।
कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम ॥ ७

ऐहलौकिकमेवैतद् उताहो पारलौकिकम् ।
क्व वा कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ८

मार्कण्डेयः—

इत्युक्तोऽयमनुप्रश्नो यथावद्वदतां वर ।
विदितं वेदितव्यं ते स्थित्यर्थमनुपृच्छसि ॥ ९

अत्र ते कथयिष्यामि तदिहैकमनाश्शृणु ।
यथेहामुत्र च नरस् सुखदुःखमुपाश्नुते ॥ १०

निर्मलानि विशुद्धानि शरीराणि शरीरिणाम् ।
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ॥ ११

अमोघफलसङ्कल्पास् सुव्रतास्सत्यवादिनः ।
[1]पुण्यभूता नराः पुण्याः पुराणाः पुरुषर्षभाः ॥ १२

1. क—अर्धद्वयं नास्ति

सर्वे देवैस्समायान्ति स्वच्छन्देन नभस्स्थलम् ।
ततश्च पुनरायान्ति स्वर्गे छन्दविहारिणः ॥ १३
स्वच्छन्दमरणाश्चासन् नरास्स्वच्छन्दजीविनः ।
[1]स्वल्पबाधा निरातङ्कास् सिद्धार्था निरुपद्रवाः ॥ १४
द्रष्टारो देवसङ्घानाम् ऋषीणां च महात्मनाम् ।
[2]प्रत्यक्षास्सर्वधर्माणां दान्ता विगतमत्सराः ॥ १५
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
ततः कालान्तरे तस्मिन् पृथिवीतलचारिणः ॥ १६
कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः ।
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः ॥ १७
अशुभैः कर्मभिः पापास् तिर्यङ्नरकभागिनः ।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः ॥ १८
मोघेष्टा मोघसङ्कल्पा मोघज्ञाना विबुद्धयः ।
नाथन्तस्सर्वकामानां नास्तिका भिन्नसेतवः ॥ १९
सर्वातिशङ्किनश्चैव संवृत्ताः क्लेशदायिनः ।
अशुभैः कर्मभिश्चैव प्रायशः परिचिह्निताः ॥ २०
दौष्कुल्या व्याधिबहुला दुरात्मानोऽभितापिनः ।

---

1. क—सर्वाबाधानुमतिकाः सर्वार्थी ; ख—स्वल्पायासा निरातङ्काः
घ—सर्वबाधाविनिर्मुक्ताः सर्वार्थी
2. ख—इदमर्धं नास्ति

भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ॥  २१
[1]नयन्तस्सर्वकामानां नास्तिका भिन्नचेतसः ॥  २१॥

जन्तोः प्रेतस्य कौन्तेय गतिस्स्वैरिह कर्मभिः ।
[2]प्राप्तस्य हीनबुद्धेश्च कर्मकोशः क तिष्ठति ॥  २२॥

कस्थस्तत् समुपाश्नाति सुकृतं यदि वेतरत् ।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु ॥  २३॥

अयमादिशरीरेण देवसृष्टेन मानवः ।
शुभानामशुभानां च कुरुते सञ्चयं महत् ॥  २४॥

आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेबरम् ।
सम्भवत्येव युगपद् योनौ नास्त्यन्तराऽभवः ॥  २५॥

तत्रास्य स्वकृतं कर्म च्छायेवानुगतं तदा ।
फलत्यथ सुखार्हो वा दुःखार्हो वाऽपि जायते ॥  २६॥

कृतान्तविधिसंयुक्तस् स जन्तुर्लक्षणैश्शुभैः ।
अशुभैर्वा निरादानो लक्ष्यते ज्ञान[3]दृष्टिभिः ॥  २७॥

एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर ।
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् ॥  २८॥

मनुष्यास्तप्ततपसस् सर्वागमपरायणाः ।

---

1. क—नाथन्तस्सर्वकामान् वै नास्तिका भिन्नचेतसः ।
   अ-ख—नास्तीदमर्धम्
2. ख—अर्धपञ्चकं नास्ति  3. क-ग—वृत्तिभिः

[1]स्थिरव्रतास्सत्यपरा गुरुशुश्रूषणे रताः ॥ २९॥
सुशीलाश्शुक्लजातीयाः क्षान्ता दान्तास्सुतेजसः ।
शुचियोन्यन्तरगताः प्रायशश्शुभलक्षणाः ॥ ३०॥

जितेन्द्रियत्वाद्वशिनस् सत्कृत्यान्मन्दरागिणः ।
अल्पाबाधपरित्रासा भवन्ति निरुपद्रवाः ॥ ३१॥

[2]भवन्तं जायमानं च गर्भस्थं चैव सर्वशः ।
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः ॥ ३२॥

कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ।
कृत्वा शुभानि कर्माणि ज्ञानेन भरतर्षभ ॥ ३३॥

किञ्चिद्दैवाद्धठात् किञ्चित् किञ्चिदेव स्वकर्मभिः ।
प्राप्नुवन्ति नरा राजन् मा तेऽस्त्वन्या विचारणा ॥ ३४॥

इमामत्रोपमां चापि निबोध वदतां वर ।
मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर ॥ ३५॥

इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ।
[3]इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ३६॥

धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते सुविभूषिताश्च ।

---

1. ख—एतदादि अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

तेषामयं शत्रुवरघ्नलोको
नासौ सदा ग्राम्यसुखे रतानाम् ॥ ३७॥
ये योगयुक्तास्तपसि प्रसक्तास्
स्वाध्यायशीला जरयन्ति देहान् ।
जितेन्द्रिया भूतहिते निविष्टास्
तेषामसौ नायमरिघ्नलोकः ॥ ३८॥
ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वा च धनानि काले ।
दारानवाप्य क्रतुभिर्यजन्ते
तेषामयं चैव परश्च लोकः ॥ ३९॥
ये नैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।
न चापि गच्छन्ति धनान्यभाग्यास्
तेषामयं चैव परश्च नास्ति ॥ ४०॥
सर्वे भवन्तस्त्वतिवीर्यसत्त्वा
दिव्यौजसस्संहननोपपन्नाः ।
लोकादमुष्मादवनिं प्रपन्नास्
स्वधीतविद्यास्सुरकार्यहेतोः ॥ ४१॥
कृत्वैव कर्माणि महान्ति शूरास्
तपोदमाचारविहारशीलाः ।

देवानृषीन् प्रेतगतांश्च पूर्वान्
संतर्पयित्वा विधिना परेण ॥ ४२॥
स्वर्गं परं पुण्यकृतां निवासं
क्रमेण सम्प्राप्स्यथ कर्मभिस्स्वैः ।
माभूद्विशङ्का तव कौरवेन्द्र
दृष्ट्वाऽऽत्मनः क्लेशमिमं सुखार्हाः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

---

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

---

मार्कण्डेयेन युधिष्ठिरादीन् प्रति मृतस्य पुनरुज्जीवनशक्त्यादिरूप-ब्राह्मणमाहात्म्यकथनम् ॥

---

वैशम्पायनः—
मार्कण्डेयं महात्मानम् ऊचुः पाण्डुसुतास्तदा ॥ ॥
पाण्डवाः—
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् ॥ १
वैशम्पायनः—
[1]एवमुक्तस्स भगवान् मार्कण्डेयो महातपाः ।
उवाच सुमहातेजास् सर्वशास्त्रविशारदः ॥ २

1. अ—अर्धद्वयं नास्ति

मार्कण्डेयः—

हैहयानां कुलकरो राजा परपुरञ्जयः ।
कुमारो रूपसम्पन्नो मृगयां व्यचरद्बली ॥ ३
चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते ।
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ॥ ४
स तेन हिंसितोऽरण्ये मन्यमानेन वै मृगम् ।
व्यथितः कर्म तत् कृत्वा शोकोपहतचेतनः ॥ ५
जगाम हैहयानां वै सकाशं प्रथितात्मनाम् ।
राज्ञां राजीवनेत्रोऽसौ कुमारः पृथिवीपते ॥ ६
तेषां च तद्यथावृत्तं कथयामास वै तदा ।
[1]स कुमारो महीपाल हैहयानां महीभृताम् ॥ ७
तं चापि हिंसितं तात मुनिं मूलफलाशिनम् ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ॥ ८
कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनाम्नोऽथ तार्क्ष्यस्याश्रममञ्जसा ॥ ९
तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम् ।
तस्थुस्सर्वे स तु मुनिस् तेषां पूजामथाहरत् ॥ १०
ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।

---

1. ख—इदमर्धं नास्ति

त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः ॥ ११

तानब्रवीत् स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम् ॥ १२

ते तु तत् सर्वमखिलम् आख्यायास्मै यथातथम् ।
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः ॥ १३

[1]अन्वेषमाणास्सव्रीडास् स्वप्नवद्गतमानसाः ।
तानब्रवीत् तत्र मुनिस् तार्क्ष्यः परपुरञ्जयः ॥ १४

स्यादयं ब्राह्मणस्सोऽथ यो युष्माभिस्समाहतः ।
पुत्रो ह्ययं मम नृपास् तपोबलसमन्वितः ॥ १५

ते च दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै ते ब्रुवाणा महीपते ॥ १६

ततो ह्ययं मृतो दृष्टः कथं जीवितमाप्तवान् ।
किमेतत् तपसो वीर्यं येनायं जीवितः पुनः ॥ १७
श्रोतुमिच्छाम विप्रर्षे यदि श्रोतव्यमित्युत ॥ १७॥

स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः ।
कारणं च प्रवक्ष्यामि हेतुयोगं समासतः ॥ १८॥
[2]मृत्युः प्रभवते येन नास्माकं नृपसत्तमाः ॥ १९

---

1. क-ख—श्लोकपञ्चकं नास्ति 2. अ—नास्तीदमर्धम्

[1]शुद्धाचारा अनलसाः संध्योपासनतत्पराः ।
शुद्धान्नाश्शुद्धधना ब्रह्मचर्यव्रतान्विताः ॥ २०

सत्यमेवाभिजानीमो नानृते कुर्महे मनः ।
स्वधर्ममनुतिष्ठामस् तस्मान्मृत्युभयं न नः ॥ २१

[2]यद्ब्राह्मणानां कुशलं तदेषां कथयामहे ।
[3]तेषां हि चरितं ब्रूमस् तस्मान्मृत्युभयं न नः ॥ २२

अतिथिष्वन्नपानेन भृत्यानां भरणेन च ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः ॥ २३

एतदुद्देशमात्रं वस् समाख्यातं विमत्सराः ।
गच्छध्वं सहितास्सर्वे न पापाद्भयमस्ति वः ॥ २४

एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम् ।
स्वदेशमगमन् हृष्टा राजानो भरतर्षभ ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

1. क-घ—अर्धद्वयं नास्ति
2. अ-घ—नास्तीदमर्धम्
3. अ-घ—अर्धत्रयं नास्ति

## ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरादीन् प्रति वैन्यस्याश्वमेधे अत्रिगौतमविवादानुवादेन ब्राह्मणमाहात्म्यकथनम् ॥

मार्कण्डेयः—

भूय एव तु माहात्म्यं ब्राह्मणानां निबोध मे ।
वैन्यो नामेह राजर्षिर् अश्वमेधाय दीक्षितः ॥ १

तमत्रिर्गन्तुमारेभे वित्तार्थमिति नश्श्रुतम् ।
[1]भूयोऽथ नानुरुध्यत् स धर्मव्यक्तिनिदर्शनात् ॥ २

सञ्चिन्त्य सुमहातेजा वनमेवान्वरोचयत् ।
धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ ३

अत्रिः—

प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम् ।
अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ४

मार्कण्डेयः—

तं भार्या प्रत्युवाचेदं धनमेवानुरुन्धती ॥ ४॥

भार्या—

वैन्यं गत्वा महात्मानम् अर्थयस्व धनं बहु ॥ ५
स ते दास्यति राजर्षिर् यजमानोऽर्थिने धनम् ।

1. ख—अर्धद्वयं नास्ति

तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ॥ ६
भृत्यान् सुतान् संविभज्य ततो व्रज यथेप्सितम् ॥ ६॥
एष वै परमो धर्मो विद्वद्भिस्समुदाहृतः ॥ ७

अत्रिः—

कथितो मे महाभागे गौतमेन महात्मना ।
वैन्यो धर्मार्थसंयुक्तस् सत्यव्रतसमन्वितः ॥ ८
किं त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः ।
[1]यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ९
तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम् ।
मयोक्तामन्यथा ब्रूयुस् ततस्ते वै निरर्थिकाम् ॥ १०
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव ।
[2]गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसञ्चयम् ॥ ११

मार्कण्डेयः—

एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः ।
गत्वा च यज्ञायतनम् अत्रिस्तुष्टाव तं नृपम् ॥ १२

अत्रिः—

राजन् धन्यस्त्वमीशश्च विभुश्च प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास् त्वदन्यो नास्ति धर्मवित् ॥ १३

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति

मार्कण्डेयः—

तमब्रवीदृषिस्तत्र वधः क्रुद्धो महातपाः ॥ १३॥

गौतमः—

मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता ।
अत्र नः प्रथमो धाता महेन्द्रो वै प्रजापतिः ॥ १४॥

मार्कण्डेयः—

[1]अथात्रिरेव राजेन्द्र गौतमं प्रत्यभाषत ॥ १५

अत्रिः—

अयमेव विधाता च तथैवेन्द्रः प्रजापतिः ।
त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह ॥ १६

गौतमः—

जानामि नाहं मुह्यामि त्वं विवक्षुर्विमुह्यसे ।
[2]स्तोष्यसेऽभ्युदये प्रेप्सुस् तस्य दर्शनसंश्रयात् ॥ १७
न वेत्थ परमं धर्मं न चास्त्यत्र प्रयोजनम् ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ १८

मार्कण्डेयः—

विवदन्तौ तदा तौ तु मुनीनां दर्शने स्थितौ ।
[3]ये तस्य यज्ञे संवृत्तास् तेऽपृच्छन्त कथं त्विमौ ॥ १९
प्रवेशः केन दत्तोऽयम् अनयोर्वैन्यसंसदि ।

---

1. घ—अर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—अर्धत्रयं नास्ति

उच्चैस्समभिभाषन्तौ केन कार्येण रोषितौ ॥ २०

ततः परमधर्मात्मा काश्यपस्सर्वधर्मवित् ।
विवदन्तावनुप्राप्तौ तावुभौ प्रत्यवेदयत् ॥ २१

अथाब्रवीत् सदस्यांस्तु गौतमो मुनिसत्तमान् ॥ २१॥

गौतमः—

आवयोर्व्याहृतं प्रश्नं शृणुत द्विजसत्तमाः ।
वैन्यो विधातेत्याहात्रिर् अत्र नस्संशयो महान् ॥ २२॥

मार्कण्डेयः—

[1]ततस्तु गौतमेनोक्तं वाक्यं वैन्यस्य संसदि ।
श्रुत्वैव तु महात्मानो मुनयः प्राद्रवन् द्रुतम् ॥ २३॥

सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ।
पप्रच्छुः प्रणता भूत्वा ब्रह्माणमिव सोमपाः ॥ २४॥

[2]स च तेषां वचश्श्रुत्वा यथातत्त्वं महातपाः ।
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥ २५॥

सनत्कुमारः—

ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।
राजा वै प्रथितो धर्मः प्रजानां पतिरेव च ॥ २६॥

स एव शक्रश्शुक्रश्च स धाता च बृहस्पतिः ।
प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ॥ २७॥

---

1. ख—इदमर्धं नास्ति   2. ख—अर्धत्रयं नास्ति

य एभिस्स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ २८

[1]पुरायोनिर्युधाजिच्च सुभिक्षानुचितोद्भवः ।
स्वर्णेता सहजिद्बभ्रुर् इति राजाऽभिधीयते ॥ २९

सत्यमन्युर्यथा जीवस् सत्यधर्मप्रवर्तकः ।
अधर्मादृषयो भीता बलं क्षत्रे समादधन् ॥ ३०

तस्माद्धि ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म चाव्ययम् ॥ ३०॥

आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मान् नुदते भृशम् ॥ ३१॥

अतो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरस्सिद्ध्यते पक्षो येन राजेति भाषितम् ॥ ३२॥

मार्कण्डेयः—

[2]ततस्स राजा संहृष्टस् सिद्धे पक्षे महामनाः ।
तमत्रिमब्रवीत् प्रीतः पूर्वं येनाभिसंस्तुतः ॥ ३३॥

वैन्यः—

यस्मात् पूर्वं मनुष्येभ्यो ज्यायांसं मामिहाब्रवीः ।
सर्वदेवैश्च विप्रर्षे सम्मितं श्रेष्ठमेव च ॥ ३४॥

तस्मात् तेऽहं प्रदास्यामि विविधं वसु भूरि च ।
दासीसहस्रं श्यामानां सुवस्त्राणामलङ्कृतम् ॥ ३५॥

1. ख—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

दशकोटीर्हिरण्यस्य रुक्मभारांस्तथा दश ।
एतद्ददामि विप्रर्षे सर्वज्ञस्त्वं हि मे मतः ॥ ३६॥

मार्कण्डेयः—
तदत्रिर्न्यायतस्सर्वं प्रतिगृह्य महामनाः ।
प्रत्युज्जगाम तेजस्वी गृहानेव महातपाः ॥ ३७॥

प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् ।
ततस्समभिसन्धाय वनमेवान्वपद्यत ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

## ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरादीन् प्रति दानाग्निहोत्रमोक्षादिनिरूपकताक्ष्यर्य-सरस्वतीसंवादानुवादः ॥

---

मार्कण्डेयः—
अत्रैव च सरस्वत्या गीतं परपुरञ्जय ।
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ १

तार्क्ष्यः—
किं नु श्रेयः पुरुषस्येह शोभने
कथं कुर्वन् न च्यवते स्वधर्मात् ।

आचक्ष्व मे चारुसर्वाङ्गि सर्वं
त्वयाऽनुशिष्टो न च्यवेयं स्वधर्मात् ॥ २
कथं चाग्निं जुहुयां पूजये वा
कस्मिन् काले केन धर्मो न नश्येत् ।
एतत् क्षिप्रं सुभगे प्रब्रवीहि
यथा लोकान् विरजास्सम्प्रपश्ये ॥ ३

मार्कण्डेयः—
एवं पृष्टा प्रीतियुक्तेन तेन
शुश्रूषुणा चोत्तमबुद्धियुक्ता ।
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च
सरस्वती वाक्यमिदं बभाषे ॥ ४

सरस्वती—
यो ब्रह्म जानाति यथोपदेशं
स्वाध्यायनित्यश्शुचिरप्रमत्तः ।
स वै पुरा देवपुरस्य गन्ता
सहामरैः प्राप्नुयात् प्रीतियोगम् ॥ ५
तत्रास्य रम्या विपुला विशोकास्
सुपुष्पिताः पुष्करिण्यस्सुपुण्याः ।
अकर्दमा मीनवत्यस्सुतीर्था
हिरण्मयैरावृताः पुण्डरीकैः ॥ ६

तासां तीरेष्वासते पुण्यकर्मा
महीयमानः पृथगप्सरोभिः ।
सुपुण्यगन्धाभिरलङ्कृताभिर्
हिरण्यवर्णाभिरतीव हृ[1]ष्टः ॥ ७
परं लोकं गोप्रदास्त्वाप्नुवन्ति
दत्त्वा सुवर्णं सूर्यलोकं व्रजन्ति ।
वासो दत्त्वा चन्द्रमसस्सलोकं
दत्त्वा हिरण्यममृतत्वमेति ॥ ८
धेनुं दत्त्वा सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्यास्
तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ ९
अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढारमनन्तवीर्यम् ।
धुरंधरं बलवन्तं युवानं
प्राप्नोति लोकान् दशधेनुदस्य ॥ १०
यस्सप्तवर्षाणि जुहोति तार्क्ष्ये
हव्यं तदाग्नौ सुव्रतस्साधुशीलः ।
सप्तावरान् सप्तपूर्वान् पुनाति
पितामहानात्मना कर्मभिस्स्वैः ॥ ११

1. व—ष्टाः

ताक्ष्यः—

[1]किमग्निहोत्रस्य व्रतं पुराणम्
आचक्ष्व मे पृच्छतश्चारुरूपे ।
त्वयाऽनुशिष्टोऽहमिहाद्य विद्यां
यदग्निहोत्रस्य व्रतं पुराणम् ॥ १२

सरस्वती—

न चाशुचिर्नाप्यनिर्णिक्तपाणिर्
नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुक्षवश्शुचिकामा हि देवा
नाश्रद्दधानस्य हविर्जुषन्ति ॥ १३

नाश्रोत्रियं देवहव्येषु युञ्ज्या-
न्मोघं [2]परं सिञ्चति तादृशो हि ।
[3]अपूर्णमश्रोत्रियमाह ताक्ष्य
न वै तादृग्जुहुयादग्निहोत्रम् ॥ १४

ये वै कृशानुं जुह्वति श्रद्दधानास्
सत्यव्रता हुतशिष्टाशिनश्च ।
गवां लोकं प्राप्यते पुण्यगन्धं
पश्यन्ति देवं परमं चापि सत्यम् ॥ १५

1. ख—इदमर्धद्वयं नास्ति 2. क-ख-घ—परां
3. ख—इदमर्धं नास्ति

तार्क्ष्यः—

क्षेत्रज्ञभूतां परलोकभावे

कर्मोदये बुद्धि[1]मतां वरिष्ठाम् ।

प्रज्ञां च देवीं सुभगे विमृश्य

पृच्छामि त्वां कान्वसि चारुरूपे ॥ १६

सरस्वती—

अग्निहोत्रादहमभ्यागताऽस्मि

विप्रर्षीणां संशयच्छेदनाय ।

त्वत्संयोगादहमेतदब्रुवं

भावे स्थिता तथ्यमर्थं यथावत् ॥ १७

तार्क्ष्यः—

न हि त्वया सदृशी काचिदस्ति

विभ्राजसे ह्यतिमात्रं यथा श्रीः ।

रूपं च ते दिव्यमत्यन्तकान्तं

प्रज्ञां च देवीं सुभगे बिभर्षि ॥ १८

सरस्वती—

[2]श्रेष्ठानि यानि द्विपदां वरिष्ठ

यज्ञेषु विद्वन्नुपपादयन्ति ।

तैरेवाहं सम्प्रवृत्ता भवामि

आप्यायिता रूपवती च विप्र ॥ १९

1. क-ख-घ—मतिप्रविष्टाम्  2. क-घ—निष्ठा विविष्टा

[1]यत्रापि पात्रमुपयुज्यते ह
वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण च प्रज्ञया च
तैरेति सिद्धिमिति विद्धि विद्वन् ॥ २०

तार्क्ष्यः—

इदं श्रेयः परमं मन्यमाना
व्यायच्छन्ते मुनयस्सम्प्रतीताः ।
आचक्ष्व मे तं परमं विशोकं
मोक्षं परं यं प्रविशन्ति धीराः ॥ २१

सरस्वती—

तं वै परं वेदविदः प्रपन्नाः
परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्यायदानव्रतपुण्ययोगैस्
तपोधना वीतशोका विमुक्ताः ॥ २२

तस्याथ मध्ये वेतसः पुण्यगन्धस्
सहस्रशाखो विपुलो विभाति ।
तस्य मूलात् सरितः प्रस्रवन्ति
मधूदकप्रस्रवणास्सुपुण्याः ॥ २३

1. घ—अर्धद्वयं नास्ति

शाखां शाखां महानद्यस् संयान्ति सिकतासमाः ।
पानापूपा मांसकुल्यास् सदा पायसकर्दमाः ॥ २४

यस्मिन्नग्निमुखा देवास् सेन्द्राःसहमरुद्गणाः ।
ईजिरे क्रतुभिश्श्रेष्ठैस् तत् पदं परमं मुने ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरादीन् प्रति मत्स्यरूपिणो हरेर्वैवस्वतमनोश्च चरितप्रतिपादकमत्स्योपाख्यानकथनम् ॥

---

वैशम्पायनः—

ततस्स पाण्डवो भूयो मार्कण्डेयमुवाच ह ।
कथयस्वेति चरितं मनोर्वैवस्वतस्य च ॥ १

मार्कण्डेयः—

विवस्वतस्सुतो राजन् परमर्षिः प्रतापवान् ।
बभूव मुनिशार्दूलः प्रजापतिसमद्युतिः ॥ २

ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः ।

अतिचक्राम पितरं मनुस्स्वं च पितामहम् ॥ ३
ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः ।
एकपादस्थितः पूर्वं चकार सुमहत् तपः ॥ ४
अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
[1]सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ५

तं कदाचित् तपस्यन्तम् आर्द्रचीरजटाधरम् ।
वीरणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ६

मत्स्यः—

भगवन् क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम ।
[2]मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ७

दुर्बलं बलवन्तो हि मत्स्या मत्स्यं विशेषतः ।
भक्षयन्ति यथा वृत्तिर् विहिता नस्सनातनी ॥ ८

तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः ।
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृतं तव ॥ ९

मार्कण्डेयः—

स मत्स्यवचनं श्रुत्वा कृपयाऽभिपरिप्लुतः ।
मनुर्वैवस्वतोऽगृह्णात् तं मत्स्यं पाणिना स्वयम् ॥ १०

उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।

1. ख—इदमर्धं नास्ति 2. ख—अर्धत्रयं नास्ति

अरञ्जरे प्राक्षिपत् तं चन्द्रांशुसदृशप्रभम् ॥ ११

स तत्र ववृधे राजन् मत्स्यः परमसत्कृतः ।
पुत्रवत् स्वीकरोत् तस्मिन् मनुर्भावं विशेषतः ॥ १२

अथ कालेन महता स मत्स्यस्सुमहानभूत् ।
[1]अरञ्जरजले चैव नासौ समभवत् किल ॥ १३

अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत ॥ १३॥

मत्स्यः—

भगवन् साधु मेऽद्यान्यत् स्थानं वै प्रतिपादय ॥ १४

मार्कण्डेयः—

उद्धृत्या[2]रञ्जरात्तस्मात् ततस्स भगवान् मनुः ।
तं मत्स्यमनयद्वापीं महतीं तु मनुस्तदा ॥ १५

[3]तत्र तं प्राक्षिपच्चापि मनुः परपुरञ्जय ।
अथावर्धत मत्स्यस्स पुनर्वर्षगणान् बहून् ॥ १६

द्वियोजनायता वापी विस्तृता चापि योजनम् ।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ॥ १७

विचेष्टितुं च कौन्तेय मत्स्यो वाप्यां विशां पते ।
मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ॥ १८

---

1. ख—इदमर्धं नास्ति
2. घ—अलिञ्जरे
3. ख—इदमर्धं नास्ति

मत्स्यः—

नय मां भगवन् साधो समुद्रमहिषीं प्रभो ।
[1]गङ्गां नात्रापि शक्तोऽस्मि वस्तुं मतिमतां वर ॥ १९

मार्कण्डेयः—

एवमुक्तो मनुर्मत्स्यम् अनयद्भगवान् वशी ।
गङ्गानदीं तत्र चैनं स्वयं प्राक्षिपदेव च ॥ २०

स तत्र ववृधे मत्स्यः कञ्चित् कालमरिन्दम ।
ततः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ॥ २१

मत्स्यः—

गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो ।
समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ २२

मार्कण्डेयः—

उद्धृत्य गङ्गासलिलात् ततो मत्स्यं मनुस्स्वयम् ।
समुद्रमनयत् पार्थ तत्र चैनमवासृजत् ॥ २३

[2]सुमहानपि मत्स्यस्तु स मनोर्मनसस्तदा ।
आसीद्यथेष्टभार्यश्च स्पर्शगन्धसुखश्च वै ॥ २४

यदा समुद्रे प्रक्षिप्तस् स मत्स्यो मनुना तदा ।
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ॥ २५

---

1. ख—इदमर्धं नास्ति  2. ख—इदमर्धद्वयं नास्ति

मत्स्यः—

भगवन् हि कृता रक्षा त्वया सर्वा विशेषतः ।
प्राप्तकालं तु यत् कार्यं त्वया तच्छ्रूयतां मम ॥ २६

अचिराद्भगवन् भौमम् इदं स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलयं वै गमिष्यति ॥ २७

सम्प्रक्षालनकालोऽयं लोकानां समुपस्थितः ।
तस्मात् त्वां बोधयाम्यद्य यत् ते हितमनुत्तमम् ॥ २८

[1]चराणां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति ।
तस्य सर्वस्य सम्प्राप्तः कालः परमदारुणः ॥ २९

नौश्च कारयितव्या ते दृढा [2]युक्तवटारका ।
तत्र सप्तर्षिभिस्सार्धम् आरुहेतां महामुने ॥ ३०

वीजानि चैव सर्वाणि [3]यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसङ्गुप्तानि भागशः ॥ ३१

नौस्थश्च मां प्रतीक्षेथास् तथा मुनिजनप्रिय ।
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ३२

एवमेतत् त्वया कार्यम् आपृष्टोऽसि व्रजाम्यहम् ।
नातिशक्यमिदं चापि वचनं ते ममापि भो ॥ ३३

---

1. क-ख-घ—वासनं+नेङ्गते ।
2. क—वाटिका; ख-घ—कवाटिका
3. ख—अयं पादोऽनन्तरश्च न स्तः

मार्कण्डेयः—

एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ।
जग्मतुश्च यथाकामम् अनुज्ञाप्य परस्परम् ॥ ३४

ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा ॥ ३५

नावा तु शुभया वीर महोर्मिणमरिन्दम ॥ ३५॥
चिन्तयामास च मनुस् तं मत्स्यं पृथिवीपते ॥ ३६

स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरञ्जय ।
[1]शृङ्गी तत्राजगामाशु तथा भरतसत्तम ॥ ३७

[2]तं दृष्ट्वा मनुजव्याघ्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ॥ ३८

वटारकमयं पाशम् अथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस्य शृङ्गे न्यवेदयत् ॥ ३९

संयतस्तेन पाशेन मत्स्यः परपुरञ्जय ।
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ॥ ४०

स ततार तया नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर् गर्जमानमिवाम्भसा ॥ ४१

---

1. घ—अर्धपञ्चकं नास्ति
2. क—अर्धपञ्चकं नास्ति; ख—नासीदमर्धम्

क्षोभ्यमाणा महावातैस् सा नौस्तस्मिन् महोदधौ ।
जुघूर्णे चपलेव स्त्री मत्ता परपुरञ्जय ॥ ४२

नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे ।
सर्वं सलिलमेवासीत् खं द्यौश्च नरपुङ्गव ॥ ४३

एवंभूते तदा लोके सङ्कुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यस्सहैव ह ॥ ४४

एवं बहून् वर्षगणांस् तां नावं सोऽपि मत्स्यकः ।
चकर्षातन्द्रितो राजंस् तस्मिन् सलिलसञ्चये ॥ ४५

ततो हिमवतश्शृङ्गं यत् परं पुरुषर्षभ ।
तत्राकर्षत् ततो नावं मत्स्यः कौरवनन्दन ॥ ४६

ततोऽब्रवीत् तदा मत्स्यस् तानृषीन् प्रहसञ् शनैः ॥ ४६॥

मत्स्यः—

तस्मिन् हिमवतश्शृङ्गे नावं बध्नीत मा चिरम् ॥ ४७

मार्कण्डेयः—

[1]सा बद्धा तत्र तैस्तूर्णम् ऋषिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वचश्श्रुत्वा शृङ्गे हिमवतस्तदा ॥ ४८

तच्च नौबन्धनं नाम शृङ्गं हिमवतः परम् ।
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ॥ ४९

---

1. अ—अर्धेलयं नास्ति

अथाब्रवीदनिमिषस् तानृषीन् सहितांस्तदा । ४९॥

मत्स्यः—

अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते ।
मत्स्यरूपेण यूयं च मयाऽस्मान्मोक्षिता भयात् ॥ ५०॥

मनुना च प्रजास्सर्वास् सदेवासुरमानुषाः ।
स्रष्टव्यास्सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ॥ ५१॥

[1]तपसा चापि तीव्रेण प्रतिभाऽस्य भविष्यति ।
मत्प्रसादात् प्रजासर्गे न च मोहं गमिष्यति ॥ ५२॥

मार्कण्डेयः—

इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः ॥ ५३

स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतस्स्वयम् ।
प्रमूढोऽभूत् प्रजासर्गे तपस्तेपे महत् ततः ॥ ५४

तपसा महता युक्तस् सोऽथ स्रष्टुं प्रचक्रमे ।
सर्वाः प्रजा मनुस्साक्षाद् यथावद्भरतर्षभ ॥ ५५

वैशम्पायनः—

इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम् ।
आख्यानमिदमाख्यातं सर्वपापहरं मया ॥ ५६

---

1. ख—इदमर्धं नास्ति

य इदं शृणुयान्नित्यं मनोश्चरितमादितः ।
स सुखी पूर्णकामार्थस् स्वर्गलोकमियान्नरः ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ५७ श्लोकाः]

---

## ॥ षष्ट्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरादीन् प्रति कृतादियुगचतुष्टयधर्मकथनपूर्वकं प्रलयवर्णनम् ॥ १ ॥ तथा प्रलयजले परिप्लवता मार्कण्डेयेन वटशाखाशायिनः शिशुरूपस्य हरेरुदरान्तः प्रविश्य ब्रह्माण्डदर्शनपूर्वकं पुनर्बहिर्निर्गमनम् ॥ २ ॥

---

वैशम्पायनः—

ततस्स पुनरेवाथ मार्कण्डेयं तपस्विनम् ।
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः ॥ १

युधिष्ठिरः—

नैके युगसहस्रान्तास् त्वया दृष्टा महामुने ।
न चापीह समः कश्चिद् आयुषा तात विद्यते ॥ २

वर्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् ।
[1]न तेऽस्ति सदृशः कश्चिद् आयुषा ब्रह्मसत्तम ॥ ३

---

1. ख—अर्धद्वयं नास्ति

अन्तरिक्षे च लोकेऽस्मिन् देवदानववर्जिते ।
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसे ॥ ४

प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे ।
त्वमेकस्सृज्यमानानि भूतानीह प्रपश्यसि ॥ ५

[1]चतुर्विधानि विप्रर्षे यथावत् परमेष्ठिना ।
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ६

त्वया लोकगुरुस्साक्षात् सर्वलोकपितामहः ।
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ७

तस्मात् सर्वान्तको मृत्युर् जरा वा देहघातिनी ।
न त्वां विशति विप्रर्षे प्रसादात् परमेष्ठिनः ॥ ८

यदा वै न रविर्नाग्निर् न वायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वी शेषं भवति किञ्चन ॥ ९

अस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ १०

शयानममितात्मानं पद्मे पद्मनिकेतनम् ।
त्वमेकस्सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ ११

एतत् प्रत्यक्षतस्सर्वं पूर्वं वृत्तं द्विजोत्तम ।
तस्मादिच्छाम्यहं श्रोतुं सर्वां हेत्वात्मिकीं कथाम् ॥ १२

1. ख—इदमर्धद्वयं नास्ति घ—अर्धषट्कं नास्ति

[1]अनुभूतं हि बहुशस् त्वयैतद् द्विजसत्तम ।
न तेऽस्त्यविदितं किञ्चित् सर्वलोकेषु नित्यदा ॥ १३

मार्कण्डेयः—

हन्त ते कथयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ १४

य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः ।
एष कर्ता विकर्ता च भूतभावनभूतकृत् ॥ १५

अचिन्त्यं महदाश्चर्यं पवित्रमिति चोत्तमम् ।
अनादिनिधनं भूतं विश्वमक्षयमव्ययम् ॥ १६

एष कर्ता न क्रियते कारणं चापि पौरुषे ।
यो ह्येनं पुरुषं वेत्ति देवा अपि न तं विदुः ॥ १७

सर्वमाश्चर्यमेतद्धि निर्वृत्तं राजसत्तम ।
आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये ॥ १८

चत्वार्याहुस्सहस्राणि वर्षाणां तत् कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च [2]तथा परः ॥ १९

त्रीणि वर्षसहस्राणि त्रेता स्यात् परिमाणतः ।
तस्यास्तावच्छती सन्ध्या सन्ध्यांशश्च ततः परम् ॥ २०

1. ख—अर्धद्वयं नास्ति   2. क-ख-ग—ततः परम्

[1]अथ वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च ततः परम् ॥ २१

सहस्रमेकं वर्षाणां तथा कलियुगं स्मृतम् ।
तस्य वर्षशतं सन्ध्या सन्ध्यांशश्च ततः परम् ॥ २२
सन्ध्यासंध्यांशयोस्तुल्यं प्रमाणमवधारय ॥ २२॥
क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम् ॥ २३

एषा द्वादशसाहस्री युगाख्या परिकीर्तिता ।
एतत् सहस्रपर्यन्तम् अहो ब्राह्ममुदाहृतम् ॥ २४

विश्वं हि ब्रह्मसदने सर्वतः परिवर्तते ।
लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः ॥ २५

अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नरास्सर्वे प्रायशोऽनृतवादिनः ॥ २६

यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन् काले प्रवर्तते ॥ २७

ब्राह्मणाश्शूद्रकर्माणस् तथा शूद्रा धनार्जनाः ।
क्षत्रधर्मेण वाऽप्यत्र वर्तयन्ति युगक्षये ॥ २८

निवृत्तयज्ञस्वाध्याया पिण्डोदकविवर्जिताः ।
ब्राह्मणास्सर्वभक्षाश्च भवन्तीह कलौ युगे ॥ २९

---

1. ग—अर्धद्वयं नास्ति

अजपा ब्राह्मणास्तात शूद्रा जप्यपरायणाः ।
[1]विपरीते तदा लोके पूर्वरूपक्षयङ्करे ॥ ३०

क्षत्रधर्मेण वाऽप्यत्र वर्तयन्ति युगक्षये ।
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ॥ ३१

मृषानुशासिनः पापा मृषावादपरायणाः ।
आन्ध्राश्शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ॥ ३२

काम्भोजा [2]कुण्डिकाश्शूरास् तथाऽऽभीरा नरोत्तम ।
न तदा ब्राह्मणः कश्चित् स्वधर्ममुपजीवति ॥ ३३

क्षत्रिया ह्यपि शूद्राश्च विकर्मस्था नराधिप ।
अल्पायुषस्स्वल्पबला अल्पतेजःपराक्रमाः ॥ ३४

अल्पदेहाल्पसाराश्च तथा सत्याल्पभाषिणः ।
बहुशून्या जनपदा मृगव्यालावृता दिशः ॥ ३५

युगान्ते मनुजव्याघ्र वृथा च ब्रह्मवादिनः ।
[3]भोवादिनस्तथा शूद्रा ब्राह्मणानार्यवादिनः ॥ ३६

[4]युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः ।
न तथा [5]घ्राणयुक्ताश्च बहुगाधा विशां पते ॥ ३७

---

1. ख—इदमर्धं नास्ति
2. क-घ—स्सिणिकाश्शूद्रास्
3. घ—अर्धषट्कं नास्ति
4. ख—इदमर्धं नास्ति
5. क—ब्रह्मणा युक्तास्सर्वगाथा

रसाश्च मनुजव्याघ्र बीजं च परिहीयते ।
बहुप्रजा ह्रस्वदेहाश् शीलाचारविवर्जिताः ॥ ३८
मुखेभगास्स्त्रियो राजन् भविष्यन्ति युगक्षये ।
अट्टशूला जनपदाश् शिवशूलाश्चतुष्पथाः ॥ ३९
केशशूलास्स्त्रियो राजन् भविष्यन्ति कलौ युगे ।
अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ॥ ४०
अल्पपुष्पफलाश्चापि पादपा बहुशाखिनः ॥ ४०॥
ब्रह्मवध्यानुलिप्तानां तथा मिथ्यानुशासिनाम् ।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ॥ ४१॥
[1]लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजा दिशः ॥ ४२॥
करभारभयात् पुंसो गृहस्थाः परिमोक्षगाः ।
मुनिच्छद्मानुसञ्छन्ना वाणिज्यमुपभुञ्जते ॥ ४३॥
मिथ्या च नखरोमाणि धारयन्ति नरास्तदा ।
[2]अर्थलोभान्नरव्याघ्र घृथा च ब्रह्मचारिणः ॥ ४४॥
आश्रमेषु घृथाचारा मानवा गुरुतल्पगाः ॥ ४५
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रमत्ता भृशनास्तिकाः ॥ ४६

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

बहुपाषण्डसङ्कीर्णाः पराम्रगुणवादिनः ।
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ॥ ४७

यथर्तुवर्षी भगवान् न तथा पाकशासनः ।
न तथा सर्वबीजानि सम्यग्रोहन्ति भारत ॥ ४८

फलं धर्मस्य राजेन्द्र सर्वत्र परिहीयते ।
अधर्मफलमत्यर्थं तथा भवति चानघ ॥ ४९

[1]तथा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुस्स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन ॥ ५०

[2]भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ५१

धर्मिष्ठाः परिहीयन्ते पापीयान् वर्धते जनः ।
धर्मस्य बलहानिस्स्याद् अधर्मश्च बलायते ॥ ५२

अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तदा ।
दीर्घायुषस्समृद्धाश्च विधर्माणो युगक्षये ॥ ५३

अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत ॥ ५३॥

सञ्चयेनापि चाल्पेन भवन्त्याढ्यमदान्विताः ॥ ५४

धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ।

---

1. ख—अर्धद्वयं नास्ति　　2. क—अर्धचतुष्टयं नास्ति
3 ख—अर्धद्वयं नास्ति

[1]हर्तुं व्यवसिता राजन् पापाचारसमन्विताः । ५५
पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा ।
नगराणां विहारेषु चैत्येष्वपि च शेरते ॥ ५६

सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ५७

भवन्ति षोडशे वर्षे पुत्राश्च पलितास्तथा ।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ५८

क्षीणे युगे महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषूपजायते ॥ ५९

विपरीतास्तथा नार्यो वञ्चयित्वाऽ[2]ऽर्हतः पतीन् ।
व्युच्चरन्ती च दुश्शीला दासैः पशुभिरेव च ॥ ६०

तस्मिन् युगसहस्रान्ते सम्प्राप्ते चायुषः क्षये ।
अनावृष्टिर्महाराज जायते बहुवार्षिकी ॥ ६१

ततस्तान्यल्पसाराणि सत्त्वानि क्षुधितानि च ।
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ॥ ६२

ततो दिनकरैर्दीप्तैस् सप्तभिर्मनुजाधिप ।
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ॥ ६३

---

1. ख—इदमर्धं नास्ति 2. क-ख-घ—रहः

[1]यच्च काष्ठं तृणं वाऽपि शुष्कं चार्द्रं च भारत ।
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ॥ ६४

ततस्संवर्तको वायुर् अग्निना सहितो भृशम् ।
लोकमाविशते पूर्वम् आदित्यैरुपशोषितम् ॥ ६५

ततस्स पृथिवीं भित्त्वा प्रविश्य च रसातलम् ।
देवदानवयक्षाणां भयं जनयते महत् ॥ ६६

निर्दहन् नागलोकं च यच्च किञ्चित् क्षिताविह ।
अधस्तात् पृथिवीं राजन् सर्वं नाशयति क्षणात् ॥ ६७

ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवैर्घोरैस् तदा संवर्तकोऽनिलः ॥ ६८

सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तस्सन् सर्वानेव दिवौकसः ॥ ६९

ततो गजकुलप्रख्या विद्युन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ७०

केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ।
केचित् कुञ्जरसङ्काशाः केचित् पीताः पयोधराः ॥ ७१

[2]केचिद्धारिद्रसदृशाः केचिन्मकरसन्निभाः ।

---

1. ख—अर्धद्वयं नास्ति
2. क-ख—नास्तीदमर्धम्   घ—अर्धद्वयं नास्ति

केचिद् द्विरदसङ्काशाः कारण्डवनिभास्तथा ॥ ७२
केचित् कमलपत्राभाः केचिद्हिङ्गुलसप्रभाः ॥ ७२॥
[1]केचित् पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसङ्काशाः केचिन्मकरसंस्थिताः ॥ ७३॥

विद्युन्मालापिनद्धाङ्गास् समुत्तिष्ठन्ति वै घनाः ।
घोररूपा महाराज घोरस्वननिनादिताः ॥ ७४॥

ततो जलधरास्सर्वे व्याप्नुवन्ति नभस्स्थलम् ।
गर्जन्तः पृथिवीपाल पृथिवीधरसन्निभाः ॥ ७५॥

तैरियं पृथिवी सर्वा सपर्वतवनान्तरा ।
आपूर्यते महाराज सलिलौघपरिप्लुता ॥ ७६॥

ततस्ते जलदा घोरा राविणः पुरुषर्षभ ।
पर्वतान् प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ७७॥

वर्षमाणा महत् तोयं पूरयन्तो वसुन्धराम् ।
सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ॥ ७८॥

[2]ततो द्वादशवर्षाणि पयोदास्त उपप्लवे ।
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ७९॥

ततस्समुद्रस्स्वां वेलाम् अतिक्रामति भारत ।

---

1. ख—इदमर्धं नास्ति 2. ख—अर्धद्वयं नास्ति

पर्वताश्च [1]विशीर्यन्ते मही चापि विदीर्यते ॥ ८०॥
पर्वतैस्सहिताश्शान्तास् ते पयोदा नभस्स्थलम् ।
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ॥ ८१॥
तत[2]स्तं मारुतं घोरं स्वयम्भूर्मनुजाधिप ।
आदिः पद्मालयो देवः पीत्वा स्वपिति भारत ॥ ८२॥
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे यक्षराक्षसवर्जिते ॥ ८३॥
निर्मनुष्ये महीपाल निश्श्वापदमहीरुहे ।
अनन्तरिक्षे लोकेऽस्मिन् भ्रमाम्येकोऽहमातुरः ॥ ८४॥
एकार्णवे जले घोरे विचरन् पार्थिवोत्तम ।
अपश्यन् सर्वभूतानि वैक्लब्यमगमं परम् ॥ ८५॥
ततस्सुदीर्घं गत्वाऽहं प्लवमानो धराधिप ।
क्लान्तः क्वचिन्न शरणं लब्धवानस्म्य[3]हं ततः ॥ ८६॥
[4]ततः कदाचित् पश्यामि तस्मिन् सलिलसन्निधौ ।
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ॥ ८७॥
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप ।
पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ॥ ८८॥

---

1. अ—व्यशीर्यन्त　2. क-ख-घ—स्तस्सलिलं
3. क—निन्दिते; ख—निन्दित; घ—नन्दित
4. क-घ—नासीदमर्भम्

उपविष्टं महाराज पूर्णेन्दुसदृशाननम् ।
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ॥ ८९॥

ततो मे पृथिवीपाल विस्मयस्सुमहानभूत् ।
कथं चायं शिशुश्शेते लोके नाशमुपागते ॥ ९०॥

तपसा चिन्तितं चापि तं शिशुं नोपलक्षये ।
भूतं भव्यं भविष्यं च जानन्नपि नराधिप ॥ ९१॥

अतसीपुष्पसङ्काशं श्रीवत्सकृतलक्षणम् ।
साक्षाल्लक्ष्म्या इवावासस् स तदा प्रतिभाति मे ॥ ९२॥

ततो मामब्रवीद्बालस् स पद्मनिभलोचनः ।
श्रीवत्सधारी द्युतिमान् वाक्यं श्रुतिसुखावहम् ॥ ९३॥

श्रीभगवान्—

जानामि त्वां परिश्रान्तं तात विश्रामकाङ्क्षिणम् ।
मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव ॥ ९४॥

अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम ।
आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया ॥ ९५॥

मार्कण्डेयः—

[1]ततो बालेन तेनैव मुक्तस्यासीत् तदा मम ।
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत ॥ ९६॥

---

1. अ—अर्धद्वयं नास्ति

ततो बालेन तेनास्यं सहसा विवृतं कृतम् ।
तस्याहमवशो यत्र दैवयोगात् प्रवेशितः ॥ ९७॥

ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।
[1]सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् ॥ ९८॥

गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम् ।
चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ ९९॥

सिन्धुं चैव विपाशां च नदीं गोदावरीमपि ।
वस्वोकसारां नलिनीं नर्मदां चैव भारत ॥ १००॥

[2-3]नदीं ताम्रां च वेणां च परमामथ पाण्डव ।
[4]वितस्तां च नरव्याघ्र कावेरीं सरितां वराम् ॥ १०१॥

तुङ्गभद्रां कृष्णवेणीं कमलां च महानदीम् ।
[5]शोणां च पुरुषव्याघ्र विशल्यां शबरामपि ॥ १०२॥

एताश्चान्याश्च नद्योऽहं पृथिव्यां राजसत्तम ।
परिक्रामन् प्रपश्यामि तस्य कुक्षौ महात्मनः ॥ १०३॥

ततस्समुद्रं पश्मामि यादोगणनिषेवितम् ।

---

1. ख—न ग्लानिर्न च मे भीतिस्तत्रासीन्मनुजाधिप । [अधिकः पाठः]
2. ख—इतोऽर्धे चतुष्टयं नास्ति तत्स्थाने अधोलिखितमर्धद्वयं दृश्यते—
कावेरीं ताम्रपर्णीं च पयोष्णीमपि पाण्डव ।
तुङ्गभद्रां कृष्णवेणीं कमलां च महानदीम् । एताश्चा इत्यादि ॥
3. क-घ-ताम्रपर्णीं च परमामपि वेणां शुभावहाम् । 4. क-नास्तीदमर्धम्
5. क—शोणं च + कम्बुनामपि घ—शोणां च + कम्बुरामपि

रत्नाकरममित्रघ्न निधानं पयसां महत् ॥ १०४॥

ततः पश्यामि गगनं चन्द्रसूर्यविराजितम् ।
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभैः ॥ १०५॥

पश्यामि च महीं राजन् काननैरुपशोभिताम् ।
सपर्वतवनद्वीपां निम्नगाशतसङ्कुलाम् ॥ १०६॥

यजन्ते हि तदा राजन् [1]ब्राह्मणा बहुभिर्मखैः ।
क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जनैः ॥ १०७॥

वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ।
शुश्रूषायां च निरता द्विजानां वृषलास्तदा ॥ १०८॥

[2]ततः परिपतन राजंस् तस्य कुक्षौ महात्मनः ।
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् ॥ १०९॥

[3]निषधं चापि पश्यामि श्वेतं च रजतान्वितम् ।
पश्यामि च महीपाल पर्वतं गन्धमादनम् ॥ ११०॥

मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम् ।
पश्यामि च महाराज मेरुं कनकपर्वतम् ॥ १११॥

महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम् ।
मलयं च महाशैलं पारियात्रं च पर्वतम् ॥ ११२॥

---

1. क-घ—ब्राह्मणाः पशुभिस्सह ख—ब्राह्मणा विविधैस्सवैः
2. ख—इदमर्धं नास्ति
3. अ-क-ख—अर्धचतुष्टयं नास्ति

एते चान्ये च बहवो यावन्तः पृथिवीधराः ।
तस्योदरे मया दृष्टास् सर्वे रत्नविभूषिताः ॥ ११३॥
[1]सिंहान् व्याघ्रान् वराहांश्च नागांश्च मनुजाधिप ।
पृथिव्यां यानि चान्यानि सत्वानि जगतीपते ॥ ११४॥
तानि सर्वाण्यहं तत्र पश्यन् पर्यचरं तदा ॥ ११५
[2]कुक्षौ तस्य नरव्याघ्र प्रविष्टस्सञ्चरन् दिशम् ।
शक्रादींश्च प्रपश्यामि कृत्स्नान् देवगणांस्तथा ॥ ११६
गन्धर्वाप्सरसो यक्षान् ऋषींश्चैव महीपते ।
[3]दैत्यदानवसङ्घांश्च कालेयांश्च नराधिप ॥ ११७
[4]सिंहिकातनयांश्चैव ये चान्ये सुरशत्रवः ॥ ११७॥
यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः ॥ ११८॥
फलाहारः प्रविचरन् कृत्स्नं जगदिदं तदा ।
अन्तश्शरीरे तस्याहं [5]वर्षाणामयुतं शतम् ॥ ११९॥
अथ पश्यामि तस्याहं देहस्यान्तं न कर्हिचित् ।
सततं परिधावंश्च चिन्तयंश्च महाद्युते ॥ १२०॥

1. ख—इदमर्धं नास्ति
2. अ—अर्धचतुष्टयं नास्ति; ख—नास्तीदमर्धम्
3. ख—नास्तीदमर्धम्
4. ख—इदमर्धं नास्ति
5. क-ख—मयुतायुतम्; घ—वर्षायुतशतं चिरम्

[1]भ्रमंस्तत्र महीपाल यदा वर्षगणान् बहून् ।
आसादयामि नैवान्तं तस्य राजन् महात्मनः ॥ १२१॥
[2]ततस्तमेव शरणं गतोऽस्मि विधिवत् तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ १२२॥
ततोऽहं सहसा राजन् वायुवेगेन निस्सृतः ।
महात्मनो मुखात् तस्य विवृतात् पुरुषोत्तम ॥ १२३॥
ततस्तस्यैव शाखायां न्यग्रोधस्य महात्मनः ।
आस्ते [3]मनुजशार्दूल कृत्स्नमादाय वै जगत् ॥ १२४॥
तेनैव बालवेषेण [4]श्रीवत्सकृतलक्षणम् ।
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ॥ १२५॥
ततो मामब्रवीद्बालस् स प्रीतः प्रहसन्निव ।
[5]श्रीवत्सधारी द्युतिमान् पीतवासा महाद्युतिः ॥ १२६॥

श्रीभगवान्—

[6]अपीदानीं शरीरेऽस्मिन् मामके मुनिसत्तम ।
उषितस्त्वं सुविश्रान्तो मार्कण्डेय ब्रवीहि मे ॥ १२७॥

मार्कण्डेयः—

मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।

---

1. ख—इदमर्धं नास्ति
2. ख—अर्धपञ्चकं नास्ति
3. क-ख-घ—स नर
4. क-घ—श्रीवत्साङ्कविभूषणम्
5. ख—इदमर्धं नास्ति
6. क-घ—अपारे मे

मायानिर्मुक्तमात्मानम् अपश्यं लब्धचेतसम् ॥ १२८॥

तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिर् अङ्गुलीभिरलङ्कृतौ ॥ १२९॥

[1]प्रयतेन मया मूर्ध्ना गृहीत्वा चाभिवादितौ ।
दृष्ट्वाऽ[2]परिमितं तस्य प्रभावममितौजसः ॥ १३०॥

विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य ह ।
दृष्टो मया स भूतात्मा देवः कमललोचनः ॥ १३१॥

तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रवम् ।
ज्ञातुमिच्छामि देव त्वां मायां चेमां तवोत्तमाम् ॥ १३२॥

आस्येनाहं प्रविष्टोऽस्मि देहं तव सुरोत्तम ।
दृष्टवानखिलाँल्लोकान् समस्तान् जठरे तव ॥ १३३॥

तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगच्च स्थाणुजङ्गमम् ॥ १३४॥

त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
द्रुतमन्तश्शरीरे ते सततं परिधावतः ॥ १३५॥

इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाऽहमनिन्दित । १३६
इह भूत्वा शिशुस्साक्षात् किं भवानधितिष्ठति ।
पीत्वा जगदिदं सर्वम् एतदाख्यातुमर्हसि ॥ १३७

1. ख—इदमर्धं नास्ति  2. क-ख-घ—महात्मनस्तस्य

किमर्थं च जगद्विश्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालम् इह स्थेयमरिन्दम ॥ १३८

एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया ।
त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम् ॥ १३९
महद्ध्येयमचिन्त्यं च यदहं दृष्टवान् प्रभो ॥ १३९॥

इत्युक्तस्स मया श्रीमान् देवदेवो महाद्युतिः ।
सान्त्वयन् मामिदं वाक्यम् उवाच वदतां वरः ॥ १४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ अस्मिन्नध्याये १४०॥ श्लोकाः ]

---

## ॥ एकषष्ट्यधिकशततमोऽध्यायः ॥

हरिणा मार्कण्डेयं प्रति स्वमाहात्म्यकथनपूर्वकमन्तर्धानम् ॥ १ ॥ मार्कण्डेयेन युधिष्ठिरादीन् प्रति कृष्णस्य सर्वोत्तमत्वप्रतिपादनेन तं प्रति शरणगमनचोदना ॥ २ ॥

---

श्रीभगवान्—

कामं देवाश्च मां विप्र न हि जानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ १

पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः ।

[1]अतस्तुष्टोऽस्मि ते साक्षाद् ब्रह्मचर्यं च ते महत् ॥ २
आपो नारा इति प्रोक्तास् तास्तु धाम कृतं मया ।
तेन नारायणोऽप्युक्तो मम तद्ध्ययनं सदा ॥ ३
अहं नारायणो नाम प्रभवश्शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ ४
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ५
अहं शिवश्च सोमश्च काश्यपश्च प्रजापतिः ।
[2]अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ६
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
नभश्च सकलं कायो वायुर्मनसि मे स्थितः ॥ ७
मया क्रतुशतैरिष्टं बहुभिस्त्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवसदने स्थितम् ॥ ८
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवास्स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्यास् स्वर्गलोकजिगीषया ॥ ९
चतुस्समुद्रपर्यन्तां मेरुमन्दरभूषणाम् ।
शेषो भूत्वा ऽहमेवैतां धारयामि वसुन्धराम् ॥ १०
वाराहं रूपमास्थाय मयेयं जगती पुरा ।

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति

मज्जमाना जले विप्र वीर्येणासीत् समुद्धृता ॥ ११

अग्निश्च बडबावक्त्रो भूत्वाऽहं द्विजसत्तम ।

पिबाम्यपस्सदा विद्वंस् ताश्चैव विसृजाम्यहम् ॥ १२

ब्रह्म वक्त्रं भुजौ क्षत्रम् ऊरू मे संस्थिता विशः ।

पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ॥ १३

ऋग्वेदस्सामवेदश्च यजुर्वेदो ह्यथर्वणः ।

मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति ते ॥ १४

यतयश्शान्तिपरमा यतात्मानो मुमुक्षवः ।

अक्रोधद्वेषसंयुक्ता निस्सङ्गा वीतकल्मषाः ॥ १५

सत्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः ।

मामेव सततं विप्राश् चिन्तयन्त उपासते ॥ १६

अहं संवर्तको ज्योतिर् अहं संवर्तको यमः ।

[1]अहं संवर्तकस्सूर्यस् त्वहं संवर्तकोऽनिलः ॥ १७

तारारूपाणि दृश्यन्ते यान्येतानि नभस्स्थले ।

मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम ॥ १८

रत्नाकरास्समुद्राश्च सर्वे एव चतुर्दिशः ।

सवनं शयनं चैव निलयं चैव विद्धि मे ॥ १९

कामं क्रोधं च हर्षं च भयं मोहं तथैव च ।

---

1. ख—इदमर्धं नास्ति

ममैव विद्धि रोमाणि सर्वाण्येतानि सत्तम ॥ २०

प्राप्नुवन्ति नरा विप्र यत् कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रम् अहिंसा चैव जन्तुषु ॥ २१

मद्विधानेन विहिता मम देहविहारिणः ।
मयाऽपहृतविज्ञाना विचेष्टन्ते न कामतः ॥ २२

सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ २३

[1]प्राप्तुं न शक्यो यो विद्वन् नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैर् अनार्यैरकृतात्मभिः ॥ २४

तस्मान्महाफलं विद्धि पदं सुकृतकर्मणः ।
दुष्प्रापं विप्रमूढानां मार्गं योगैर्निषेवितम् ॥ २५

यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ २६

[2]सयक्षमानवैश्चाहम् अवध्यो देवदानवैः ॥ २६॥

राक्षसाश्चापि लोकेऽस्मिन् यदोत्पत्स्यन्ति दारुणाः ।
तदाऽहं सम्प्रसूयामि गृहेषु शुभकर्मणाम् ॥ २७॥

[3]प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ २८

---

1. ख—अर्धद्वयं नास्ति    2. क-ख-च—सर्वैश्च मनुजैश्चाहम्
3. ख—इदमर्धं नास्ति

[1]सृष्ट्वा दैत्यमनुष्यांश्च गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥ २९

कर्मकाले पुनर्देहम् अनुचिन्त्य सृजाम्यहम् ।
आविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ ३०

श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
श्यामो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ३१

त्रयो भागा ह्यधर्मस्य तस्मिन् काले भवन्त्युत ।
यदा भवति मे वर्णः कृष्णो वै मुनिसत्तम ॥ ३२

अन्तकाले च सम्प्राप्ते कालो भूत्वाऽतिदारुणः ।
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ॥ ३३

अहं त्रिवर्त्मा सर्वात्मा सर्वलोकसुखावहः ।
अजितस्सर्वगोऽनन्तो हृषीकेशो नरोत्तम ॥ ३४

कालचक्रं नयाम्येको ब्रह्मन्नहमरूपिणम् ।
[2]शमनं सर्वभूतानां सर्वकालकृतोद्यमम् ॥ ३५

एवं प्रणिहितस्सम्यङ्मायया मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ३६

[3]सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ॥ ३६॥

---

1. क—अर्धत्रयं नास्ति
2. ख—नास्तीदमर्धम्
3. ख—इदमर्धं नास्ति

यच्च किञ्चित् त्वया प्राप्तं [1]मयि क्लेशात्मकं द्विज ।
सुखोदयाय तत् सर्वं श्रेयसे च तवानघ ॥ ३७॥
यच्च किञ्चित् त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहितस्सर्वथैवात्मा ममासौ भूतभावनः ॥ ३८॥
अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ३९॥
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत् स्वपिमि विश्वात्मा सर्वलोकपितामहः ॥ ४०॥
एवं सर्वमहं कालम् इहासे मुनिपुङ्गव ।
अशिशुश्शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ४१॥
मया च विप्र दत्तोऽयं वरस्ते ब्रह्मरूपिणा ।
असकृत् परितुष्टेन विप्रर्षिगणपूजित ॥ ४२॥
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विक्लबोऽसि मया ज्ञातस् ततस्ते दर्शितं जगत् ॥ ४३॥
अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥ ४४॥
ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निस्सारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञेयोऽपि सुरासुरैः ॥ ४५॥

1. क—मयीशे हि द्विजोत्तम ; घ—मयि क्लेशाद् द्विजोत्तम ।

यावत् स भगवान् ब्रह्मा न बुध्येत महातपाः ।
तावत् त्वमपि विप्रर्षे विस्रब्धश्चर वै सुखम् ॥ ४६॥

ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतः प्रवेक्ष्यामि शरीराणि द्विजोत्तम ॥ ४७॥

आकाशं पृथिवीं ज्योतिर् वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषम् इह स्थावरजङ्गमम् ॥ ४८॥

मार्कण्डेयः—

इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विचित्रा विविधाः कृताः ॥ ४९॥

एवं दृष्टं मया तात तस्मिन् प्राप्ते युगक्षये ।
[1]आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतां वर ॥ ५०॥

पुरा देवो मया दृष्टस् स हि पद्मायतेक्षणः ।
स एष पुरुषव्याघ्र सम्बन्धी ते जनार्दनः ॥ ५१॥

अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं तथा । ५२॥

[2]एष कृष्णो हि दाशार्हः पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥ ५३॥

एष धाता विधाता च संहर्ता चैव शाश्वतः ।

---

1. अ—अर्धत्रयं नास्ति    घ—अर्धपञ्चकं नास्ति
2. अ—स एष कृष्णो वार्ष्णेयः

श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ५४॥
दृष्ट्वेमं वृष्णिशार्दूलं स्मृतिर्मामियमागता ।
आदिदेवमजं विष्णुं पुरुषं पीतवाससम् ॥ ५५॥
सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ॥ ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ५६॥ श्लोकाः ]

---

## ॥ द्विषष्ट्यधिकशततमोऽध्यायः ॥

---

पाण्डवैश्श्रीकृष्णस्य शरणवरणम् ॥१॥ श्रीकृष्णेन पाण्डवानां सान्त्वनम् ॥२॥ मार्कण्डेयेन युधिष्ठिरं प्रति कलौ भविष्यल्लोकवृत्तान्तकथनम् ॥ ३ ॥ कलियुगान्ते कल्किस्त्वेनावतरिष्यता हरिणा दुष्टजनसंहारः ॥ ४ ॥

---

वैशम्पायनः—

एवमुक्तास्तु ते पार्था यमौ च पुरुषर्षभ ।
द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम् ॥ १
स चैतान् पुरुषव्याघ्रान् साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हान् मन्यमानो यथाविधि ॥ २
युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् ।

पुनः पप्रच्छ सामात्यो भविष्यां जगतो गतिम् ॥ ३

युधिष्ठिरः—

आश्चर्यभूतं भवतश्‌ श्रुतं नो वदतां वर ।

मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ॥ ४

अस्मिन् कलियुगे ऽप्यस्ति पुनः कौतूहलं मम ।

समाकुलेषु धर्मेषु किं नु शेषं भविष्यति ॥ ५

किंवीर्या मानवास्तत्र किमाहारविहारिणः ।

किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ६

कां च काष्ठां समासाद्य पुनस्सम्पत्स्यते कृतम् ।

विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ७

वैशम्पायनः—

इत्युक्तस्स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।

रमयन् वृष्णिशार्दूलं पाण्डवांश्च महामुनिः ॥ ८

मार्कण्डेयः—

[1]भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ ।

कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ९

कृते चतुष्पात् सकलो निर्व्याजोपाधिवर्जितः ।

वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत् पुरा ॥ १०

[2]धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः ।

---

1. ख—शृणु राजन् मया दृष्टं यत् पुरा श्रुतमेव च । [अधिकः पाठः]

2. घ—अधर्मपादविद्धस्तु

त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥ ११

त्रिभिरंशैरधर्मस्तु मनुष्यानुपतिष्ठति ।
[1]चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ॥ १२

आयुर्वीर्यं मनो बुद्धिर् बलं तेजश्च पाण्डव ।
मनुष्याणामनुयुगं ह्रसन्तीति निबोध मे ॥ १३

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चैव युधिष्ठिर ।
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका जनाः ॥ १४

सत्यं सङ्क्षिप्यते लोके नरैः पण्डितमानिभिः ।
सत्यहान्या ततस्तेषाम् अल्पमायुर्भविष्यति ॥ १५

आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम् ॥ १५॥

विद्याहीनानविज्ञाना[2]ल्लोभोऽप्यभिभविष्यति ॥ १६

लोभमोहपरा मूढाः कामासक्ताश्च मानवाः ।
वैरसक्ता भविष्यन्ति परस्परवधेप्सवः ॥ १७

ब्राह्मणाः क्षत्रिया वैश्यास् सङ्किरन्तः परस्परम् ।
शूद्रतुल्या भविष्यन्ति तपस्सत्यविवर्जिताः ॥ १८

अन्त्या मध्या भविष्यन्ति मध्याश्चान्तावसायिनः ॥ १८॥

---

1. अ-क—इदमर्धं नास्ति
2. क—लोभक्रोधोऽभि ; ख—विद्याहीनानभिज्ञाना
ख-घ—लोभक्रोधौ भविष्यतः

ईदृशो भविता लोको युगान्ते पर्युपस्थिते ॥ १९

वस्त्राणां प्रवरा शाटी धान्यानां कोरदूषकाः ।
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ॥ २०

[1]मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजाविकान् ।
गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः ॥ २१
तेऽपि लोभसमायुक्ता भविष्यन्ति युगक्षये ॥ २१॥
अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकास्स्तेना भविष्यन्ति युगक्षये ॥ २२॥
[2]ततस्तीरेषु कुद्दालैर् वापयिष्यन्ति चौषधीः ।
ताश्चाप्यफलकास्तेषां भविष्यन्ति युगक्षये ॥ २३॥
श्राद्धे दैवे च पुरुषा ये च नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भक्षयन्ति परस्परम् ॥ २४॥
पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अनिष्टानि च भोज्यानि भविष्यन्ति युगक्षये ॥ २५॥
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः ॥ २६॥
न चेष्टिं कारयिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः ।

---

1. अ—दशार्धानि न सन्ति ; ब—षडर्धानि न सन्ति
2. क–अर्धद्वयं नास्ति

एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः ॥ २७॥
पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ २८॥
म्लेच्छभूतं जगत् सर्वं निष्क्रियं यज्ञवर्जितम् ।
भविष्यति निरानन्दम् अनुत्सवममङ्गलम् ॥ २९॥
प्रायशः कृपणानां तु तथा बन्धुमतामपि ।
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ॥ ३०॥
अल्पवीर्यबलास्स्तब्धा लोभमोहपरायणाः ।
तत्कथादानसंतुष्टाश् शिष्टानामपि बान्धवाः ॥ ३१॥
परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः ।
सङ्घातयन्तः कौन्तेय राजानः पापबुद्धयः ॥ ३२॥
परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ॥ ३३॥
अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः ।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ॥ ३४॥
आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च ।
भोक्ष्यन्ति निरनुक्रोशा रुदतामपि भारत ॥ ३५॥
न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ।
स्वयंग्रहा भविष्यन्ति युगान्ते पर्युपस्थिते ॥ ३६॥

[1]राजानश्चाप्यसन्तुष्टाः परार्थान् मूढचेतसः ।
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३७॥
वैरभूतं जगत् सर्वं भविष्यति च भारत ।
हस्तो हस्तं प्रमुष्णाति युगान्ते पर्युपस्थिते ॥ ३८॥
[2]सत्यं सङ्क्षिप्यते लोके नरैः पण्डितमानिभिः ।
स्थविरा बालमतयो बालास्स्थविरबुद्धयः ॥ ३९॥
भीरवश्शूरमानाश्च शूरा भीरुविषादिनः ।
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ॥ ४०॥
नैकभार्यं जगत् सर्वं लोभमोहव्यवस्थितम् ।
अधर्मो वर्धते तत्र न तु धर्मः प्रवर्तते ॥ ४१॥
ब्राह्मणाः क्षत्रिया वैश्या नशिष्यन्ति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ४२॥
न रक्षति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्या च पतिशुश्रूषां न करिष्यति काचन ॥ ४३॥
ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान् देशान् संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ४४॥
स्वैराहाराश्च पुरुषा योषितश्च विशां पते ।
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ॥ ४५॥

1. अ-क—अर्धचतुष्टयं नास्ति 2. ख—अर्धचतुष्टयं नास्ति

म्लेच्छभूतं जगत् सर्वं भविष्यति युधिष्ठिर ।
श्राद्धे न देवान् न पितॄंस् तर्पयिष्यन्ति मानवाः ॥ ४६॥
न कश्चित् कस्यचिच्छ्रोता न कश्चित् कस्यचिद्गुरुः ।
तमोग्रस्तस्तदा लोको भविष्यति नराधिप ॥ ४७॥
परमायुश्च भविता तदा वर्षाणि षोडश ।
ततः प्राणान् विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ४८॥
पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ॥ ४९॥
पत्यौ पत्नी तदा राजन् पुरुषो वा स्त्रियं प्रति ।
युगान्ते राजशार्दूल न तोषमुपयास्यति ॥ ५०॥
अल्पद्रव्यो वृथालिङ्गो हिंसां च प्रचरिष्यति ।
न कश्चित् कस्यचिद्दाता भविष्यति युगक्षये ॥ ५१॥
अट्टशूला जनपदाश् शिवशूलाश्चतुष्पथाः ।
केशशूलास्स्त्रियस्सर्वा भविष्यन्ति युगक्षये ॥ ५२॥
म्लेच्छा[1]श्शूद्रास्सर्वभक्षा दारुणास्सर्वकर्मसु ।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः ॥ ५३॥
क्रयविक्रयकाले च सर्वस्सर्वस्य वञ्चनाम् ।
युगान्ते भरतश्रेष्ठ वृत्तिलोभात् करिष्यति ॥ ५४॥

1. क-ख-ब—क्रूराः

ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ।
आत्मच्छन्देन वर्तन्ते युगान्ते पर्युपस्थिते ॥ ५५॥

स्वभावात् क्रूरकर्माणश् चान्योन्यमभिशङ्किनः ।
भवितारो जनास्सर्वे सम्प्राप्ते तु युगक्षये ॥ ५६॥

आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः ।
भविता संशयो लोके जीवितस्य च देहिनाम् ॥ ५७॥

तथा लोभाभिभूताश्च चरिष्यन्ति महीमिमाम् ।
[1]ब्राह्मणान् निहनिष्यन्ति ब्रह्मस्वानि च भुञ्जते ॥ ५८॥

हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ।
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् ॥ ५९॥

जीवितान्तकरा रौद्राः क्रूराः प्राणिविहिंसकाः ।
यदा भविष्यन्ति नरास् तदा सम्पत्स्यते युगम् ॥ ६०॥

[2]आश्रयिष्यन्ति च नदीः पर्वतान् विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ॥ ६१॥

दस्युभिः पीडिता राजन् काका इव द्विजातयः ।
कुराजभिश्च सततं करभारप्रपीडिताः ॥ ६२॥

---

1. क—ब्राह्मणश्च भविष्यन्ति + भोक्ष्यते ; ख—ब्राह्मणाश्चोरयिष्यन्ति घ—ब्राह्मणांश्च वधिष्यन्ति

2. ख—अर्धपद्यकं नास्ति तत्स्थाने–द्विजा भृत्यत्वमापन्ना दारुणा युगसंक्षये । इदमर्धं वर्तते ।

धैर्यं त्यक्त्वा महाराज दारुणे युगसङ्क्षये ।
विकर्माणि करिष्यन्ति [1]शूद्राश्चपरिचारकाः ॥ ६३॥

शूद्रा धर्मान् प्रवक्ष्यन्ति न द्विजा युगसङ्क्षये ।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः ॥ ६४॥

विपरीतश्च लोकोऽयं [2]भविष्यत्यधरोत्तरः ।
जलूकान् पूजयिष्यन्ति वर्जयिष्यन्ति देवताः ॥ ६५॥

शूद्रा [3]अभिवदिष्यन्ति न द्विजा युगसङ्क्षये ॥ ६६

आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च ।
देवस्थानेषु चैत्येषु नागानामालयेषु च ॥ ६७

जालूकचिह्ना पृथिवी न देवगृहभूषिता ।
[4]भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥ ६८

यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ।
भविष्यन्ति नरा नित्यं तदा सङ्क्षेप्स्यते युगम् ॥ ६९

पुष्पं पुष्पे यदा राजन् फले वा फलमाश्रितम् ।
प्रजास्यति नरश्रेष्ठ तदा सङ्क्षेप्स्यते युगम् ॥ ७०
अकालवर्षी पर्जन्यो भविष्यति युगक्षये ॥ ७०॥

---

1. अ—अयं पादोऽनन्तरश्च न स्तः
2. क-ख-व—भविष्यति नरोत्तम
3. क-व—श्च प्रभविष्यन्ति  ख—इदमर्धद्वयं नास्ति
4. ख—इदमर्धं नास्ति

[1]अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रियाः ॥ ७१

विरोधमथ यास्यन्ति वृषला ब्राह्मणैस्सह ।
मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ॥ ७२

[2]करभारभयाद्विप्रा द्रविष्यन्ति दिशो दश ।
अन्यायवर्तिनश्चापि भविष्यन्ति नराधिपाः ॥ ७३

निर्विशेषा जनपदा अनावृष्टिभिरर्दिताः ।
आश्रमानभिपत्स्यन्ति फलमूलोपजीविनः ॥ ७४

एवं पर्याकुले लोके मर्यादा न भविष्यति ॥ ७४॥

ब्राह्मणाः क्षत्रिया वैश्याः परित्यक्ष्यन्ति सत्क्रियाम् ।
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः ॥ ७५॥
आचार्योपनिधिश्चैव वेत्स्यते तदनन्तरम् ॥ ७६

अर्थयुक्त्या प्रपश्यन्ति मित्रसम्बन्धिबान्धवाः ।
अभावस्सर्वभूतानां युगान्ते च भविष्यति ॥ ७७

दिशः प्रज्वलि[3]तास्सर्वा नक्षत्राणि जलानि च ।
[4]प्रधूपितानि ज्योतींषि वाताः पर्याकुलास्तथा ॥ ७८
[5]उल्कापाताश्च बहवो महाभयनिदर्शकाः ।

---

1. ख—इदमर्धद्वयं नास्ति
2. ख—अर्धद्वयं नास्ति
3. ख—ताश्चापि वाताः पर्याकुलास्तथा मध्ये अर्धं नास्ति
4. क—अर्धपञ्चकं नास्ति
5. घ—अर्धचतुष्टयं नास्ति

[1]षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ॥ ७९
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ॥ ७९॥
कबन्धान्तर्हितो भानुर् उदयास्तमये तदा ।
[2]अकालवर्षी च तदा भविष्यति [3]सहस्रदृक् ॥ ८०॥
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ८१
[4]अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ।
भर्तृणां वचने चैव न स्थास्यन्ते तदा स्त्रियः ॥ ८२
पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ।
[5]सूदयिष्यन्ति च पतीन् स्त्रियः पुत्रानपाश्रिताः ॥ ८३
अपर्वणि महाराज सूर्यं राहुरुपैष्यति ।
[6]युगान्ते हुतभुक् चापि सर्वतः प्रज्वलिष्यति ॥ ८४
पानीयं भोजनं चापि याचमानास्तदाऽध्वगाः ।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ॥ ८५
निर्घातवायसा नागाश् शकुनास्समृगाद्विजाः ।
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ८६
[7]मित्रं सम्बन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा ॥ ८६॥

---

1. ख—अर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति
3. क-ग—युगक्षये
4. अ—अर्धदशकं नास्ति
5. ख—नास्तीदमर्धम्
6. ख—नास्तीदमर्धम्
7. क-ग—अर्धचतुष्टयं नास्ति

[1-2]अथ देशान् दिशश्चैव पत्तनानि पुराणि च ।
क्रमशस्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ८७॥

हा तात हा सुतेत्येवं तदा वाचस्सुदारुणाः ।
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ॥ ८८॥

[3]भोवादिनस्तथा शूद्रा ब्राह्मणाः प्राकृतप्रियाः ।
पाषण्डजनसङ्कीर्णा भविष्यन्ति युगक्षये ॥ ८९॥

ततस्तुमुलसङ्घाते वर्तमाने युगक्षये ।
द्विजातिपूर्वको लोकः क्रमेण प्रपतिष्यति ॥ ९०॥

[4]ततः कालान्तरेऽन्यस्मिन् पुनर्लोकविवृद्धये ।
भविष्यति पुनर्दैवम् अनुकूलं यदृच्छया ॥ ९१॥

यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति सम्पत्स्यति तदा कृतम् ॥ ९२॥

कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ।
[5]दक्षिणानि भविष्यन्ति ग्रहाश्चाप्यनुलोमकाः ॥ ९३॥

क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥ ९४

कल्की विष्णुयशा नाम द्विजः कालप्रचोदितः ।

---

1. ख—इदमर्धद्वयंनास्ति
2. ८७॥ श्लोकस्थाने "जनं परिजनं चैव सत्यं च युगसंक्षये" इत्यर्धं अधिकतया ख-कोशे वर्तते
3. ख—अर्धद्वयं नास्ति
4. क—नास्तीदमर्धम्
5. ख—प्रदक्षिणानि गच्छन्ति ग्रहाश्चापि परस्परम्। [पाठान्तरम्]

उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥ ९५

सम्भूतश्शम्बलग्रामे ब्राह्मणावसथे शुभे ।
महात्मा वृत्तसम्पन्नः प्रजानां हितकृन्नृप ॥ ९६

मनसा तस्य सर्वाणि वाहनान्यायुधानि च ।
उपस्थास्यन्ति [1]योगाश्च शस्त्राणि कवचानि च ॥ ९७

स धर्मविजयी राजा चक्रवर्ती भविष्यति ।
स चेमं सकलं लोकं प्रसादमुपनेष्यति ॥ ९८

उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः ।
सङ्क्षेपो हि स सर्वस्य युगस्य परिवर्तकः ॥ ९९

स सर्वत्र गतः क्षुद्रान् ब्राह्मणैः परिवारितः ।
उत्सादयिष्यति तदा सर्वम्लेच्छगणान् द्विजः ॥ १००

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये १०० श्लोकाः ]

---

1. क-ख-ग—योगैश्च

## ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥



मार्कण्डेयेन युधिष्ठिरं प्रति कृतयुगवृत्तान्तकथनपूर्वकं धर्माचरणचोदना ॥



मार्कण्डेयः—

ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् ।
वाजिमेधे महायज्ञे विधिवत् कल्पयिष्यति ॥ १

स्थापयित्वा स्वमर्यादास् स्वयम्भुविहिताश्शुभाः ।
[1]पुनः पुण्ययशःकर्म जरया संश्रयिष्यति ॥ २

तच्छीलमनुवर्तन्ते मनुष्या लोकचारिणः ॥ २॥
[2]विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति ॥ ३

कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।
स्थापयन् द्विजशार्दूलो देशेषु विजितेषु च ॥ ४

संस्तूयमानो विप्रेन्द्रैर् मानयंश्च द्विजोत्तमान् ।
कल्की चरिष्यति महीं सदा दस्युवधे रतः ॥ ५

हा तात हा सुतेत्येवं तास्ता वाचस्सुदारुणाः ।
विक्रोशमानान् सुभृशं दस्यून् नेष्यति सङ्क्षयम् ॥ ६

ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत ।

1. ख—चनं 2. ध—अर्धचतुष्टयं नास्ति

भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ७

आरामाश्चैव चैत्याश्च तटाकान्यवटास्तथा ।
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ॥ ८
ब्राह्मणास्साधवश्चैव मुनयश्च तपस्विनः ॥ ८॥

[1]आश्रमा हृतपाषण्डास् स्थितास्सत्यजनाः प्रजाः ।
जायन्ति सर्वभूतानि शुध्यमानानि चैव हि ॥ ९॥
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति ॥ १०

नरा दानेषु निरता व्रतेषु नियमेषु च ।
जपयज्ञपरा विप्रा धर्मकामा मुदाऽन्विताः ॥ ११
पालयिष्यन्ति राजानो धर्मेणेमां वसुन्धराम् ॥ ११॥

व्यवहारपरा वैश्या भविष्यन्ति कृते युगे ।
[2]षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः ॥ १२॥
शुश्रूषायां रताश्शूद्रास् तथा वर्णत्रयस्य च ॥ १३

एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ।
पश्चिमे युगकाले च यस्स ते सम्प्रकीर्तितः ॥ १४
सर्वलोकस्य कथिता युगसङ्ख्या च पाण्डव ॥ १४॥

एतत् ते सर्वमाख्यातम् अतीतानागतं मया ।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् ॥ १५॥

1. अ—नास्तीदमर्धम्  2. ख—इदमर्धं नास्ति

[1]एवं संसारमार्गा मे बहुशश्चिरजीविनः ।
दृष्टाश्चैवानुभूताश्च किं भूयश्श्रोतुमिच्छसि ॥ १६॥

सर्वमेतद्यथातत्त्वं कथितं तव पार्थिव ।
[2]धर्मसंशयहेतोश्च निबोध वचनं मम ॥ १७॥

न तेऽन्यथाऽत्वा विज्ञेयो धर्मो धर्मभृतां वर ।
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ॥ १८॥

न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणो रुषितो हन्याद् अपि लोकान् प्रतिज्ञया ॥ १९॥

वैशम्पायनः—

मार्कण्डेयवचश्श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान् परमं परमद्युतिः ॥ २०॥

युधिष्ठिरः—

एतच्छ्रुत्वा मया किं स्यात् कर्तव्यं मुनिसत्तम ।
कथं चायं जितो लोको रक्षितव्यो भविष्यति ॥ २१॥

मार्कण्डेयः—

दयावान् सर्वभूतेषु हितो रक्तोऽनसूयकः ।
अपत्यानामिव स्नेहात् प्रजानां रक्षणे रतः ॥ २२॥

चर धर्मं त्यजाधर्मं पितॄन् पूर्वाननुस्मर ।
प्रमादाद्यत् कृतं तेऽभूत् सम्यग्दानेन तज्जय ॥ २३॥

---

1. ख—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

अलं ते मानमाश्रित्य सततं प्रियवाग् भव ।
विजित्य पृथिवीं सर्वां मोदमानस्सुखी भव ॥ २४॥

[1]एष भूतो भविष्यश्च धर्मस्ते समुदीरितः ।
न मेऽस्त्यविदितं किञ्चिद् अतीतानागतं भुवि ॥ २५॥

[2]तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः ।
प्राज्ञास्तात न मुह्यन्ति कालेनाभिप्रपीडिताः ॥ २६॥

[3]एष कालो महाराज अपि सर्वदिवौकसाम् ।
उह्यन्ते हि प्रजास्तात कालेनापि प्रचोदिताः ॥ २७॥

मा च तेऽत्र विचारोऽभूद् यन्मयोक्तं तवानघ ।
अतिशङ्क्य वचो ह्येतद् धर्मलोपो भवेत् तव ॥ २८॥

[4]जातोऽसि पश्चिमे वंशे कुरूणां कुरुसत्तम ।
कर्मणा मनसा वाचा सर्वमेतत् समाचर ॥ २९॥

युधिष्ठिरः—

यत् त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् ।
तथा करिष्ये यत्नेन भवतश्शासनं विभो ॥ ३०॥

[5]न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः ।

---

1. ख—इदमर्धं नास्ति
2. अ-क-घ—नास्त्ययं श्लोकः
3. ख—इदमर्धं नास्ति
4. ख—इदमर्धं नास्ति
5. क-ख—इदमर्धद्वयं नास्ति

करिष्यामि हि तत् सर्वम् उक्तं यत् ते प्रियं प्रभो ॥ ३१॥

वैशम्पायनः—

श्रुत्वा तु वचनं तस्य पाण्डवस्य यशस्विनः ।

प्रहृष्टाः पाण्डवा राजन् सहिताश्शार्ङ्गधन्वना ॥ ३२॥

[1]तथा प्रश्नां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः ।

विस्मितास्समपद्यन्त पुराणस्य निवेदने ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

## ॥ चतुष्षष्ट्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति ब्राह्मणमाहात्म्यप्रतिपादकमण्डूकोपाख्यानकथनारम्भः ॥ १ ॥ इक्ष्वाकुवंशजेन परीक्षिन्नामकेन राज्ञा मृगयार्थं वनं प्रविष्टेन उदकादर्शनरूपसमयकरणेन मण्डूककन्यायाः परिणयः ॥ २ ॥ राज्ञा समयातिलङ्घने तया जले निमज्जनम् ॥ ३ ॥ तदन्वेषणाय राज्ञा मण्डूकहनने तापसरूपिणा मण्डूकराजेन तन्निवारणेन तस्याः स्वपुत्रीत्वकथनादिपूर्वकं पुनस्तस्मै तस्याः प्रदानम् ॥ ४ ॥ मार्कण्डेयेन मण्डूकपुत्र्याः पुत्रयोः शलदलयोर्वृत्तकथनपूर्वकं वामदेवमुनिमाहात्म्यकथनम् ॥

वैशम्पायनः—

भूय एव ब्राह्मणमाहात्म्यं भगवान् वक्तुमर्हतीत्यब्रवीत् पाण्डवेयो मार्कण्डेयम् ॥ १

1. ख—विप्रर्षभाश्च ते सर्वे ये तत्रासन् समागताः । [अधिकः पाठः]
ख—दमर्थं नास्ति

अथाचष्ट मार्कण्डेयः ॥ २

अयोध्यायामिक्ष्वाकुकुलोत्पन्नः पार्थिवः परीक्षिन्मृगयामगमत् ॥ ३

स एकोऽश्वेन मृगमन्वसरत् ॥ ४

अथाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्चैकस्मिंश्चिदुद्देशे नीलं गहनं वनषण्डमपश्यत् ॥ ५

[1]तस्याविशेषतो वनषण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ॥ ६

[2]अथाश्वस्थस्स बिसमृणालमास्वाद्याश्वस्याग्रतो निक्षिप्य पुष्करिणीतीरे शयनमभजत ततश्शयानो मधुरं गीतशब्दमश्शृणोत् ॥ ७

श्रुत्वा चाऽचिन्तयत् नेह मनुष्यगतिं पश्यामि कस्य खल्वयं गीतशब्द इति ॥ ८

[3]अथापश्यत् कन्यां परमदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीं नृत्यन्तीं च साऽथ राज्ञः समीपमुपाक्रामत् ॥ ९

---

1. ख—इदं नास्ति 'वनषण्डस्य' इत्यारम्भः
2. क—तथाऽश्वस्थस्सह तृणान्यश्वस्य दत्वा स्वयमाविशत् ।
 ख—स्नातस्सन् तृणान्यश्वस्य दत्त्वा सुखमाविशत् । ततश्शयानः—
 घ—तथाऽश्वस्थस्स तृणान्यश्वस्य दत्वा स्वयमाविशत्
3. (९ तमवाक्ये गायन्तीं नृत्यन्तीं चेतिपदद्वयं नास्ति घकोशे)

[1]तामब्रवीत् स राजा काऽसि सुभगे कस्य त्वमिति ।।

सा प्रत्युवाच कन्याऽस्मीति ।। ११

तां राजोवाच रत्यर्थी त्वयाऽहमिति ।। १२

अथोवाच कन्या समयेनाहं शक्या त्वया लब्धुं नान्यथेति।।

राजा तां समयमपृच्छत् । कः समय इति ।। १४

ततः कन्येदमुवाच उदकं मे न दर्शयितव्यमिति ।। १५

स राजा तां बाढमित्युक्त्वा तां समागम्य तया सह तत्र तस्थौ ।। १६

आसीने च राजनि सा सेनाऽन्वगच्छत् ।। पदेनानुपदं दृष्ट्वा राजानं पर्युपातिष्ठत ।। १७

अथ [2]पर्याश्वस्तो राजा तयैव सह शिबिकया प्रायाद्धर्षाविष्टस्तया स्वनगरमनुप्राप्य तया सह रहसि रमन्नास्ते अन्यं कञ्चिन्नापश्यत् ।। १८

अथ प्रधानामात्यस्तस्या अभ्याशचराः स्त्रियोऽपृच्छत् किमत्र प्रयोजनं वर्तते इति ।। १९

1. (१० तमवाक्ये "कस्यत्वमिति" पदलयं घकोशे न)
2. ख—तयैव सह शिबिकया स्वनगरं प्राप्य तया सह रममाणो न कांचिदन्यां स्त्रियमपश्यत्।अथामात्यस्तस्याभ्याशचराः स्त्रियोऽपृच्छत् । किमत्र प्रयोजनं वर्तत इति । अथातोऽब्रुवन् अपूर्वस्त्रिया रममाणमिव पश्यामः । उदकं नात्र नेतव्यमिति अथामात्योऽनुदकं वनं कारयित्वा रह उपलभ्य राजानमिदमब्रवीत् ।

थाब्रुवंस्ताः स्त्रियः अपूर्वमिव पश्याम उदकं नात्र नीयत
इति ॥ २०

अथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुपुष्पफलमूलं
[1]रह उपलभ्य राजानमिदमब्रवीत् ॥ वनमिदमुदारमनुदकं
साध्वत्र सहैतया गम्यतामिति ॥ २१

स तस्य वचनात् तयैव सह देव्या तद्वनं प्राविशत् ॥

स कदाचित् तस्मिन् वने रम्ये तयैव सह व्यचरत् क्षुत्तृ-
ष्णार्दितश्श्रान्तोऽतिमात्रमति मुक्तागारमपश्यत् ॥ २३

तत् प्रविश्य राजा सह प्रियया सुसंस्कृतां विमलसलिल-
सम्पूर्णां वापीमपश्यत् ॥ २४

दृष्ट्वैव च तां तस्या एव तीरे सहैव तया देव्या व्यातिष्ठत॥

अथ तां देवीं स राजाऽब्रवीत् साध्ववतर वापीसलिलमिति॥

सा तद्वचः श्रुत्वाऽवतीर्य वापीं न्यमज्ज[2]न्न पुनरुदका-
दुदमज्जत् ॥ २७

तां स मृगयमाणो राजा नापश्यद्वापीमपि निस्स्राव्य मण्डूकं
श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास स राजा ॥ सर्वत्र मण्डूक-
वधः क्रियतामिति । योऽयमर्थी स मण्डूकै रुपायनैर्मामुप
तिष्ठेदिति ॥ २८

1. अ—शरद्युपागम्य राजानमब्रवीत् । [पाठान्तरम्]
2. व—("न पुनरुदकादुदमजत्" इति वाक्यं वकोशे न)

अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु मण्डूकान् भयमाविशत् । ते भीता मण्डूकराजाय यथावृत्तं न्यवेदयन् ॥

ततो मण्डूकराट् तापसवेषधारी राजानमभ्यगच्छत् ॥

[1]उपेत्यचैनमुवाच—मा राजन् क्रोधवशं गमः; प्रसादं नः कुरु; मण्डूकानामनपराधिनां वधं कर्तुं नार्हसीति ॥ ३१

श्लोकौ चात्र भवतः ॥

मा मण्डूकाञ्जिघांसीस्त्वं कोपं सन्धारयाच्युत ।
प्रक्षीयन्ते वधाद्भेका जनानां परिजानताम् ॥ ३२

प्रतिजानीहि [2]नैनांस्त्वं प्राप्य कोपं विमोक्ष्यसे ।
अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते ॥ ३३

तमेवंवादिनमिष्टजनवियोगशोकपरीतात्मा राजा प्रोवाच ॥

[3]न हि क्षाम्यमेतन्मया हनिष्याम्येतानेतैर्दुरात्मभिः प्रिया मे स्त्री भक्षिता सर्वथैव मे वध्या मण्डूकाः; नार्हसि विद्वन् मामुपरोद्धुमिति ॥ ३४

---

1. घ—"उपेत्य चैनमुवाच" इति वाक्यं घकोशे न

2. क-ख-घ—नैवान्तं

3. ख—एतैर्हि दुरात्मभिः प्रिया मे भक्षिता
तस्मान्नार्हसि विद्वन्मामुपरोद्धुमिति ॥ [ पाठान्तरम् ]

[1]स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच—प्रसीद राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता संशोभना नाम तस्या दौःशील्यमेतत् बहवस्तया राजानो विप्रलब्धपूर्वा इति ॥

तमब्रवीद्राजा—या सा तव दुहिता तयाऽहमर्थी सा मे दीयतामिति ॥ ३६

अथैनां राज्ञे सुतामदादब्रवीच्चैनाम्—एनं राजानं शुश्रूषस्वेति॥

समन्युश्चोवाच दुहितरं—यस्मात् त्वया राजानो विप्रलब्धा बहवस्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्त्यानृतिकत्वात् तवेति ॥ ३८

स च राजा [2]तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो लोकत्रयैश्वर्यमिवोपलभ्य हर्षबाष्पसन्दिग्धया वाचा प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीत्—अनुगृहीतोऽस्मीति ॥ ३९

अथ मण्डूकराजो जामातरमनुज्ञाप्य यथागतमगच्छत् ॥

अथ कस्यचित् कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञस्सम्बभूवुः शलो दलो बलश्चेति ॥ ४१

ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ॥ ४२

---

1. ख—स चोवाचाहमायुर्नाम मण्डूकराजः । मम सा दुहिता शोभना । तस्या दौश्शील्यमेतत् । बहवो हि तया विप्रलब्धपूर्वा इति

2. ख—तामुपलभ्य तस्यां निबद्धहृदयो लोकत्रयैश्वर्यमुपलभ्येव प्रहृष्टः यथार्हं संपूज्य मण्डूकराजानमब्रवीदनुगृहीतोऽस्मि ॥

अथ कदाचिच्छलो मृगयामचरत्; मृगं चानासाद्य रथे-
नान्वधावत्; सूतं चोवाच शीघ्रं मां वाहयस्वेति ॥ ४३

स तथोक्तस्सूतो राजानमब्रवीत्—[1]मा क्रियतामनुबन्धो
नैष शक्यस्त्वया ग्रहीतुं यद्यपि ते रथे युक्तौ वाम्यौ स्यातामिति॥

ततोऽब्रवीद्राजा—सूत आचक्ष्व मे वाम्यौ वाजिनौ त्वा
पृच्छामीति ॥ ४५

स एवमुक्तो राजभयभीतः सूतो वामदेवशापभयभीतश्चा-
स्योपाचख्यौ—वामदेवस्याश्वौ वाम्यौ मनोजवाविति ॥ ४६

अथैनमेवं ब्रुवाणमब्रवीद्राजा—वामदेवाश्रमाय याहीति ॥

स गत्वा वामदेवाश्रमं तमृषिमब्रवीत्—भगवन् मृगो मया
विद्धः पलायते तं सम्भावयेयम्; अर्हसि वाम्यौ दातुमिति ॥

तमब्रवीदृषिः—ददामि वाम्यौ कृतकार्येण त्वया ममैव
वाम्यौ निर्यातयितव्यौ इति ॥ ४९

स च तावश्वौ प्रतिगृह्यानुज्ञाप्य ऋषिं प्रायाद्वाम्ययुक्तेन
रथेन मृगं प्रति गच्छन्नब्रवीत्—सूत अश्वरत्नद्व[2]यमावयोर्योग्यं
ब्राह्मणाय नैतौ प्रतिदेयौ वामदेवायेत्युक्त्वा मृगमवाप्य स्वनगर
मेत्याश्वावन्तःपुरेऽस्थापयत् ॥ ५०

1. ख—नैष शक्यस्त्वया मृगो गृहीतुं यदि रथे युक्तौ वाम्यौ स्याताम् ।
ततोऽब्रवीद्राजा क सुताचाक्ष्व वाम्यौ स एवमु + श्चोपाचख्यौ ।
2. ख—यमिहावयो + प्रदेयौ वामदेवायेति तं मृगमवाप्य नगरमेत्या+त्

अथर्षिश्चिन्तयामास—तरुणो राजपुत्रः कल्याणं [1]पुरमासाद्य
रमते न मे वाम्यौ निर्यातयत्यहो कष्टमिति ॥ ५१

स मनसाऽपि विनिश्चित्य मासि पूर्णे शिष्यमब्रवीत्—
गच्छात्रेय राजानं ब्रूहि; यदि पर्याप्तं निर्यातयोपाध्याय-
वाम्याविति ॥ ५२

स गत्वैव राजानमब्रवीत् ॥ ५३

तं राजा प्रत्युवाच—राज्ञामेतद्धवाहनम्; अनर्हा ब्राह्मणाः
रत्नानामेवंविधानाम्; न किञ्चित् ब्राह्मणानामश्वैः कार्यं साधु
प्रतिगम्यतामिति ॥ ५४

स गत्वैवमुपाध्यायायाचष्ट ॥ ५५

तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव
राजानमभिगम्याश्वार्थमचोदयत्; नचाददाद्राजा ॥ ५६

वामदेवः—

प्रयच्छ वाम्यौ मम पार्थिव त्वं
कृतं हि ते कार्यमन्यैरशक्यम् ।
मा त्वा हिंसेद्वरुणो घोरपाशैर्
ब्रह्मक्षत्रस्यान्तरे वर्तमानः ॥ ५७

राजा—

अनड्वाहौ सुव्रतौ साधु दान्ता-
वेतद्विप्राणां वाहनं वामदेव ।

1. क-ख-घ—अश्वरत्नमासाद्य

ताभ्यां याहि त्वं यत्र कामो महर्षे
छन्दांसि वै त्वादृशं संवहन्ति ॥ ५८

वामदेवः—

छन्दांसि वै मादृशं संवहन्ति
लोकेऽमुष्मिन् पार्थिव यानि सन्ति ।
अस्मिंस्तु लोके मम यानमेतद्
अस्मद्विधानामपरेषां च राजन् ॥ ५९

राजा—

चत्वारो वा गर्दभास्त्वां संवहन्तु
श्रेष्ठाश्वतर्यो हरयस्तुरङ्गाः ।
तैस्त्वं याहि क्षत्रियस्यैष वाहो
मम वाम्यौ न तु ते चेति विद्धि ॥ ६०

वामदेवः—

नैव व्रतं ब्राह्मणस्यैतदाहुर्
एतद्राजन् यदिहाजीवमानः ।
अयस्मया घोररूपा महान्तो
वहन्तु त्वां शितशूलाश्चतुर्धा ॥ ६१

राजा—

ये त्वां विदुर्ब्राह्मणा वामदेव
वाचा हन्तुं मनसा कर्मणा वा ।

[1]ते त्वां सशिष्यमिह पातयन्तु
　　मद्वाक्यनुन्नाश्शितशूलाग्रहस्ताः ॥ ६२

वामदेवः—

नानुयोगा ब्राह्मणानां भवन्ति
　　वाचा राजन् मनसा कर्मणा वा ।
यस्त्वेवं ब्रह्म तपसाऽन्वेति विद्वांस्
　　तेन श्रेष्ठो भवति हि जीवमानः ॥ ६३

मार्कण्डेयः—

एवमुक्ते वामदेवेन राजन्
　　समुत्तस्थू राक्षसा घोररूपाः ।
तैश्शूलहस्तैर्वध्यमानस्स राजा
　　प्रोवाचैनं वाक्यमुच्चैस्तदानीम् ॥ ६४

राजा—

इक्ष्वाकवो वा यदि मां त्यजेयुर्
　　ये ते विधेया यदि मन्ये विशश्च ।
नोत्स्रक्ष्येऽहं वामदेवाद्य वाम्यौ
　　नैवंविधा धर्मशीला भवन्ति ॥ ६५

मार्कण्डेयः—

एवं ब्रुवन्नेव स यातुधानैर्
　　हतो जगामाशु महीं क्षितीशः ।

1. क—तवासहिष्यामिह　　घ—न त्वा सहिष्यामिह
ख—न त्वा हिंसामीह विप्राद्यदेव नराश्च मे शितशूलाग्रहस्ताः ।

ततो विदित्वा नृपतिं निपातितम्
इक्ष्वाकवो वै दलमभ्यषिञ्चन् ॥ ६६

राज्ये तदा तत्र गत्वा स विप्रः
प्रोवाचेदं वचनं वामदेवः ।
दलं राजानं ब्राह्मणानां हि देयम्
एवं राजन् सर्वधर्मेषु दिष्टम् ॥ ६७

बिभेषि चेत् त्वमधर्मान्नरेन्द्र
प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ ।
एतच्छ्रुत्वा वामदेवस्य वाक्यं
स पार्थिवस्सूतमुवाच रोषात् ॥ ६८

दलः—

एनं हि मे सायकं चित्ररूपं
दिग्धं विषेणाहर सङ्गृहीतम् ।
येन विद्धो वामदेवश्शयीत
सन्दश्यमानश्श्वभिरार्तरूपः ॥ ६९

वामदेवः—

जानामि पुत्रं दशवर्षं तवाहं
जातं महिष्यां सेनजितं नरेन्द्र ।
तं वै जहि त्वं मद्वचनात् प्रणुन्नस्
तूर्णं प्रियं सायकैर्घोररूपैः ॥ ७०

मार्कण्डेयः—

एवमुक्तो वामदेवेन राज-

न्नन्तःपुरे राजपुत्रं जघान ।

[1]स सायकस्तिग्मतेजा विसृष्टश्

श्रुत्वा दलस्तत्र वाक्यं बभाषे ॥ ७१

दलः—

इक्ष्वाकवो हन्त चरामि वः प्रियं

निहन्म्यहं विप्रमद्य प्रमथ्य ।

आनीयतामपरं तिग्मवेगं

पश्यध्वं मे वीर्यमद्य क्षितीशाः ॥ ७२

वामदेवः—

यत् त्वमेनं सायकं घोररूपं

विषेण दिग्धं मम सन्दधासि ।

न त्वेतं त्वं शरवर्यं विमोक्तुं

सन्धातुं वा शक्ष्यसे मानवेन्द्र ॥ ७३

राजा—

[2]इक्ष्वाकवः पश्यत मां गृहीतं

न चैव शक्नोम्येष शरं विमोक्तुम् ।

न चास्य नाशमहमभ्युत्सहामि

आयुष्मान् वै जीवतु वामदेवः ॥ ७४

---

1. ख—इदमर्धं नास्ति 2. ख—नास्तीदं पद्यम्

वामदेवः—

संस्पृश्यैनां महिषीं सायकेन

ततस्तस्मादेनसो मोक्ष्यसे त्वम् ॥ ७४॥

मार्कण्डेयः—

ततस्तु तत् कृतवान् पार्थिवस्तु

ततो मुनिं राजपुत्री बभाषे ॥ ७५

राजपुत्री—

[1]यथा युक्ता वामदेवाहमेवं

दिने दिने सा विशन्ती नृशंसम् ।

ब्राह्मणेभ्यो याचती सूनृतानि

तथा ब्रह्मन् पुण्यलोकं लभेयम् ॥ ७६

वामदेवः—

त्वया त्रातं राजकुलं शुभेक्षणे

वरं वृणीष्वाप्रतिमं ददानि ते ।

प्रशाधीमं स्वजनं राजपुत्रि

इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ॥ ७७

राजपुत्री—

वरं वृणे भगवन्नेकमेवं

विमुच्यतां किल्बिषादद्य भर्ता ।

शिवेन जीवामि सपुत्रबान्धवं

वरो वृतो ह्येष मया द्विजाग्र्य ॥ ७८

---

1. स—यथायुक्तं वामदेवाहंसि त्वं दिने दिने कुर्मि विप्रप्रशंसाम् ।
ब्राह्मणेभ्यः प्रणमामि नित्यं यथा ब्रह्मन् पुण्यलोकाँल्लभेयम् ॥
[पाठान्तरम्]

मार्कण्डेयः—

श्रुत्वा वचस्स मुनी राजपुत्र्यास्
तथाऽस्त्विति प्राह कुरुप्रवीर ।
ततस्स राजा मुदितो बभूव
वाम्यौ चास्मै प्रददौ सम्प्रणम्य ॥ ७९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ५६ वाक्यानि २३ श्लोकाः]

## ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन पाण्डवान् प्रति कीर्त्यकीर्त्योः स्वर्गनरकनिवासहेतुता-प्रतिपादकेन्द्रद्युम्नोपाख्यानकथनम् ॥

वैशम्पायनः—

मार्कण्डेयमृषयः[1] पाण्डवाश्च पर्यपृच्छन्निन्द्रद्युम्नोपाख्यानम्
—किमस्ति कश्चिद्भवतश्चिरजात इति ॥ १

स तानुवाच—अस्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्य-
स्त्रिदिवात् प्रच्युतः कीर्तिस्तस्य विच्युतेति स मामुपातिष्ठदथ
प्रत्यभिजानाति मां भवानिति ॥ २

1. क-ख-घ—मृषिं पाण्डवाः परिवृत्य इन्द्रद्युम्नोपाख्यानं अपृच्छन् ।
अस्ति कश्चिद् भगवतश्चिरजाततर इति ।

[1]तमहमब्रवं वयं रसायनिकाः शरीरोपतापेनात्मनस्समारभामहे; तथाऽर्थानामनुष्ठानमेष न भवन्तं प्रत्यभिजानीम इति॥

[2]एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनर्मामब्रवीत्। अथास्ति
कश्चित्त्वत्तश्चिरं जाततर इति ॥ ४

तं पुनः प्रत्यब्रवम्—अस्ति खलु हिमवति प्राकारकर्णो
नामोलूकः प्रतिवसति स्म; भवन्तं स यदि जानीयाद्विप्रकृष्टे
चाध्वनि ततो हिमवान् यत्रासौ प्रतिवसतीति ॥ ५

स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः ॥ ६

अथैनं स राजर्षिः पर्यपृच्छत्-प्रत्यभिजानाति मां भवानिति॥

स मुहूर्तं ध्यात्वाऽब्रवीदेनं नाभिजाने भवन्तमिति ॥ ८
स एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनस्तमुलूकमब्रवीत्—अथास्ति
कश्चित् त्वत्तश्चिरजाततर इति ॥ ९

स एवमुक्तोऽब्रवीदेनम्—अस्ति खल्विन्द्रद्युम्नसरो नाम;
तस्मिन् नालीकजङ्घो नाम [3]बकः प्रतिवसति; सोऽस्मत्तश्चिर-
जाततरः, तं पृच्छेति ॥ १०

तत इन्द्रद्युम्नो मामुलूकं चादाय तत् सरोऽगच्छत्; यत्रासौ
नालीकजङ्घो नाम बको बभूव ॥ ११

---

1. ख—तमब्रवम् वयं शरीरोपतापेन समारभामहे। एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनर्मामब्रवीत्। अस्ति कश्चित् त्वत्तश्चिरं जाततर इति। तं पुनः प्रत्यब्रवम्। अस्ति खलु हिमवति प्राकारवर्णो नामोलूकः प्रतिवसति भवन्तं स यदिजानीयात् तत्र गत्वोलूकं पर्यपृच्छत् प्रत्यभिजानाति मा भवानिति॥ 2. क—कोश एवायं पाठो दृश्यते
3. क-ख—इतः ११ वाक्ये "बको बभूव" इत्येतत्पर्यन्त मेतयोरेव कोशयोरयं पाठो दृश्यते अ-घ—कोशयोरिदं वाक्यं न दृश्यते

सोऽस्माभिः पृष्टः—भवानिममिन्द्रद्युम्नं राजानं प्रत्यभिजाना-
तीति ॥ १२

स एवमुक्तो मुहूर्तं ध्यात्वाऽब्रवीत्——नाभिजानामि भवन्त-
मिन्द्रद्युम्नं राजानमिति ॥ १३

ततस्सोऽस्माभिः पृष्टः——कश्चिद्भवतोऽन्यश्चिरजाततर इति ॥

स नोऽब्रवीत्—अस्ति खल्विहैव सरस्यकूपारो नाम कच्छपः
प्रतिवसति ; स मत्तश्चिरजाततरः ; स यदि कथञ्चिदभिजानीया-
दिमं राजानं [1]तं पृच्छामेति ॥ १५

ततस्स बकस्तमकूपारं कच्छपं विज्ञापयामास——अस्माक-
माभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति ॥

तच्छ्रुत्वा कच्छपस्तस्मात् सरस उत्थायाभ्यागच्छद्यत्र
तिष्ठामो वयम् ॥ १७

तस्य सरसस्तीरे आगतं चैनं वयं पृच्छामः—भवानिन्द्रद्युम्नं
राजानमभिजानातीति ॥ १८

स मुहूर्तं ध्यात्वा [2]बाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो
विसंज्ञकल्पः प्राञ्जलिरब्रवीत्——किमहमेनं न प्रत्यभिजानामि
अहं ह्यनेन सहस्रकृत्वः पूर्वमग्निचितिषूपहितः ॥ १९

---

1. क-च—अकूपारं तं
　ख—ततः स बकः अकूपारं विज्ञापयामास । एतच्छ्रुत्वा स कच्छ-
　पस्तस्मात् सरस उत्थायाभ्यागच्छत । बक आह भवानिन्द्र
　द्युम्नं जानातीति ॥

2. ख—बाष्पाम्बुपूर्णनयनः प्राञ्जलिरब्रवीत् । किमेनं न प्रत्यभिजा-
　नामि । अहं

सरश्चेदमस्य दक्षिणोदकदत्ताभिर्गोभिरतिक्रममाणाभिः कृतम्;
अत्र चाहं प्रतिवसामीति ॥ २०

अथैतत् कच्छपेनोदाहृतं श्रुत्वा समनन्तरं देवलोका-
द्देवरथः प्रादुरासी[1]द्वाचोऽश्रूयन्त इन्द्रद्युम्नं प्रति—प्रस्तुतस्ते स्वर्गो
यथोचितं स्थानं प्रतिपद्यस्व कीर्तिमानव्यग्रो याहीति ॥ २१

श्लो॥ दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत् स शब्दो भवति तावत् स्वर्गे महीयते ॥ २२
अकीर्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित् ।
पतत्येवाधमाँल्लोकान् यावच्छब्दस्स कीर्त्यते ॥ २३
तस्मात् कल्याणवृत्तस्स्याद् दाता तावन्नरो भुवि ।
विहाय वृत्तं पापिष्ठं धर्ममेवाभिसंश्रयेत् ॥ २४

इत्येतच्छ्रुत्वा स राजाऽब्रवीत्—तिष्ठ तावद्यावदिमौ वृद्धौ
यथास्थानं प्रतिपादयामीति ॥ २५

मां प्राकारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य सः
देवयानेन संसिद्धो यथोचितं स्थानं प्रतिपन्नः ॥ २६

[2]एवं मयाऽनुभूतं चिरजीविना दृष्टमिति पाण्डवानुवाच
मार्कण्डेयः ॥ २७

---

1. ख—द्वाचश्चाश्रूयन्त इन्द्रद्युम्न प्रस्तुतस्ते स्वर्गो यथोचितं स्थानमभि-
पद्यस्व कीर्तिमानव्यग्रो याहीति ।
2. अ—एवं तं स्वस्थाने पुनस्स्वर्गं प्रतिपादयतेति ॥

[1]तमृषिं पाण्डवाश्चोचुः—प्रीतास्साधु शोभनं कृतं भवता ; राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं पुनः स्वर्गलोकं प्रतिपादय-तेति ॥ २८

अथैतान् प्रत्यब्रवीदसौ—ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात् कृच्छ्रात् पुनस्समुद्धृत्य स्वर्गं प्रतिपादित इति ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये वाक्यानि २६ श्लोकाः ३]

---

## ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति धुन्धुमारोपाख्यानकथनारम्भः ॥१॥ उदङ्कनामकमुनेस्तपसा तुष्टेन विष्णुना तस्मै वरदानम् ॥ २ ॥ तथा विष्णुना उदङ्कं प्रति कुवलाश्वेन धुन्धुनामकासुरघातनविधानपूर्वकमन्तर्धानम् ॥ ३॥ उदङ्केन राज्ये स्वपुत्राभिषेचनपूर्वकं वनं प्रस्थितं बृहदश्वं प्रति तन्निवारण-पूर्वकं धुन्धुनामकासुरहननचोदना ॥ ४ ॥

---

वैशम्पायनः—
युधिष्ठिरो धर्मराजः पप्रच्छ भरतर्षभ ।
[2]मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् ॥ १

युधिष्ठिरः—
विदितास्तव धर्मज्ञ देवदानवराक्षसाः ।

---

1. अ—नास्तीदं वाक्यम्  2. क-ख—अर्धचतुष्टयं नास्ति

राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ॥ २
न तेऽस्त्यविदितं किञ्चिद् अस्मिँल्लोके द्विजर्षभ ॥ २॥
[1]कथं वेत्सि मुने वंशान् मनुष्योरगरक्षसाम् ।
सुपर्णकिन्नराणां च यक्षाणां च महौजसाम् ॥ ३॥
एतदिच्छामि भगवंस् तत्त्वेन कथितं द्विज ॥ ४
कुवलाश्व इति ख्यात इक्ष्वाकुरपराजितः ।
कथं नाम विपर्यासाद् धुन्धुमारत्वमागतः ॥ ५
[2]एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम ।
विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः ॥ ६

मार्कण्डेयः—

हन्त ते कथयिष्यामि शृणु राजन् युधिष्ठिर ।
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ॥ ७
यथा स राजा ऐक्ष्वाकः कुवलाश्वो महीपतिः ।
धुन्धुमारत्वमगमत् तच्छृणुष्व महीपते ॥ ८
महर्षिर्विश्रुतस्तात उदङ्क इति भारत ।
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ॥ ९
उदङ्कस्तु महातेजास् तपोऽतप्यत् सुदुश्चरम् ।
आरिराधयिषुर्विष्णुं बहून् वर्षगणान् विभो ॥ १०

1. घ—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

तस्य प्रीतस्स भगवान् साक्षाद्दर्शनमेयिवान् ।
[1]दृष्ट्वा महर्षिर्विष्णुं तु तुष्टाव विविधैस्स्तवैः ॥ ११

उदङ्कः—

त्वया देव प्रजास्सर्वास् ससुरासुरमानवाः ।
स्थावराणि च भूतानि जङ्गमानि च सर्वशः ॥ १२
ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ॥ १२॥
शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ॥ १३
निश्श्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत ।
बाहवस्ते दिशस्सर्वाः कुक्षिश्चापि महार्णवः ॥ १४
ऊरू ते पर्वता देव खं नाभिर्मधुसूदन ।
पादौ ते पृथिवी चैव रोमाण्योषधयस्तव ॥ १५
इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः ।
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैस्स्तवैः ॥ १६
त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर ।
योगिनस्सुमहावीर्यास् स्तुवन्ति त्वां महर्षयः ॥ १७
त्वयि तुष्टे जगच्छान्तं त्वयि क्रुद्धे महद्भयम् ।
भयानामपनेताऽसि त्वमेकः पुरुषोत्तम ॥ १८
देवानां मानुषाणां च सर्वभूतसुखावहः ।

1. ख—इदमर्धं नास्ति

त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वया वृताः ॥ १९
[1]असुराणां समृद्धानां विनाशश्च त्वया कृतः । १९॥
तव विक्रमणैर्देवा निर्वाणमगमन् परम् ।
पराभवं च दैत्येन्द्रास् त्वयि क्रुद्धे महाद्युते ॥ २०॥
[2]त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः ।
आराधयित्वा त्वां देवास् सुखमेधन्ति नित्यशः ॥ २१॥

मार्कण्डेयः—

एवं स्तुतो हृषीकेश उदङ्केन महात्मना ।
उदङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ २२॥

उदङ्कः—

पर्याप्तो मे वरो ह्येष यदहं दृष्टवान् हरिम् ।
पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ २३॥

श्रीभगवान्—

[3]प्रीतस्तेऽहमलौल्येन भक्त्या च द्विजसत्तम ।
अवश्यं हि त्वया विद्वन् मत्तो ग्राह्यो वरो द्विज ॥ २४॥

मार्कण्डेयः—

[4]एवं सञ्चोद्यमानस्तु वरेण हरिणा तदा ।
उदङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम ॥ २५॥

उदङ्कः—

यदि मे भगवन् प्रीतः पुण्डरीकनिभेक्षण ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ॥ २६॥

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. ख-घ—अर्धषट्कं नास्ति

अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर ॥ २७

श्रीभगवान्—

सर्वमेतद्धि भविता मत्प्रसादात् तव द्विज ।
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम् ॥ २८
त्रयाणामपि लोकानां महत् कार्यं करिष्यसि ॥ २८॥
उत्सादनार्थं लोकानां धुन्धुर्नाम भविष्यति ।
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥ २९॥
बृहदश्व इति ख्यातो भविष्यति महीपतिः ॥ ३०
तस्य पुत्रश्शुचिर्दान्तः कुवलाश्व इति श्रुतः ।
स योगबलमास्थाय मामकं पार्थिवोत्तमः ॥ ३१
शासनात् तव विप्रर्षे धुन्धुमारो भविष्यति ॥ ३१॥

मार्कण्डेयः—

उदङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत ॥ ३२

मार्कण्डेयः—

[1]इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥ ३३
शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसस्सुतः ॥ ३४

1. ख–इक्ष्वाकुर्यः स्थितो राजा त्वयोध्यायां नृपोऽभवत् । मध्ये अर्धं नास्ति

विष्वगश्वः पृथोः पुत्रस् तस्मादार्द्रस्तु जज्ञिवान् ।
आर्द्राद् युवनाश्वस्तु श्रावस्तस्य चात्मजः ॥ ३५
[1]जज्ञे श्राव्यस्ततो राजा श्राव्यस्ती येन निर्मिता ।
श्राव्यस्तस्य तु दायादो बृहदश्वो महाबलः ॥ ३६
बृहदश्वसुतश्चापि कुवलाश्व इति स्मृतः ।
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ॥ ३७
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ॥ ३७॥
[2]कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत् ॥ ३८
समये तं ततो राज्ये बृहदश्वोऽभ्यषेचयत् ।
कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ३९
पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस् तपोवनममित्रहा ॥ ४०
अथ शुश्राव राजर्षिं तमुदङ्को युधिष्ठिर ।
वनं सम्प्रस्थितं राजन् बृहदश्वं द्विजोत्तमः ॥ ४१
तमुदङ्को महातेजास् सर्वास्त्रविदुषां वरम् ।
न्यवारयदमेयात्मा समासाद्य पुरोत्तमे ॥ ४२

उदङ्कः—

भवता रक्षणं कार्यं तत् तावत् कर्तुमर्हसि ।

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

निरुद्विग्ना वयं राजंस् त्वत्प्रसादाद्वसेमहि ॥ ४३

त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना ।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ ४४

पालने हि महान् धर्मः प्रजानामिह दृश्यते ।
न तथा दृश्यतेऽरण्ये मा भूत् ते बुद्धिरीदृशी ॥ ४५

[1]ईदृशो न च राजेन्द्र धर्मः कचन दृश्यते ।
प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः ॥ ४६

रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि ।
निरुद्विग्नस्तपस्तप्तुं न हि शक्नोमि पार्थिव ॥ ४७

[2]ममाश्रमसमीपे हि समेषु मरुधन्वसु ।
समुद्रवालुकापूर्ण उज्जानक इति स्मृतः ॥ ४८

बहुयोजनविस्तीर्णो बहुयोजनमायतः ।
तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः ॥ ४९

मधुकैटभयोः पुत्रो धुन्धुर्नाम महासुरः ।
[3]अन्तर्भूमिगतो राजन् वसत्यमितविक्रमः ॥ ५०

तं निहत्य महाराज वनं त्वं गन्तुमर्हसि ॥ ५०॥

शेते स लोकनाशाय तप आस्थाय दारुणम् ।

---

1. ख—इदमर्धं नास्ति
2. क-घ—अनेकऋषिभिस्सार्धं
3. क-घ—अर्धचतुष्टयं नास्ति

त्रिदशानां विनाशाय लोकानां चापि पार्थिव ॥ ५१॥
अवध्यो दैवतानां हि दैत्यानामथ रक्षसाम् ।
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः ॥ ५२॥
अवाप्य स वरं राजन् सर्वलोकपितामहात् ॥ ५३
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा ।
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् ॥ ५४
[1]क्रूरस्य स्वपतस्तस्य वालुकान्तर्हितस्य वै ।
संवत्सरस्य पर्यन्ते निश्श्वासस्सम्प्रवर्तते ॥ ५५
यदा तदा भूश्चलति सशैलवनकानना ।
तस्य निश्श्वासवातेन रज उद्धूयते महत् ॥ ५६
आदित्यपथमाश्रित्य सप्ताहं भूमिकम्पनम् ।
[2]सविस्फुलिङ्गं सज्वालं सधूमम् ह्यतिदारुणम् ॥ ५७
न तेन राजन् शक्नोमि तस्मिन् स्थातुं स्वआश्रमे ॥ ५७॥
तं विनाशय राजेन्द्र लोकानां हितकाम्यया ।
लोकास्स्वस्था भवन्त्वद्य तस्मिन् विनिहते युधि ॥ ५८॥
धुन्धुनामानमत्युग्रं [3]दानवं घोरविग्रहम् ।
समरे घोरतुमुले विनाशय महेषुणा ॥ ५९॥

---

1. ख—इदमर्धं नास्ति
2. अ—सविस्फुलिङ्गस्सज्वालस्सधूमो ह्यतिदारुणः; ख-इदमर्धं नास्ति
3. ख—तं नाश यमहेषुणा। मध्ये अर्धं नास्ति

त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्याययिष्यति ॥ ६०॥
विष्णुना च वरो दत्तो मम पूर्वं तु तद्वधे ॥ ६१
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः ।
तेजस्तद्वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ ६२
तत्तेजस्त्वं समाधाय राजेन्द्र भव दुस्सहः ।
तं निषूदय संदिष्टो दैत्यं रौद्रपराक्रमम् ॥ ६३
न हि धुन्धुर्महातेजास् तेजसाऽल्पेन शक्यते ।
[1]निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये ६४ श्लोकाः]

## ॥ सप्तषष्ट्यधिकशततमोऽध्यायः ॥

बृहदश्वेनोदङ्कं प्रति स्वपुत्रेण कुवलाश्वेन धुन्धुवधस्य भावित्वकथन-पूर्वकं वनं प्रति गमनम् ॥ १ ॥ धुन्धूत्पत्तिं पृष्टेन मार्कण्डेयेन युधिष्ठिरं प्रति तदुपोद्घाततया मधुकैटभवृत्तान्तकथनम् ॥ २ ॥

मार्कण्डेयः—

स एवमुक्तो राजर्षिर् उदङ्केनापराजितः ।
उदङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ॥ १

1. ख—इदमर्धं नास्ति

बृहदश्वः—

न हि मे गमनं ब्रह्मन् मोघमेतद्भविष्यति ।
पुत्रो ममापि भगवन् कुवलाश्व इति स्मृतः ॥ २

धृतिमान् क्षिप्रकारी च वीर्येणाप्रतिमो भुवि ।
प्रियं वै सर्वमेतत् ते करिष्यति न संशयः ॥ ३

पुत्रैः परिवृतस्सर्वैश् शूरैः परिघपाणिभिः ।
हनिष्यति महाबाहुस् तं वै धुन्धुं महाऽसुरम् ॥ ४
विसर्जयस्व मां ब्रह्मन् न्यस्तशस्त्रोऽस्मि साम्प्रतम् ॥ ४॥

मार्कण्डेयः—

तथाऽस्त्विति च तेनोक्तो मुनिनाऽमिततेजसा ।
स तमादिश्य तनयम् उदङ्काय महात्मने ॥ ५॥
क्रियतामिति राजर्षिर् जगाम वनमुत्तमम् ॥ ६

युधिष्ठिरः—

क एष भगवन् दैत्यो महावीर्यस्तपोधन ।
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ॥ ७
[1]एवं महावीर्यबलो न श्रुतो मे तपोधन ।
यस्य निश्वासवातेन कम्पते भूस्सपर्वता ॥ ८

एतदिच्छामि भगवन् याथातथ्येन वेदितुम् ।

---

1. ("एवं वीर्यबल" इत्यादि अर्धत्रयं ककोशे न) (एवं वकोशेऽपि न) खकोशे अर्धषट्कं नास्ति (८-१०)

सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ॥ ९

मार्कण्डेयः—

शृणु राजन्निदं सर्व यथावृत्तं नराधिप ॥ २॥

एकार्णवे निरालोके नष्टे स्थावरजङ्गमे ।

प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ॥ १०॥

प्रभवं लोककर्तारं विष्णुं शाश्वतमव्ययम् ।

[1]चतुर्भुजमुदाराङ्गं दृष्टवानस्मि भारत ॥ ११॥

सुष्वाप भगवान् विष्णुर् अहिशय्यां स एव हि ।

नागस्य भोगे महति शेषस्यामिततेजसः ॥ १२॥

[2]लोककर्ता महाभाग भगवानच्युतो हरिः ।

नागभोगेन महता परिगृह्य च मेदिनीम् ॥ १३॥

स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।

नाभ्या विनिस्सृतं दिव्यं यत्रोत्पन्नः पितामहः ॥ १४॥

साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्येन्दुसप्रभः ॥ १५

चतुर्वेदश्चतुर्मूर्तिश् चतुर्वर्गश्चतुर्मुखः ।

स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः ॥ १६

कस्यचित्त्वथ कालस्य दानवौ वीर्यसत्तमौ ।

मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ॥ १७

1. अ-ख—नास्तीदमर्धम्    2. अ—अर्धद्वयं नास्ति

शयानं शयने दिव्ये नागभोगे महाद्युतिम् ।
[1]बहुयोजनविस्तीर्णे बहुयोजनमायते ॥ १८

किरीटकौस्तुभधरं पीतकौशेयवाससम् ।
दीप्यमानं श्रिया राजंस् तेजसा वपुषा तदा ॥ १९
सहस्रसूर्यप्रतिमम् अद्भुतोपमदर्शनम् ॥ १९॥

विस्मयस्सुमहानासीन्मधुकैटभयोस्तदा ।
दृष्ट्वा पितामहं चैव पद्मे पद्मनिभेक्षणम् ॥ २०॥
वित्रासयेतामथ तौ ब्रह्माणममितौजसम् ॥ २१

वित्रास्यमानो बहुधा ब्रह्मा ताभ्यां महायशाः ।
अकम्पयत् पद्मनालं ततोऽबुध्यत केशवः ॥ २२

अथापश्यत गोविन्दो दानवौ वीर्यसत्तमौ ।
दृष्ट्वा तावब्रवीद्देवस् स्वागतं वां महाबलौ ॥ २३
[2]ददामि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते ॥ २३॥

तौ प्रहस्य हृषीकेशं [3]महादर्पौ महाबलौ ।
प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् ॥ २४॥

आवां वरय देव त्वं वरदौ स्वस्सुरोत्तम ।
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् ॥ २५॥

---

1. ख—इदमर्धं नास्ति
2. ख—अर्धद्वयं नास्ति
3. क-घ—महावीर्यौ महासुरौ

श्रीभगवान्—

प्रतिगृह्णे वरं वीरावीप्सितं च वरोत्तमम् ।
युवां हि वीर्यसम्पन्नौ न वामस्ति समः पुमान् ॥ २६॥

वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ ।
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै ॥ २७॥

मधुकैटभौ—

अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा ।
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम ॥ २८॥

[1]बले वीर्ये च रूपे च शमे न च समोऽस्ति नौ ।
धर्मे तपसि दाने च शीलसत्त्वदमेषु च ॥ २९॥

उपप्लवो महानस्मान् उपावर्तत केशव ।
उक्तं प्रति कुरुष्व त्वं कालो हि दुरतिक्रमः ॥ ३०॥

आवामिच्छावहे देव कृतमेकं त्वया विभो ।
आनावृते त्वमाकाशे जह्यावां सुरसत्तम ॥ ३१॥

पुत्रत्वमभिगच्छावस् तव चैव सुलोचन ।
[2]वर एष वृतो देव तद्विद्धि सुरसत्तम ॥ ३२॥

श्रीभगवान्—

बाढमेवं करिष्यामि सर्वमेतद्भविष्यति ॥ ३३

1. ख—इदमर्धं नास्ति  2. ख—इदमर्धं नास्ति

चिन्तयन्नथ गोविन्दो नापश्यत् तदनावृतम् ।
अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः ॥ ३४

स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ।
मधुकैटभयोर्गृह्य शिरसी मधुसूदनः ॥ ३५
चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये ३५॥ श्लोकाः ]

---

## ॥ अष्टषष्ट्यधिकशततमोऽध्यायः ॥

मधुकैटभपुत्रेण धुन्धुना तपस्तोषिताद्विरिञ्चादवध्यत्वादिवरग्रहणेन देवानां पीडनम् ॥ १ ॥ उदङ्कचोदितेन कुवलाश्वेन समुद्रमध्यमधिवसतस्तस्य ब्रह्मास्त्रेण दहनम् ॥ २ ॥ तदा देवादिभिः कुवलाश्वस्य धुन्धुमारइति नामकरणेन तस्मै वरदानपूर्वकं स्वस्वस्थानं प्रति गमनम् ॥३॥ मार्कण्डेयेन युधिष्ठिरं प्रति तत्पुत्राणां नामकथनपूर्वकं धुन्धुमारोपाख्यानस्तवनम् ॥ ४॥

---

मार्कण्डेयः—
धुन्धुर्नाम महातेजास् तयोः पुत्रो महाद्युतिः ।
स तपोऽतप्यत महन्महावीर्यपराक्रमः ॥ १

अतिष्ठदेकपादेन कृशो धमनिसन्ततः ॥ १॥
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम् ॥ २

धुन्धुः—

देवदानवयक्षाणां सर्वगन्धर्वरक्षसाम् ।
अवध्योऽहं भवेयं वै वर एष वृतो मया ॥ ३

मार्कण्डेयः—

एवं भवतु गच्छेति तमुवाच पितामहः ।
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृष्ट्वा जगाम ह ॥ ४

स तु धुन्धुर्वरं लब्ध्वा महावीर्यपराक्रमः ।
अनुस्मरन् पितृवधं द्रुतं विष्णुमुपाद्रवत् ॥ ५

स तु देवान् सगन्धर्वान् जित्वा धुन्धुरमर्षणः ।
बबाध सर्वानसकृद् देवान् विष्णुं च वै भृशम् ॥ ६

समुद्रवालुकापूर्णे उज्जानक इति स्मृतः ॥ ६॥

आगम्य तं स दुष्टात्मा तं देशं भरतर्षभ ।
बाधते स्म परं शक्त्या [1]तमुदङ्काश्रमं विभो ॥ ७॥

अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तदा ॥ ८

[2]मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ।
शेते लोकविनाशाय तपोबलसमाश्रितः ॥ ९

उदङ्कस्याश्रमाभ्याशे निश्श्वसन् पावकार्चिषः ॥ ९॥

एतस्मिन्नेव काले तु सभृत्यबलवाहनः ।
[3]कुवलाश्वो नरपतिर् अन्वितो बलशालिनाम् ॥ १०॥

---

1. ख—वालुकान्तर्हितस्तदा ; मध्ये अर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धद्वयं नास्ति

सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः ।
प्रायादुदङ्कसहितो धुन्धोस्तस्य वधाय वै ॥ ११॥

समाविशत् ततो विष्णुर् भगवांस्तेजसा प्रभुः ।
उदङ्कस्य नियोगेन लोकानां च हितेप्सया ॥ १२॥

तस्मिन् प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् । १३
एष श्रीमान् नृपो ह्यद्य धुन्धुमारो भविष्यति ॥ १३॥

दिव्यैश्च पुष्पैस्तं देवास् समन्तात् पर्यवाकिरन् ।
देवदुन्दुभयश्चापि नेदुस्स्वयमताडिताः ॥ १४॥

शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः ॥ १५
विपांसुलां महीं कुर्वन् ववर्ष च सुरेश्वरः ।
[1]प्रदक्षिणाश्चाप्यभवन् वन्यास्तस्य मृगद्विजाः ॥ १६

अन्तरिक्षे विमानानि देवानां च युधिष्ठिर ।
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ॥ १७

कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः ।
[2]देवगन्धर्वसहिताश् [3]चाभ्यागच्छन् महर्षयः ॥ १८

नारायणेन कौरव्य तेजसाऽऽप्यायितस्तदा ।
स गत्वा नृपतिः क्षिप्रं पुत्रैस्तैस्सर्वतो दिशम् ॥ १९

---

1. क-ख-घ—नास्तीदमर्धम्  2. इदमर्धं नास्ति
3. क-घ—समपश्यन्

अर्णवं खानयामास कुवलाश्वो महीपतिः ।
हितार्थं सर्वलोकानाम् उदङ्कस्य वशे स्थितः ॥ २०

तस्य पुत्रैः खनद्भिस्तु तस्मिन् वै वालुकार्णवे ।
सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः ॥ २१

आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ।
[1]दीप्यमानो यथा सूर्यस् तेजसा भरतर्षभ ॥ २२

ततो धुन्धुर्महाराज दिशमावृत्य पश्चिमाम् ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः ॥ २३

कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ।
[2]अभिद्रुतश्शरैस्तीक्ष्णैर् गदाभिर्मुसलैरपि ॥ २४

पट्टसैः परिघैः प्रासैः खड्गैश्च विमलैश्शितैः ।
स वध्यमानस्सङ्क्रुद्धस् समुत्तस्थौ महाबलः ॥ २५

[3]क्रुद्धश्चाभक्षयत् तेषां शस्त्राणि विविधानि च ।
आस्याद्वमन् पावकं स संवर्तकसमं तदा ॥ २६

तान् सर्वान् नृपतेः पुत्रान् अदहत् स्वेन तेजसा ।
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव ॥ २७

क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ।

1. ख—इदमर्धं नास्ति  2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

सगरस्यात्मजान् क्रुद्धस् तदद्भुतमिवाभवत् ॥ २८
तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ।
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम् ॥ २९
आससाद महातेजाः कुवलाश्वो महीपतिः ॥ २९॥
तस्य वारि महाराज सुस्राव बहु देहतः ।
[1]तत् तदा पीयते तेजो राज्ञा वारिमयं नृप॥ ३०॥
योगी योगेन [2]वह्निं स शमयित्वा च वारिणा ।
ब्रह्मास्त्रेण ततो राजा दैत्यं क्रूरपराक्रमम् ॥ ३१॥
ददाह भरतश्रेष्ठ सर्वलोकाभयाय वै ॥ ३२
सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ।
सुरशत्रुममित्रघ्नस् त्रैलोक्येश इवापरः ॥ ३३
धुन्धुमार इति ख्यातो नाम्ना समभवत् ततः ॥ ३३॥
प्रीतैश्च त्रिदशैस्सर्वैर् महर्षिसहितैस्तदा ।
वरं वृणीष्वेत्युक्तस्स प्राञ्जलिः प्रणतस्तदा ॥ ३४॥
अतीव मुदितो राजन्निदं वचनमब्रवीत् ॥ ३५

धुन्धुमारः—

दद्यां वित्तं द्विजाग्र्येभ्यश् शत्रूणां चैव दुर्जयः ।
सख्यं च विष्णुना मे स्याद् भूतेष्वद्रोह एव च ॥ ३६
धर्मे रतिश्च सततं स्वर्गे वासस्तथाऽक्षयः ॥ ३६॥

मार्कण्डेयः—

तथाऽस्त्विति ततो देवैः प्रीतैरुक्तस्स पार्थिवः ।

---

1. ख—इदमर्धं नास्ति 2. क-ख-घ—वृष्टिं स गमयित्वा

ऋषिभिश्च सगन्धर्वैर् उदङ्केन च धीमता ॥ ३७॥

[1]सम्भाव्य चैनं विविधैर् आशीर्वादैस्ततो नृपम् ।
देवा महर्षयश्चैव स्वानि स्थानानि भेजिरे ॥ ३८॥

तस्य पुत्रास्त्रयश्शिष्टा युधिष्ठिर तदाऽभवन् ।
दृढाश्वः कपिलाश्वश्च भद्राश्वश्चैव भारत ॥ ३९॥

तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनाम् ॥ ४०

एवं स निहतस्तेन कुवलाश्वेन सत्तम ।
[2]धुन्धुर्दैत्यो महावीर्यो मधुकैटभयोस्सुतः ॥ ४१

कुवलाश्वश्च नृपतिर् धुन्धुमार इति श्रुतः ।
[3]नाम्नाऽथ गुणसंयुक्तस् तदाप्रभृति सोऽभवत् ॥ ४२

एतत् ते सर्वमाख्यातं यन्मां पृच्छसि पार्थिव ।
धौन्धुमारमुपाख्यानं प्रथितं स्वस्य कर्मणा ॥ ४३

इदं तु पुण्यमाख्यानं विष्णोस्समनुकीर्तनम् ।
शृणुयाद्यस्स धर्मात्मा पुत्रवान् स भवेन्नरः ॥ ४४

आयुष्मान् प्रीतिमांश्चैव श्रुत्वा भवति पर्वसु ।
न च व्याधिभयं किञ्चित् प्राप्नोति विगतज्वरः ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ४५ श्लोकाः]

---

1. ख—इदमर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

## ॥ एकोनसप्तत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति पतिव्रतामहात्म्यकथनारम्भः ॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम् ।
पप्रच्छ भरतश्रेष्ठ धर्मप्रश्नं स दुर्वचम् ॥ १

युधिष्ठिरः—

श्रोतुमिच्छामि भगवन् स्त्रीणां माहात्म्यमुत्तमम् ।
[1]कथ्यमानं त्वया विप्र सूक्ष्मं धर्मं च तत्त्वतः ॥ २

प्रत्यक्षेण हि विप्रर्षे देवा दृश्यन्ति सत्तम ।
सूर्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च ॥ ३

पिता माता च भगवान् गावश्च द्विजसत्तम ।
यच्चान्यदेव विहितं तच्चापि भृगुनन्दन ॥ ४

[2]मन्येऽहं गुरुवत् सर्वम् एकपत्न्यस्तथा स्त्रियः ॥ ४॥

पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ।
पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो ॥ ५॥

[3]निरुध्य चेन्द्रियग्रामं मनस्संरुध्य चानघ ।
पतिं दैवतवच्चापि चिन्तयन्त्य[4]स्स्थिता हि याः ॥ ६॥

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—अर्धद्वयं नास्ति
4. क-घ—स्थिरास्स्त्रियः

भगवन् दुष्करं ह्येतत् प्रतिभाति मम प्रभो ।
मातापितॄणां शुश्रूषा स्त्रीणां भर्तृषु च द्विज ॥ ७॥

स्त्रीणां धर्मात् सुघोराद्धि नान्यं पश्यामि दुष्करम् ।
[1]साध्वाचारास्स्त्रियो धर्मं कुर्वन्तीह सदादृताः॥ ८॥

दुष्करं बत कुर्वन्ति पितरो मातरश्च वै ।
एकपत्न्यश्च या नार्यो याश्च सत्यं वदन्त्युत ॥ ९॥

कुक्षिणा दशमासांश्च गर्भं सन्धारयन्ति याः ।
नार्यः कालेन सम्भूय किमद्भुततरं ततः ॥ १०॥

संशयं परमं प्राप्य वेदनामतुलामपि ।
प्रजायन्ते सुतान् नार्यो दुःखेन महता विभो ॥ ११॥

पुष्णन्ति चैव महता स्नेहेन द्विजसत्तम ।
चिन्तयन्ति ततश्चापि किंशीलोऽयं भविष्यति ॥ १२॥

[2]याश्च क्रूरेषु [3]धर्मेषु वर्तमाना जुगुप्सिताः ।
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ॥ १३॥

क्षत्रधर्मसमाचारं तथ्यं चाख्याहि मे द्विज ।
धर्मस्सुदुर्लभो विप्र नृशंसेन महात्मना ॥ १४॥

एतदिच्छामि भगवन् प्रश्नं प्रश्नविदां वर ।

---

1. ख—इदमर्धं नास्ति
2. ख—याश्च—इत्यादि अर्धचतुष्टयं नास्ति
3. क-घ—सत्वेषु

श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत ॥ १५॥

मार्कण्डेयः—

[1]हन्त तेऽहं समाख्यास्ये प्रश्नमेतं सुदुर्वचम् ।
तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ १६॥

मातरं श्रेयसीं तात पितॄनन्ये तु मन्वते ।
दुष्करं कुरुते माता विवर्धयति सा प्रजाः ॥ १७॥

तपसा देवतेज्याभिर् वन्दनेन तितिक्षया ।
सुप्रशस्तैरुपायैश्च ईहन्ते पितरस्सुतान् ॥ १८॥

एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम् ।
चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति ॥ १९॥

आशंसते च पुत्रेषु पिता माता च भारत ।
यशः कीर्तिमथैश्वर्यं तेजो धर्मांस्तथैव च ॥ २०॥

मातुः पितुश्च राजेन्द्र सततं हितकारिणोः ।
तयोराशां तु सफलां यः करोति स धर्मवित् ॥ २१॥

पिता माता च राजेन्द्र तुष्यतो यस्य नित्यदा ।
इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वतः ॥ २२॥

नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गमुपाश्नुते ॥ २३॥

1. अ—नासीदमर्थम्

एतत् प्रकरणं राजन्नधिकृत्य युधिष्ठिर ।
पतिव्रतानां नियतं धर्मं चावहितश्शृणु ॥　　२४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ सप्तत्यधिकशततमोऽध्यायः ॥

तरुतले तपस्यता कौशिकेनात्मोपरि पुरीषोत्सृष्ट्या बलाकायाः सक्रोधनिरीक्षणेन दहनम् ॥ १ ॥ तथा भिक्षार्थं पतिव्रतायाः कस्याश्चिद् गृहं प्रविष्टं भिक्षादाने चिरीकरणेन रुष्टं च कौशिकं प्रति तया स्वस्या बलाकावृत्तान्तावगतिसूचनेन स्वशक्तिप्रकाशनपूर्वकं धर्मावगतये धर्मव्याधसमीपगमनचोदना ॥ २ ॥

---

मार्कण्डेयः—

कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
[1]तपस्स्वाध्यायशीलश्च कौशिको नाम भारत ॥　　१

साङ्गोपनिषदान् वेदान् अधीते द्विजसत्तमः ।
स वृक्षमूले कस्मिंश्चिद् वेदानुच्चारयन् [2]स्थितः ॥　　२

---

1. ख—तपस्वीधर्मे क—घ—तपस्वी धर्मशीलात्मा शान्तोऽपि विनयोज्ज्वलः ।
[पाठान्तरम्]

2. क—ख—घ—द्विजः

उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३

तामवेक्ष्य ततः क्रुद्धस् समवध्यायत द्विजः ।
तां बलकां महाराज निलीनामगमूर्धनि ॥ ४

भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ।
अवध्याता च विप्रेण न्यपतद्वसुधातले ॥ ५

बलाकां पतितां दृष्ट्वा गतसत्त्वामचेतनाम् ।
कारुण्यादथ सन्तप्तः पर्यशोचत् तदा द्विजः ॥ ६

ब्राह्मणः—
अकार्यं कृतवानस्मि द्वेषरागबलात्कृतः ॥ ६॥

मार्कण्डेयः—
इत्युक्त्वा बहुशो विद्वान् ग्रामं भैक्षाय संश्रितः ॥ ७

ग्रामे शुचीनि प्रचरन् कुलानि भरतर्षभ ।
प्रविष्टस्तत्कुलं यत्र पूर्वं चरितवांस्तु सः ॥ ८

देहीति याचमानो वै तिष्ठेत्युक्तस्स्त्रिया तु सः ।
शौचं तु यावत् कुरुते भाजनस्य कुटुम्बिनी ॥ ९

एतस्मिन्नन्तरे राजन् क्षुधासम्पीडितो भृशम् ।
भर्ता प्रविष्टस्सहसा तस्या भरतसत्तम ॥ १०

सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम् ।
पाद्यमाचमनीयं वै ददौ भर्त्रे तदाऽऽसनम् ॥ ११

[1]प्रह्वा पर्यचरच्चाथ भर्तारमसितेक्षणा ।
आहारेणाथ भक्ष्यैश्च वाक्यैस्सुमधुरैस्तथा ॥ १२
उच्छिष्टं भुञ्जते भर्तुस् सा तु नित्यं युधिष्ठिर ।
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी ॥ १३
न कर्मणा न मनसा नात्यश्नाति न चापिवत् ।
तं सर्वभावोपगता पतिशुश्रूषणे रता ॥ १४
साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ।
भर्तुश्चापि हितं यत् तत् सततं साऽनुवर्तते ॥ १५
देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ।
शुश्रूषणे रता नित्यं सततं संयतेन्द्रिया ॥ १६
सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्ष्यकाङ्क्षिणम् ।
कुर्वन्ती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ १७
व्रीडिता साऽभवत् साध्वी तदा भरतसत्तम ।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥ १८

ब्राह्मणः—

किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने ।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ १९

मार्कण्डेयः—

ब्राह्मणं क्रोधसन्तप्तं ज्वलन्तमिव तेजसा ।

1. क-ख-घ—प्रीत्या

दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत् ॥ २०

साध्वी—

[1]क्षन्तुमर्हसि मे विप्र भर्ता मे दैवतं महत् ।
स चापि क्षुधितश्श्रान्तः प्राप्तश्शुश्रूषितो मया ॥ २१

ब्राह्मणः—

ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः ।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ॥ २२
इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवा भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया ॥ २३
ब्राह्मणाश्चाग्निसदृशा दहेयुः पृथिवीमपि ।
सपर्वतवनद्वीपां क्षिप्रमेवावमानिताः ॥ २४

साध्वी—

नावजानाम्यहं विप्रान् देवैस्तुल्यान् मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ २५
जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।
अपेयस्सागरः क्रोधात् कृतो हि लवणोदकः ॥ २६
[2]तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति ॥ २७
कस्तान् परिभवेन्मूढो ब्राह्मणानमितौजसः ॥ २७॥

---

1. ख—क्षमस्व विप्रप्रवर क्षमस्व स्त्रीजडात्मताम् ।
प्रसीद भगवन् मह्यं कृपां कुरु मयि द्विज ॥ [अधिकः पाठः]
2. ख—श्लोकमर्धं नास्ति

ब्राह्मणानां परिभवाद् वातापिश्च दुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ २८॥

प्रभावा बहवश्चापि श्रूयन्ते ब्रह्मवादिनाम् ।
क्रोधस्सुविपुलो ब्रह्मन् प्रसादश्च महात्मनाम् ॥ २९॥

अस्मिंस्त्वतिक्रमे ब्रह्मन् क्षन्तुमर्हसि मेऽनघ ॥ ३०

पतिशुश्रूषया धर्मो यस्स मे रोचते द्विज ।
दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ॥ ३१

अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ।
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम् ॥ ३२

बलाका हि त्वया दग्धा रोषात् तद्विदितं मम ।
क्रोधश्शत्रुश्शरीरस्थो मनुष्याणां द्विजोत्तम ॥ ३३

[1]यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३३॥

यो वदेदिह सत्यानि गुरून् सन्तोषयिष्यति ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३४॥

[2]जितेन्द्रियो धर्मपरस् स्वाध्यायनिरतश्शुचिः ।
कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ॥ ३५॥

---

1. ख-मा स्म क्रुध्यो बलाकेव न वध्याऽस्मि पतिव्रता । [अधिकः पाठः]
2. अ-अर्धद्वयं नास्ति

[1-2]योऽध्यापयेदधीयेद्वा याजयेत यजेत वा ।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ३६॥

[3]ब्रह्मचारी वदान्यो योऽप्यधीयानो द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३७॥

यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत् ।
सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ३८॥

धनं तु ब्राह्मणस्याहुस् स्वाध्यायं दममार्जवम् ।
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ३९॥

सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयश्शाश्वतो धर्मस् स च सत्ये प्रतिष्ठितः ॥ ४०॥

श्रुतिप्रमाणो धर्मस्स्याद् इति वृद्धानुशासनम् ।
[4]बहुधा दृश्यते धर्मस् सूक्ष्म एव द्विजोत्तम ॥ ४१॥

भवानपि च धर्मज्ञस् स्वाध्यायनिरतश्शुचिः ।
न तु तत्त्वेन भगवन् धर्मं वेत्सीति मे मतिः ॥ ४२॥

मातापितृभ्यां शुश्रूषुस् सत्यवादी जितेन्द्रियः ।
मिथिलायां वसन् व्याधस् स ते धर्मान् प्रवक्ष्यति ॥ ४३॥

---

1. ख—यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु चरतस्तं देवा ब्राह्मणं विदुः । [ अधिकः पाठः ]
2. घ—अर्धचतुष्टयं नास्ति
3. क—अर्धद्वयं नास्ति
4. ख—अर्धत्रयं नास्ति

तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ।
व्याधः परमधर्मात्मा स ते च्छेत्स्यति संशयान् ॥ ४४॥
दुरुक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित ।
स्त्रियो ह्यवध्यास्सर्वेषां ये च धर्मविदो जनाः ॥ ४५॥

ब्राह्मणः—

[1]प्रीतोऽस्मि तव भद्रं ते गतः क्रोधश्च शोभने ।
[2]उपालम्भस्त्वयाऽप्युक्तो मम निश्रेयसं प्रति ॥ ४६॥
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ।
धन्या त्वमसि कल्याणि यस्यास्ते वृत्तमीदृशम् ॥ ४७॥

मार्कण्डेयः—

तया निसृष्टो निर्गत्य तमेवावसथं ययौ ।
विनिन्दन् स स्वमात्मानं कौशिको नरसत्तमः ॥ ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये ४८॥ श्लोकाः]

---

1. क—अर्धपञ्चकं नास्ति
2. ख—अर्धद्वयं नास्ति

## ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥

कौशिकनामकेन द्विजवरेण पतिव्रतावचनाद्धर्मावगतये धर्मव्याधं प्रति गमनम् ॥ १ ॥ व्याधेन तस्मै नानाधर्मोपदेशः ॥ २ ॥ कौशिकं प्रति धर्मव्याधेन शिष्टलक्षणादिकथनम् ॥ ३ ॥

मार्कण्डेयः—

चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः ।
विनिन्दन् स द्विजो त्मानम् आगस्कृत इवाबभौ ॥ १
चिन्तयानस्स धर्मस्य सूक्ष्मां गतिमथाब्रवीत् ॥ १॥

कौशिकः—

श्रद्दधानेन भाव्यं वै गच्छामि मिथिलामहम् ॥ २
कृतात्मा धर्मवित् तस्यां व्याधो निवसते किल ।
तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ३

मार्कण्डेयः—

इति सञ्चिन्त्य मनसा श्रद्दधानस्स्त्रिया वचः ।
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैश्शुभैः ॥ ४
सम्प्रतस्थे स मिथिलां कौतूहलसमन्वितः ॥ ४॥
अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ।
ततो जगाम मिथिलां जनकेन सुरक्षिताम् ॥ ५॥

[1]धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ।
गोपुराट्टालकवतीं हर्म्यप्राकारशोभिताम् ॥ ६॥

प्रविश्य स पुरीं रम्यां विमानैर्बहुभिर्युताम् ।
[2]पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथाम् ॥ ७॥

अश्वै रथैस्तथा नागैर् यानैश्च बहुभिर्वृताम् ।
हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ॥ ८॥

सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणस्समतिक्रमन् ॥ ९.

धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।
अपश्यत् तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥ १०

मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम् ।
आकुलत्वात् तु क्रेतॄणाम् एकान्ते संस्थितो द्विजः ॥ ११

स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमोत्थितः ।
आजगाम यतो विप्रस् स्थित एकान्त आसने ॥ १२

व्याधः—

अभिवादये त्वां भगवन् स्वागतं ते द्विजोत्तम ।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम् ॥ १३

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ १४

---

1. ख—इदमर्धं नास्ति  2. अ-ख—अर्धद्वयं नास्ति

मार्कण्डेयः—

श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशहर्षितः ।
द्वितीयमिदमाश्चर्यम् इत्यचिन्तयत द्विजः ॥ १५

अदेशस्थं हि ते स्थानम् इति व्याधोऽब्रवीद्द्विजम् ।
गृहं गच्छाव भगवन् यदि रोचयसेऽनघ ॥ १६

बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत् ॥ १६॥

अग्रतस्तु द्विजं कृत्वा स जगाम गृहान् प्रति ॥ १७

प्रविश्य तु गृहं रम्यम् आसनेनाभिपूजितः ।
[1]अर्घ्येण च स वै तेन व्याधेन द्विजसत्तमः ॥ १८

पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ।
ततस्सुखोपविष्टस्तं व्याधं वचनमब्रवीत् ॥ १९

कौशिकः—

कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ।
अनुतप्ये भृशं तात तव घोरेण कर्मणा ॥ २०

व्याधः—

कुलोचितमिदं कर्म पितृपैतामहं [2]मम ।
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज ॥ २१

धात्रा तु विहितं पूर्वं कर्म स्वं पालयाम्यहम् ।
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम ॥ २२

1. ख—इदमर्धं नास्ति 2. क-च—महत्

सत्यं व्रदे नाभ्यसूये यथाशक्ति ददामि च ।
देवतातिथिभृत्यानाम् अवशिष्टेन वर्तये ॥ २३
न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरम् ।
कृतमन्वेति कर्तारं पुरा कर्म द्विजोत्तम ॥ २४
कृषिगोरक्ष्यवाणिज्यम् इह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत ॥ २५
कर्म शूद्रे कृषिर्वैश्ये सङ्ग्रामः क्षत्रिये स्मृतः ।
ब्रह्मचर्यं तपो मन्त्रास् सत्यं च ब्राह्मणे सदा ॥ २६
राजाऽनुशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित् तान् युनक्ति स्वकर्मसु ॥ २७
[1]हन्तव्यं हि सदा राज्ञा प्रजानामथ पालने ।
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः ॥ २८
जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते ।
स्वकर्मनिरता वर्णाश् चत्वारोऽपि द्विजोत्तम ॥ २९
[2]स एष जनको राजा दुर्वृत्तमपि चेत् सुतम् ।
दण्ड्यं दण्ड्येषु निक्षिप्य न ग्लापयति धार्मिकम् ॥ ३०
[3]युक्तचारोऽपि नृपतिस् सर्वं धर्मेण पश्यति ।
[4]श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम ॥ ३१

1. ख—अर्धद्वयं नास्ति
2. अ-घ—अर्धद्वयं नास्ति
3. अ-ख-घ—नास्तीदमर्धम्
4. अ-घ—नास्तीदमर्धम्

राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम् ।
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ॥ ३२

परेण निहतान् ब्रह्मन् वराहमहिषानहम् ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम् ॥ ३३

[1]भक्षयामि च मांसानि ऋतुगामी तथा ह्यहम् ।
सदोपवासी च तथा नक्तभोजी तथा द्विज ॥ ३४

अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसापरश्चापि भवते धार्मिकः पुनः ॥ ३५

व्यभिचारान्नरेन्द्राणां धर्मस्सङ्कीर्यते महान् ।
अधर्मो वर्तते चापि सङ्कीर्यन्ते ततः प्रजाः ॥ ३६

[2]तथाऽन्धा वामनाः कुब्जास् स्थूलशीर्षास्तथैव च ।
क्लीबाश्चान्याश्च जायन्ते बधिरा लम्बचूचुकाः ॥ ३७

पार्थिवानामधर्मत्वात् प्रजानामभवात् सदा ॥ ३७॥
स एष राजा जनकस् सर्वं धर्मेण पश्यति ॥ ३८

अनुगृह्णन् प्रजास्सर्वास् स्वधर्मनिरतास्सदा ।
पात्येष राजा जनकः पितृवज्जनसत्तम ॥ ३९

ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः ।
सर्वान् सुपरिणीतेन कर्मणा योजयाम्यहम् ॥ ४०

---

1. घ—नास्तीदमर्धम्    2. ख—उकण्डा

[1]ये जीवन्ति स्वधर्मेण सम्भुञ्यन्ते च पार्थिवाः ।
न किञ्चिदुपजीवन्ति वृक्षा उत्थानशीलिनः ॥ ४१

शक्त्या च दानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ॥ ४२

त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पौरुषे ।
मृषावादं परिहरेत् कुर्यात् प्रियमनिन्दितः ॥ ४३

न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
प्रिये नातिभृशं हृष्येद् अप्रिये न च सञ्ज्वरेत् ॥ ४४

न मुह्येत सुकृच्छ्रेषु न च धर्मं परित्यजेत् ।
कर्म चेत् किञ्चिदन्यत् स्याद् इतरन्न तदाचरेत् ॥ ४५

स कल्याणमभिध्यायेत् तत्रात्मानं न योजयेत् ।
न पापं प्रति पापस्स्यात् साधुरेव सदा भवेत् ॥ ४६

आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ।
[2]कर्म चैतदसाधूनां वृजिनानां हि साधकम् ॥ ४७

न धर्मोऽस्तीति मन्वानाश् शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मज्ञांस् तेन नश्यन्त्यसंशयम् ॥ ४८

महादृतिरिवाध्मातः पापो भवति नित्यदा ।
साधुस्सन्नतिमानेव सर्वत्र द्विजसत्तम ॥ ४९

1. ख—अर्धद्वयं नास्ति  2. ख—इदमर्धं नास्ति

मूढानामवलिप्तानाम् असारं भाषितं भवेत् ।
[1]दर्शयन्त्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ५०

न लोके राजते मूर्खः केवलात्मप्रशंसया ।
[2]अपिचेह मृजाहीनः कृतविद्यः प्रकाशते ॥ ५१

अब्रुवन् कस्यचिन्निन्दाम् आत्मपूजामवर्णयन् ।
न कश्चिद्गुणसम्पन्नः प्रकाशो न च दृश्यते ॥ ५२

विकर्मणा तप्यमानः पापाद्धि परिमुच्यते ।
नैतत् कुर्यां पुनरिति द्वितीयात् परिमुच्यते ॥ ५३

कर्मणा येन केनेह पापात्मा द्विजसत्तम ॥ ५३॥
एवं श्रुतिरियं ब्रह्मन् धर्मेषु परिदृश्यते ॥ ५४

पापानि बुद्ध्वेह पुरा कृतानि
स्वधर्मशीलो विनिहन्ति [3]पश्चात् ।
धर्मो ब्रह्मन् नुदति ब्राह्मणानां
यत् कुर्वते पापमिह प्रमादात् ॥ ५५

पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
चिकीर्षन्नेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ५६

वसनस्येव च्छिद्राणि साधूनां विवृणोति यः ।

1. ख—इदमर्धं नास्ति
2. ख—अर्धमयं नास्ति
3. क-घ—पापम्

अपश्यन्नात्मनो दोषान् स पापः प्रेत्य नश्यति ॥ ५७
पापं चेत् पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते सर्वपापेभ्यो महाभ्रैरिव चन्द्रमाः ॥ ५८
यथाऽऽदित्यस्समुद्यन् वै तमस्सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन् सर्वपापैः प्रमुच्यते ॥ ५९
पापानां विद्ध्यधिष्ठानं लोभमोहौ द्विजोत्तम ।
तस्मात् तौ विदुषा विप्र वर्जनीयौ प्रयत्नतः ॥ ६०
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।
अधर्म्या धर्मरूपेण तृणैः कूपा इवावृताः ॥ ६१
येषां पञ्च पवित्राणि प्रलापा धर्मसंश्रिताः ।
सर्वं हि विद्यते तेषु शिष्टाचारास्सुदुर्लभाः ॥* ६२

मार्कण्डेयः—

स च विप्रो महाप्राज्ञ धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ ६३

कौशिकः—

[1]पञ्च कानि पवित्राणि शिष्टाचारेषु नित्यदा ।
[2]एतन्महामते व्याध प्रब्रवीहि यथातथम् ॥ ६४

व्याधः—

[3]यज्ञो दानं तपो वेदास् सत्यं च द्विजसत्तम ।

---

* ख—कोशे अस्यैवाध्यायसमाप्तिर्दृश्यते

1. अ—नास्तिदमर्धम्  2. अ-घ—नास्तीदमर्धम्

3. घ—अर्धद्वयं नास्ति

पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ६५

[1]कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्म इत्येव सन्तुष्टास् ते शिष्टाश्शिष्टसम्मताः ॥ ६६

न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ६७

गुरुशुश्रूषणं सत्यम् अक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मन् शिष्टाचारेषु नित्यदा ॥ ६८

[2]शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्याऽन्यतोऽन्यथा ॥ ६९

वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत् त्यागश् शिष्टाचारेषु नित्यदा ॥ ७०

ये तु धर्ममसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषाम् अनुयाताऽपि पीड्यते ॥ ७१

ये तु शिष्टास्सुनियताश् श्रुतित्यागपरायणाः ।
[3]धर्मं पन्थानमारूढास् सत्यधर्मपरायणाः ॥ ७२

नियच्छन्ति परां बुद्धिं शिष्टाचारसमन्विताः ।
[4]उपाध्यायमते युक्ता धृत्या धर्मार्थदर्शिनः ॥ ७३

---

1. ख—अर्धषट्कं नास्ति
2. ख—अर्धचतुष्टयं नास्ति
3. अ—नास्तीदमर्धम्
4. ख—इदमर्धं नास्ति

नास्तिकान् भिन्नमर्यादान् क्रूरान् पापमतौ स्थितान् ।
त्यज तान् ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ७४

कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ ७५

[1]क्रमेण सञ्चितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत् साधू रागश्शुक्क इवाम्बरे ॥ ७६

अहिंसा सत्यवचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मस् स च सत्ये प्रतिष्ठितः ॥ ७७

सत्यं कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ।
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ॥ ७८

आचारश्च सतां धर्मस् सन्तो ह्याचारलक्षणाः ॥ ७८॥

यो यथाप्रकृतिर्जन्तुस् स स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन् दोषानाप्नोत्यनात्मवान् ॥ ७९॥

आरम्भो न्याययुक्तो यस् स हि धर्म इति स्मृतः ।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ ८०॥

अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
ऋजवश्शमसम्पन्नाश् शिष्टाचारा भवन्ति ते ॥ ८१॥

[2]त्रैविद्यवृद्धाश्शुचयो वृत्तवन्तो यशस्विनः ।

---

1. ख–अर्धद्वयं नास्ति  2. ख—अर्धचतुष्टयं नास्ति

गुरुशुश्रूषवो दान्ताश् शिष्टाचारा भवन्त्युत ॥ ८२॥
तेषामदीनसत्वानां दुष्कराचारकर्मणाम् ।
स्वैः कर्मभिस्संस्कृतानां घोरत्वं सम्प्रणश्यति ॥ ८३॥
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्म्यं धर्मेण पश्यन्तस् स्वर्गं यान्ति मनीषिणः ॥ ८४॥
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसम्पन्नास् ते सन्तस्स्वर्गगामिनः ॥ ८५॥
वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
[1]शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ८६॥
धारणं चापि वेदानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥ ८७॥
सर्वभूतदयावन्तोऽप्यहिंसानिरतास्सदा ।
परुषं न प्रभाषन्ते सदा सन्तो द्विजातयः ॥ ८८॥
[2]शुभानामशुभानां च कर्मणां [3]फलसंश्रयम् ।
विपाकमभिजानन्ति ते शिष्टाश्शिष्टसम्मताः ॥ ८९॥
[4]न्यायोपेता गुणोपेतास् सर्वलोकहितैषिणः ।
सन्तस्स्वर्गजितश्शक्त्या सन्निविष्टाश्च सत्पथे ॥ ९०॥

---

1. ख—इदमर्धं नास्ति
2. अ—पीडया च कलत्रस्य भृत्यानां च समाहिताः । [अधिकः पाठः]
3. क-ख-घ—वै फलाश्रयम्
4. अ-ख—अर्धचतुष्टयं नास्ति

दातारस्संविभक्तारो दीनानुग्रहकारिणः ।
सर्वभूतदयावन्तस् ते शिष्टाश्शिष्टसम्मताः ॥ ९१॥
सद्भिः पूज्याश्श्रुतधनास् तथैव च तपस्विनः ।
दाननित्याश्शुभाँल्लोकान् प्राप्नुवन्तीह च श्रियम् ॥ ९२॥
पीडया च कलत्रस्य भृत्यानां च समाहिताः ।
अतिशक्त्या प्रयच्छन्ति सन्तस्सद्भिस्समागताः ॥ ९३॥
लोकयात्रां च पश्यन्तो धर्ममात्महितानि च ।
एवं सन्तो वर्तमानास् त्वेधन्ते शाश्वतीस्समाः ॥ ९४॥
अहिंसा सत्यवचनम् आनृशंस्यमथार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमश्शमः ॥ ९५॥
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास् ते सन्तो लोकसत्कृताः ॥ ९६॥
त्रीण्येव तु वराण्याहुस् सतां वृत्तमनुस्मरन् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव सदा वदेत् ॥ ९७॥
सर्वत्र च दयावन्तस् सन्तः करुणवेदिनः ।
गच्छन्तीह सुखं तुष्टा धर्म्यं पन्थानमुत्तमम् ॥ ९८॥
शिष्टाचारा महात्मानो येषां धर्मस्सुनिश्चितः ॥ ९९
अनसूया क्षमा शान्तिस् सन्तोषः प्रियवादिता ।
कामक्रोधपरित्यागश् शिष्टाचारनिषेवितः ॥ १००

[1]कर्मिणश्श्रुतसम्पन्नास् सतां मार्गगतास्तथा ।
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वतन्द्रिताः ॥ १०१

प्रज्ञाप्रासादमारुह्य मुह्यतो महतो जनान् ।
प्रेक्षन्ते लोकवृत्तानि विविधानि द्विजोत्तमाः ॥ १०२

[2]अतिपुण्यानि दानानि तानि द्विजवरात्मज ॥ १०२॥

एतत् ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणान् ब्रह्मन् पुरस्कृत्य द्विजर्षभ ॥ १०३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये १०३॥ श्लोकाः ]

---

## ॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥

कौशिकं प्रति धर्मव्याधेन सर्वैर्हिंसाया दुस्त्यजत्वोपपादनपूर्वकं सर्ववर्णानां स्वस्वधर्मानुष्ठानस्य श्रेयस्साधनत्वादिकथनम् ॥

---

मार्कण्डेयः—
[3]स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ॥ ॥

व्याधः—
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥ १

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—अर्धद्वयं नास्ति

विधिस्तु बलवान् ब्रह्मन् दुस्तरं हि पुरातनम् ।
[1]पुरा कृतस्य पापस्य कर्मदोषो भवत्ययम् ॥ २

दोषस्यैतस्य वै ब्रह्मन् विघाते यत्नवानहम् ।
विधिना हि हते पूर्व निमित्तं घातको भवेत् ॥ ३

निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ३॥

येषां हतानां मांसानि विक्रीणीमो वयं द्विज ।
तेषामपि भवेद्धर्म उपभोगेन भक्षणात् ॥ ४॥

देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात् ॥ ५

ओषध्यो वीरुधश्चापि पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ६

आत्ममांसप्रसादेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान् द्विजसत्तम ॥ ७

राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
अहन्यहनि पच्येते सहस्रे द्वे तु वै गवाम् ॥ ८

स मांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ॥ ९

[1]चातुर्मास्ये च पशवो वध्यन्त इति नित्यशः ।

---

1. क—राज्ञो महानसे पूर्वं नृपस्य द्विजसत्तम । [अधिकः पाठः]

अभयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ॥ १०
यज्ञेषु पशवो ब्रह्मन् वध्यन्ते सततं द्विजैः ।
संस्कृताः किल मन्त्रैश्च ते हि स्वर्गमवाप्नुवन् ॥ ११
यदि नैवाग्नयो ब्रह्मन् मांसकामाः पुराऽभवन् ।
भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम ॥ १२
अत्रापि विधिरुक्तस्तु मुनिभिर्मांसभक्षणे । १२॥
देवतानां पितॄणां च भुङ्क्ते दत्त्वा तु यस्सदा ।
यथाविधि यथाश्रद्धं न स दुष्यति भक्षणात् ॥ १३॥
अमांसाशी भवत्येवम् इत्यपि श्रूयते श्रुतिः ॥ १४
भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
सत्यानृते विनिश्चित्य तत्रापि विधिरुच्यते ॥ १५
सौदासेन तदा राज्ञा मानुषा भक्षिता द्विज ॥
शापाभिभूतेन भृशम् अत्र किं प्रतिभाति ते ॥ १६
स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुरा कृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ॥ १७
स्वधर्मं त्यजतो ब्रह्मन्नधर्म इति निर्णयः ।
[1]स्वधर्मे निरतो यस्तु स धर्म इति निश्चयः ॥ १८
कुले हि विहितं कर्म देही तन्न विमुञ्चति ।

1. अ-च—अर्धचतुष्टयं नास्ति

धात्रा चायं विधिर्दृष्टो बहुधा कर्मनिर्णये ॥ १९

[1]द्रष्टव्यस्तु भवेद्ब्रह्मन् क्रूरकर्मणि वर्तते ।
कथं कर्म शुभं कुर्यात् कथं मुच्येत् पराभवात् ॥ २०

कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ।
दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ॥ २१

द्विजातिपूजने चाहं धर्मे च निरतस्सदा ।
अतिवादातिमानाभ्यां निवृत्तोऽस्मि द्विजोत्तम ॥ २२

कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ॥ २२॥

कर्षन्तो लाङ्गलैरुर्वीं घ्नन्ति भूमिशयान् बहून् ।
[2]जीवानन्यान् सुबहुशस् तत्र किं प्रतिभाति ते ॥ २३॥

[3]धान्यबीजानि यान्याहुर् व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवा हि तत्र किं प्रतिभाति ते ॥ २४॥

अभ्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षांस्तथौषधीश्चैव छिन्दन्ति पुरुषा द्विज ॥ २५॥

जीवा हि बहुशो ब्रह्मन् वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥ २६॥

सर्वं व्याप्तमिदं ब्रह्मन् प्राणिभिः प्रतिजीविनैः ।

1. ख—नास्तीदमर्धम्　2. ख—इदमर्धं नास्ति
3. अ—अष्टार्धानि न सन्ति

मत्स्यान् ग्रसन्ते मत्स्याश्च तत्र किं प्रतिभाति ते ॥ २७॥

चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान् बहून् ।
पद्भ्यां घ्नन्ति नरा ब्रह्मंस् तत्र किं प्रतिभाति ते ॥ २८॥

उपविष्टाश्शयानाश्च घ्नन्ति जीवाननेकशः ।
अज्ञानादथवा ज्ञानात् तत्र किं प्रतिभाति ते ॥ २९॥

जीवैर्ग्रस्तमिदं सर्वम् आकाशं पृथिवी तथा ।
[1]अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥ ३०॥

अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवांश्च लोकेऽस्मिन् द्विजसत्तम ॥ ३१॥

बहु सञ्चिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥ ३२

अहिंसायां तु निरता यतयो द्विजसत्तम ।
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥ ३३

[2]आलक्ष्यन्ते हि पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति नैव च ॥ ३४

सुहृदस्सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
[3]सम्यक् प्रवृत्तान् पुरुषान् सम्यगेव न पश्यति ॥ ३५

समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।

---

1. क-ख—मासीदमधर्मम्
2. क-ख-घ—आलक्षिता हि
3. ख—अर्धद्वयं नास्ति

गुरूंश्चैवापि निन्दन्ति मूढा निश्चितमानिनः ॥ ३६

बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥ ३७

वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि विंशोऽध्यायः ॥ २० ॥

[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ त्रिसप्तत्यधिकशततमोऽध्यायः ॥

---

धर्मव्याधेन कौशिकं प्रति पौरुषनिन्दनेन दैवप्रशंसनपूर्वकं सुकृत-दुष्कृतयोः सुखदुःखहेतुताप्रतिपादनम् ॥

---

मार्कण्डेयः—

धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः ॥ १

व्याधः—

श्रुतिप्रमाणो धर्मो हि वृद्धानामनुशासनम् ।
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥ २

प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ॥ २॥

अनृतं च भवेत् सत्यं सत्यं चैवानृतं भवेत् ।
यद्भूतहितमत्यर्थं तत् सत्यमिति धारणा ॥ ३॥
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥ ४
यत् करोत्यशुभं कर्म शुभं वाऽपि द्विजोत्तम ।
अवश्यं तत् समाप्नोति पुरुषो नात्र संशयः ॥ ५
विषमां तु दशां प्राप्य देवान् गर्हति वै भृशम् ।
आत्मनः कर्मदोषेण न विजानात्यपण्डितः ॥ ६
मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
शुभं बध्नाति वै कर्म पुरुषः पापनिश्चयः ॥ ७
[1]सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ८
यो यमिच्छेद्यथा कामं तं तं कामं समश्नुयात् ।
यदि स्यादपराधीनं पुरुषस्य क्रियाफलम् ॥ ९
संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलास्सन्तः प्रहीणास्सर्वकर्मभिः ॥ १०
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनैव जीर्यते ॥ ११
अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठति ।

1. ख—अर्धद्वयं नास्ति

कश्चित् कर्माणि कुर्वन् हि न प्राप्यमधिगच्छति ॥ १२

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृध्नुभिः ।
दशमासधृता गर्भा जायन्ते कुलपांसनाः ॥ १३

अपरे धनधान्यैश्च भोगैश्च पितृसञ्चितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १४

न देहजा मनुष्याणां व्याधयो द्विजसत्तम ।
[1]कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ॥ १५

आधिभिश्चैव बाध्यन्ते व्यालैः क्षुद्रमृगा इव ।
ते चापि कुशलैर्वैद्यैर् निपुणैस्सम्भृतौषधैः ॥ १६

व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ १६॥

येषामस्ति च भोक्तव्यं ग्रहणीरोगपीडिताः ।
न शक्नुवन्ति ते भोक्तुं चेष्टितं पूर्वकर्मणा ॥ १७॥

अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ।
दुःखेन चापि गच्छन्ति भोजनं द्विजसत्तम ॥ १८॥

[2]इति लोकमना[3]क्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ १९॥

न म्रियेयुर्न जीर्येयुस् सर्वे स्युस्सर्वकामिकाः ।

---

1. घ—अष्टाधीनि नसन्ति   2. ख—अर्धद्वयं नास्ति
3. अ-क—क्रान्तं देहशङ्कापरिप्लुतम्

नाप्रियं प्रतिपश्येयुर् विधिश्च यदि नो भवेत् ॥ २०॥

उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ २१॥

बह्वस्सम्प्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महच्च फलवैषम्यं दृश्यते कर्मसिद्धिषु ॥ २२॥

[1]न केचिदीशते ब्रह्मन् स्वयंग्राह्यस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ २३॥

तथा श्रुतिरियं ब्रह्मन् जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ २४॥

वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवस्सङ्क्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ २५॥

कौशिकः—

कथं धर्मभृतां श्रेष्ठ जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतां वर ॥ २६॥

व्याधः—

न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतेति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धता तस्य शरीरभेदः ॥ २७॥

1. ख—इदमर्धं नास्ति

अन्यश्च नाश्नाति कृतं हि कर्म
स वै कर्ता सुखदुःखस्य भागी ।
यत् तेन किञ्चिद्धिकृतं हि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥ २८॥

अपुण्यशीलाश्च भवन्ति पुण्या
नरोत्तमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिस्स्वैस्
ततस्समुत्पत्स्यति भावितस्तैः ॥* २९॥

कौशिकः—

कथं सम्भवते योनौ कथं वा पुण्यपापयोः ।
जाताः पुण्या ह्यपुण्याश्च कथं गच्छन्ति सत्तम ॥ ३०॥

व्याधः—

गर्भाधानसमायुक्तं कर्मेदं सम्प्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजसत्तम ॥ ३१॥

यथा सम्भृतसम्भारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत् पापयोनिषु ॥ ३२॥

शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैश्च तिर्यक्त्वं अधर्मैरेति किल्बिषैः ॥ ३३॥

व्याधिमृत्युजरादुःखैस् सततं समभिद्रुताः ।

---

* ख—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

संसारे पच्यमानाश्च दोषैरात्मकृतैर्नराः ॥ ३४॥

तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवास्सम्परिवर्तन्ते कर्मबन्धनसंयुताः ॥ ३५॥

जन्तुश्च कर्मभिस्तैस्तैस् स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थं पुण्यां योनिं समश्नुते ॥ ३६॥

ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ॥ ३७॥

[1]अजस्रमेव दुःखार्तोऽदुःखितस्सुखसंज्ञितः ॥ ३८

ततोऽनिवृत्तबन्धत्वात् कर्मणामुदयादपि ।
परिक्रामति [2]संसारं चक्रवद्बहुवेदनम् ॥ ३९

स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।
तपोयोगसमारम्भं कुरुते द्विजसत्तम ॥ ४०

कर्मभिर्बहुभिश्चापि लोकानश्नाति मानवः ।
प्राप्नोति सुकृताँल्लोकान् यत्र गत्वा न शोचति ॥ ४१

[3]सततं पापवृत्तस्तु पापस्यान्तं न गच्छति ।
[4]तस्मात् पुण्यं यतेत् कर्तुं वर्जयेत च पापकम् ॥ ४२

---

1. ख—इदमर्धं नास्ति
2. क-ख-घ—संसारे + वेदने
3. क-घ—पापात् कुपापवृत्तश्च ख—पापं कुर्वन् पापवृत्तः
4. ख—पुण्यं कुर्वन् पुण्यवृत्तः पुण्यस्यान्तं न गच्छति। [अधिकः पाठः]

अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥ ४३

संस्कृतस्य तु दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिर् इह लोके परत्र च ॥ ४४

सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
[1]असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विजः ॥ ४५

सन्ति ह्यागमविज्ञानाश् शिष्टाश्शास्त्रविचक्षणाः ।
स्वधर्मेण क्रिया लोके कुर्वाणास्ते ह्यसङ्कराः ॥ ४६

प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ॥ ४६॥

तस्य धर्मादवाप्तेषु धनेषु द्विजसत्तम ।
तस्यैवासिञ्चते मूलं गुणान् पश्यति तस्य वै ॥ ४७॥

धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मैत्रजनसन्तुष्ट इह प्रेत्य च नन्दति ॥ ४८॥

शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत् फलं विदुः ॥ ४९॥

धर्मस्य च फलं लब्ध्वा न तृप्यति महाद्विज ।
अतृप्यमानो निर्वेदम् आदत्ते ज्ञानचक्षुषा ॥ ५०॥

प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।

---

1. ख—इदमर्धं नास्ति

विरज्यते यथाकामं न च धर्मं विमुञ्चति ॥ ५१॥

सर्वत्यागे च यतते दृष्ट्वा लोकं क्रियात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ५२॥

एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चैव भवति मोक्षं च लभते परम् ॥ ५३॥

तपो निश्श्रेयसं जन्तोस् तपो[1] रूपं तपो दमः ।
तेन सर्वानवाप्नोति कामान् यान् मनसेच्छति ॥ ५४॥

इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्राह्मणस्सर्वमाप्नोति यत् परं द्विजसत्तम ॥ ५५॥

कौशिकः—

इन्द्रियाणीति यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ॥ ५६॥

कथं च फलमाप्नोति तेषां धर्मभृतां वर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[अस्मिन्नध्याये ५७॥ श्लोकाः]

---

1. क—धर्मः; ख—तपो मूलं तपो; घ—समो दमः

## ॥ चतुस्सप्तत्यधिकशततमोऽध्यायः ॥

धर्मव्याधेन कौशिकं प्रति प्राणिभिर्दुष्कृतसुकृतकरणप्रकारादिकथन-पूर्वकं ब्राह्मणमाहात्म्यादिकथनम् ॥

मार्कण्डेयः—

एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा प्रश्नं तच्छृणुष्व नराधिप ॥ १

व्याधः—

विज्ञानार्थं मनुष्याणां मतिः पूर्वं प्रवर्तते ।
तत् प्राप्य कामं भजते रोषं च द्विजसत्तम ॥ २

ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानाम् अभ्यासं च निषेवते ॥ ३

ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति द्रोहश्च तदनन्तरम् ॥ ४

तस्य लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर् व्याजाद्धर्मं करोति च ॥ ५

व्याजेन चरते धर्मम् अर्थं व्याजेन रोचते ५॥
व्याजेन सेव्यमानेषु एतेषु द्विजसत्तम ॥

तत्रैव रमते बुद्धिस् ततः पापं चिकीर्षति । ६॥

सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ।
उत्तरं श्रुतिसम्बद्धं ब्रवीति श्रुतियोजितः ॥ ७॥

अधर्मस्त्रिविधस्तस्य वर्तते रागदोषतः ।
पापं चिन्तयते चापि ब्रवीति च करोति च ॥ ८॥

तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ।
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ ९॥

स तेनासुखमाप्नोति परत्र च विहन्यते ।
पापात्मा भवति ह्येवं धर्मलाभं च मे शृणु ॥ १०॥

यस्त्वेतान् प्रज्ञया दोषान् पूर्वमेवानुपश्यति ।
कुशलस्सुखदुःखेषु साधूंश्चाप्युपसेवते ॥ ११॥

तस्य साधुसमारम्भाद् बुद्धिर्धर्मेषु राजते ॥ १२

कौशिकः—

ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावस्सुमहान् ऋषिरेव मतो हि मे ॥ १३

व्याधः—

ब्राह्मणा वै महाभागाः पितरोऽग्रभुजस्सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणाम् ॥ १४

यत् तेषां च प्रियं तत् ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ १५

इदं विश्वं जगत् सर्वम् अजगद्वाऽपि सर्वशः ।
महाभूतात्मकं ब्रह्मन् नातः परतरं भवेत् ॥ १६

महाभूतानि खं वायुर् अग्निरापस्तथैव भूः ।
शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ १७

तेषामपि गुणास्सर्वे गुणवृत्तिः परैव सा ।
पूर्वपूर्वगुणास्सर्वे क्रमशो गुणितास्त्विह ॥ १८

षष्ठस्तु चेतना [1]या तु मन इत्यभिधीयते ।
सप्तमी तु भवेद्बुद्धिर् अहङ्कारस्ततः परम् ॥ १९

इन्द्रियाणि तु पञ्चैव रजस्सत्त्वं तमस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञितः ॥ २०

सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैस्तु संवृतः ।
चतुर्विंशक इत्येव व्यक्ताव्यक्तमयो गुणः ॥ २१

[2]एतत् ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥* २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

1. क-ख—धातुर्
2. क-घ—नास्तीदमधर्मम्
* क-घ—कोशयोर्नास्त्यध्यायसमाप्तिर्दृश्यते

## ॥ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥

कौशिकं प्रति धर्मव्याधेन भूतपञ्चकगुणनिरूपणपूर्वकमिन्द्रियजयाजययोः सुखदुःखासाधारणकारणताकथनम् ॥

मार्कण्डेयः—

[1]एवमुक्तस्तु विप्रस्स धर्मव्याधेन भारत ।
कथामचोदयद्भूयो मनसः प्रीतिवर्धनीम् ॥ १

ब्राह्मणः—

महाभूतानि यान्याहुः पञ्च धर्मविदां वर ।
एकैकस्य गुणान् सम्यक् पञ्चानामपि मे वद ॥ २

व्याधः—

भूमिरापस्तथा ज्योतिर् वायुराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान् ॥ ३

भूमिः पञ्चगुणा ब्रह्मन्नुदकं च चतुर्गुणम् ।
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ॥ ४

शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते गुणाः पञ्च भूमेस् सर्वेभ्यो गुणवत्तराः ॥ ५

शब्दस्स्पर्शश्च रूपं च [2]रसश्चापि द्विजोत्तम ।
[3]अपामेते गुणा ब्रह्मन् कीर्तितास्तव सुव्रत ॥ ६

1. क-ख—अर्धद्वयं नास्ति
2. अ—रसो वारिगुणास्स्मृताः
3. अ—नासीदमर्धम्

शब्दस्स्पर्शश्च रूपं च तेजसोऽपि गुणास्त्रयः ।
शब्दस्स्पर्शश्च वायोस्तु शब्दश्चाकाश एव च ॥ ७

एते पञ्चदश ब्रह्मन् गुणा भूतेषु पञ्चसु ।
उक्ता वै सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः ॥ ८
[1]अन्योन्यं नातिवर्तन्ते सम्यक् च भवति द्विज ॥ ८॥

यदा तु विषमं भावम् आचरन्ति परावराः ।
तदा देही देहमन्यं व्यतिरोहति कायतः ॥ ९॥

आनुपूर्व्याद्विनश्यन्ति जायन्ते चानुपूर्वशः ॥ १०

[2]तत्र तत्र च दृश्यन्ते धातवः पाञ्चभौतिकाः ।
यैराघृतमिदं सर्वं जगत् स्थावरजङ्गमम् ॥ ११

इन्द्रियैर्गृह्यते यद्यत् तत्तद्व्यक्तमिति स्मृतम् ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १२

यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु ।
इन्द्रियाणि तदा देही धारयन्निह तप्यते ॥ १३

लोके विततमात्मानं लोकं चात्मनि पश्यति ।
परावरज्ञो यश्शक्तस् सर्वभूतानि पश्यति ॥ १४

पश्यतस्सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ १५

---

1. ख—इदमर्धं नास्ति   2. घ—नास्तीदमर्धम्

[1]ज्ञानमूलादिकं क्लेशम् अतिवृत्तस्य मोहजम् ।
लोको बुद्धिप्रकाशेन ज्ञानमार्गेण गम्यते ॥ १६

[2]अनादिनिधनं जन्तुम् आत्मयोनिं सदाऽव्ययम् ।
अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ॥ १७

तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ।
तपसा हि समाप्नोति यद्यदेवाभिवाञ्छति ॥ १८

इन्द्रियाण्येव तत् सर्वं यत् स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १९

तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ।
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ॥ २०

एतन्मूलं हि तपसस् स्वर्गस्य नरकस्य च ॥ २०॥
इन्द्रियाणां प्रसङ्गेन दोषमाच्छेत्यसंशयम् ।
सन्नियम्य तु तान्येव ततस्सिद्धिमुपाश्नुते ॥ २१॥

षण्णामात्मनि योज्यानाम् ऐश्वर्यं योऽधितिष्ठति ।
न च पापैर्न चानर्थैस् संयुज्येत जितेन्द्रियः ॥ २२॥

रथश्शरीरं पुरुषस्य दृष्टो
आत्मा नियन्तेन्द्रियाण्याहुरश्वान् ।

---

1. घ—अर्धद्वयं नास्ति 2. ख—अर्धद्वयं नास्ति

तैरप्रमत्तैः कुशलो यथाऽश्वैर्
दान्तैस्सुखं याति [1]पथींव धीरः ॥ २३॥
षण्णामात्मनि दृष्टानाम् इन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन् स स्यात् परमसारथिः ॥ २४॥
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्या तानि जयेद्ध्रुवम् ॥ २५॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य बुद्धिं हरते नावं वायुरिवाम्भसि ॥ २६॥
येषु विप्रतिपद्यन्ते षट्सु मोहात् फलागमम् ।
तेष्वध्यापयिताऽऽध्यायी विन्दते ध्यानजं फलम् ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥



धर्मव्याधेन कौशिकं प्रति सत्त्वादिगुणत्रयस्वरूपनिरूपणपूर्वकमध्यात्मकथनम् ॥

---

मार्कण्डेयः—

एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत ।
ब्राह्मणस्स पुनस्सूक्ष्मं पप्रच्छ सुसमाहितः ॥ १

---

1. क—पथीव; ख—रथीव

ब्राह्मणः—

सत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।
गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ २

व्याधः—

हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
एतान् गुणान् पृथक्त्वेन निबोध गदतो मम ॥ ३
मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।
प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते ॥ ४
अविद्याबहुलो मूढस् स्वप्नशीलो विचेतनः ।
दुर्दर्शी च तमोध्वस्तस् सक्रोधस्तामसोऽलसः ॥ ५
सुप्रवृत्तवाक्यो मन्त्री च यो नराग्र्योऽनसूयकः ।
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ॥ ६
प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः ।
अक्रोधपरमो धीमान् दान्तश्चैव स सात्त्विकः ॥ ७
सात्त्विकस्त्वथ सम्बुद्धो लोकवृत्तेन लिप्यते ।
यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ॥ ८
वैराग्यस्य तु रूपं तु पूर्वमेव प्रवर्तते ।
मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवं च यत् ॥ ९
ततोऽस्य सर्वद्वन्द्वानि प्रशाम्यन्ति परस्परम् ॥ ९॥

न चास्यासंयमो नाम क्वचिद्भवति कश्चन ॥ १०

शूद्रभावेऽपि जातस्य सद्गुणानधितिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन् क्षत्रियत्वं तथैव च ॥ ११

आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।
[1]एतैर्गुणैर्विहीनस्य विप्रस्यापि न विप्रता ॥ १२

गुणास्ते कीर्तितास्सर्वे किं भूयश्श्रोतुमिच्छसि ॥ १२॥

ब्राह्मणः—

पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १३॥

मार्कण्डेयः—

[2]प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर ।
व्याधस्स कथयामास ब्राह्मणाय महात्मने ॥ १४॥

व्याधः—

मूर्धानमाश्रितो वह्निश् शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ १५॥

भूतं भव्यं भविष्यच्च सर्वं प्राणे प्रतिष्ठितम् ।
श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ॥ १६॥

स जन्तुस्सर्वभूतात्मा पुरुषस्स [3]सनातनः ।
मनो बुद्धिरहङ्कारो भूतानां विषयश्च सः ॥ १७॥

---

1. अ-क-च—नास्तीदमर्धम्
2. ख—अर्धद्वयं नास्ति
3. क-च—सतां मतः

अव्यक्तं सत्त्वसंज्ञं च जीवः कालस्स चैव हि ।
प्रकृतिः पुरुषश्चैव प्राण एव द्विजोत्तम ॥ १८॥

जागर्ति स्वप्नकाले च स्वप्ने स्वप्नायते च सः ।
जाग्रत्सु बलमाधत्ते चेष्टत्सु चेष्टयत्यपि ॥ १९॥

[1]तस्मिन्निरुद्धे विप्रेन्द्र मृत इत्यभिधीयते ।
त्यक्त्वा शरीरं भूतात्मा पुनरन्यत् प्रपद्यते ॥ २०॥

शरीरमध्ये नाभिस्स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
एष त्वग्निरपानेन प्राणेन परिपाल्यते ॥ २१॥

पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ २२

[2]बस्तिमूले गुदे चैव पावकस्समुपाश्रितः ।
वहन् मूत्रं पुरीषं वाऽप्यपानः परिवर्तते ॥ २३

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुर् अध्यात्मविदुषो जनाः ॥ २४

सन्धौसन्धौ सन्निविष्टस् सन्धिपर्वण्यथाऽनिलः ।
[3]शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ २५

धातुष्वग्निस्तु विततस् स तु वायुसमीरितः ।
रसान् धातूंश्च दोषांश्च वर्तयन् परिधावति ॥ २६

1. अ—अर्धचतुष्टयं नास्ति 2. अ—नास्तीदमर्धम्
3. क—अर्धचतुष्टयं नास्ति

प्राणानां सन्निपातात् तु संसर्गाद् यः प्रजायते ।
सोष्मा सोऽग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ २७

अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ ।
समन्वितस्त्वधिष्ठाने सम्यक् पचति पावकः ॥ २८

तस्यापि पायुपर्यन्तस् तथा स्याद्गुणसंज्ञितः ।
स्रोतसोऽस्मात् प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ २९

अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनस् समुत्क्षिपति पावकम् ॥ ३०

पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयास्स्थितः ।
नाभिमध्ये शरीरस्थ प्राणास्सर्वे प्रतिष्ठिताः ॥ ३१

प्रवृत्ता हृदयात् सर्वे तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान् नाड्यो दशप्राणप्रचोदिताः ॥ ३२

योगिनामेष मार्गस्तु येन गच्छन्ति तत् परम् ॥ ३२॥

जितक्लमा नरा धीरा मूर्धन्यात्मानमादधुः ॥ ३३

एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ।
[1]तावग्निसहितौ ब्रह्मन् विद्धि वै प्राणमात्मनि ॥ ३४

एकादशविकारात्मा कलासम्भारसम्भृतः ।
मूर्तिमन्तं स तं विद्धि नित्यं कर्मजितात्मकम् ॥ ३५

1. ख—इदमर्धं नास्ति

तस्मिन् यस्संस्थितो ह्यग्निर् नित्यं स्थाल्यामिवा[1]हितः ।
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ ३६

[2]देवो यस्संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ ३७

जीवात्मकं विजानीहि रजस्सत्त्वं तमस्तथा ।
जीवमात्मगुणं विद्धि तथाऽऽत्मानं परात्मकम् ॥ ३८

अचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ ३९

एष सर्वेषु भूतेषु भूतात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः ॥ ४०

चित्तस्य तु प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ ४१

लक्षणं तु प्रसादस्य यथा तृप्तस्सुखं स्वपेत् ।
सुखदुःखे हि सन्त्यज्य निर्द्वन्द्वो निष्परिग्रहः ॥ ४२

निवाते वा यथा दीपो दीप्येत् कुशलदीपितः ॥ ४२॥

पूर्वरात्रेऽपरे चैव युञ्जानस्सततं मनः ।

---

1. क-म—स्थितः 2. क—अर्धद्वयं नास्ति

लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ४३॥
[1]प्रदीप्तेनेव दीपेन पश्येदात्मानमात्मना ।
दृष्ट्वाऽऽत्मानं निरात्मानं तदा स तु विमुच्यते ॥ ४४॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ॥ ४५
एतत् पवित्रं यज्ज्ञानं तपो वै सङ्क्रमो मतः ॥ ४५॥
नित्यं क्रोधात् तपो रक्षेत् श्रियं रक्षेत् तु मत्सरात् ।
विद्यां मानावमानाभ्याम् आत्मानं तु प्रमादतः ॥ ४६॥
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं परं सत्यव्रतं व्रतम् ॥ ४७॥
सत्यस्य वचनं श्रेयस् सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ॥ ४८॥
यस्य सर्वे समारम्भा निराशाबन्धनास्सदा ।
त्यागे यस्य कृतं सर्वं स त्यागी स च बुद्धिमान् ॥ ४९॥
[2]यतो न गुरुतां ह्येनं च्यावयेदुपपादयन् ।
तं विद्याद्ब्राह्मणो योगम् अयोगं योगसंज्ञितम् ॥ ५०॥
न हिंस्यात् सर्वभूतानि मैत्रायणगतिं चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केन चित् ॥ ५१॥
अकिञ्चनत्वं सन्तोषो निराशित्वमचापलम् ।

---

1. ख—इदमर्धं नास्ति 2. ख—अर्धद्वयं नास्ति

एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम् ॥ ५२॥

परिग्रहं परित्यज्य भवेद्बुद्ध्या यतव्रतः ।
अशोकं स्थानमासाद्य निश्चलं प्रेत्य चेह च ॥ ५३॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ ५४॥

[1]गुणागुणमनासङ्गम् एककार्यमनन्तरम् ।
एतद्वै ब्रह्मणो वृत्तम् आहुरेकपदं सुखम् ॥ ५५॥

परित्यजति यो दुःखं सुखं चाप्युभयं नरः ।
ब्रह्म प्राप्नोति सोऽत्यन्तं दुःखं चापि न गच्छति ॥ ५६॥

यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम ।
एतत् ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षड्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

1. इदमर्धं नास्ति

## ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

धर्मव्याधेन कौशिकाय स्वगृहप्रवेशनपूर्वकं वृद्धयोः स्वपित्रोः प्रदर्शनम् ॥ १ ॥ तथा मातापितृविषये स्वानुसन्धानप्रकारनिवेदनम् ॥ २ ॥

मार्कण्डेयः—

एवं सङ्कथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर ।
दृढं प्रीतमना विप्रो धर्मव्याधमुवाच ह ॥ १

कौशिकः—

[1]न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किञ्चिद् धर्मेष्वभिसमीक्ष्यते ॥ २

व्याधः—

प्रत्यक्षं मम यो धर्मस् तं पश्य द्विजसत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ३

उत्तिष्ठ भगवन् विप्र प्रविश्याभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि धर्मज्ञ मातरं पितरं च मे ॥ ४

मार्कण्डेयः—

इत्युक्तस्स प्रविश्याथ ददर्श परमार्चितम् ।
सौधं हृद्यं चतुश्शालम् अतीव च मनोहरम् ॥ ५

देवतागृहसङ्काशं दैवतैश्च सुपूजितम् ।

1. क—मम धर्ममिमं ख-ब—मम धर्म्यमिदं

शयनासनसम्बाधं गन्धैश्च परमैर्युतम् ॥ ६
तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ ।
कृताहारौ सुसन्तुष्टावुपविष्टौ वरासने ॥ ७
[1]तस्य व्याधस्य पितरौ ब्राह्मणस्स ददर्श ह ।
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसाऽपतत् ॥ ८

पितरौ—

उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि ॥ ९
सत्पुत्रेण त्वया पुत्र नित्यं [2]लोकसुपूजितौ ।
सुखमावां वसावोऽत्र देवलोकगताविव ॥ १०
न तेऽन्यद्दैवतं किञ्चिद् दैवतेष्वपि वर्तते ।
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः ॥ ११
पितुः पितामहा ये च तथैव प्रपितामहाः ।
प्रीतास्ते सततं पुत्र दमेनावां च पूजया ॥ १२
मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ।
[3]न चान्या वितथा बुद्धिर् दृश्यते साम्प्रतं तव ॥ १३
जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।

1. क—नासीदमधर्म
2. क—कालं सुपूजितम् ख—नित्यकालं सुपूजितौ ग—कालं सुपूजितौ
3. ख—इदमधर्मेव नास्ति

तथा त्वया कृतं सर्वं तद्विशिष्टं च पुत्रक ॥ १४

मार्कण्डेयः—

ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रम् अर्चयामासतुस्तदा ॥ १५
प्रतिगृह्य च तां पूजां द्विजः पप्रच्छ तावुभौ ॥ १५॥

कौशिकः—

सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ।
अनामयं च वां कच्चित् सुखं वेह शरीरयोः ॥ १६॥

वृद्धौ—

कुशलं नौ गृहे विप्र भृत्यवर्गेषु सर्वशः ।
कच्चित् त्वमप्यविघ्नेन सम्प्राप्तो भगवानिह ॥ १७॥

मार्कण्डेयः—

बाढमित्येव तौ विप्रः कौतूहलसमन्वितः ।
धर्मव्याधस्तु तं विप्रम् अर्थवद्वाक्यमब्रवीत् ॥ १८॥

व्याधः—

पिता माता च भगवन्नेतौ मे दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेवाभ्यां करोम्यहम् ॥ १९॥
त्रयस्त्रिंशद्यथा देवास् सर्वे शक्रपुरोगमाः ।
सम्पूज्यास्सर्वलोकस्य तथा वृद्धाविमौ मम ॥ २०॥
उपाहारानाहरन्तो देवतानां यथा द्विजाः ।
कुर्वते तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ २१॥

एतौ मे परमं ब्रह्मन् पिता माता च दैवतम् ।
एतौ पुष्पैः फलैरन्नैस् तोषयामि सदा द्विज ॥ २२॥
एतावेवाग्नयो मह्यं यान् वदन्ति मनीषिणः ।
यज्ञा वेदाश्च चत्वारस् सर्वमेतौ मम द्विज ॥ २३॥
एतदर्थं मम प्राणा भार्या पुत्रस्सुहृज्जनः ।
सपुत्रदारश्शुश्रूषां नित्यमेव करोम्यहम् ॥ २४॥
स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।
आहारं सम्प्रयच्छामि स्वयं चैव द्विजोत्तम ॥ २५॥
अनुकूलाः कथा वच्मि विप्रियं परिवर्जयन् ।
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ २६॥
धर्ममेव गुरुं मत्वा साक्षादेतौ द्विजोत्तम ।
अतन्द्रितस्तु सततं शुश्रूषां वै करोम्यहम् ॥ २७॥
पञ्चैव गुरवो ब्रह्मन् पुरुषस्य बुभूषतः ।
पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम ॥ २८॥
[1]एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ।
भवेयुरग्नयस्तेन परिचीर्णास्तु नित्यशः ॥ २९॥
गार्हस्थ्ये वर्तमानस्य धर्म एष सनातनः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

1. अ—नास्तीदमर्धम्

## ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

धर्मव्याधेन कौशिकं प्रति मातापितृशुश्रूषणचोदनपूर्वकं स्वस्य शूद्रयोनौ जननिदानकथनम् ॥ १॥ धर्मव्याधेन नानाधर्मान् बोधितेन कौशिकेन गृहमेत्य स्वपित्रोः शुश्रूषणम् ॥ २ ॥ मार्कण्डेयेन युधिष्ठिरं प्रति पतिव्रतामाहात्म्यादिकथनोपसंहारः ॥ ३ ॥

मार्कण्डेयः—

गुरू निवेद्य विप्राय तौ मातापितरावुभौ ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ १

व्याधः—

प्रवृत्तचक्षुर्जातोऽस्मि सम्पश्य तपसो बलम् ।
यदर्थमुक्तो भगवान् गच्छ त्वं मिथिलामिति ॥ २

पतिशुश्रूषरतया दान्तया सत्यशीलया ।
मिथिलायां वसन् व्याधस् स ते धर्मान् प्रवक्ष्यति ॥ ३

कौशिकः—

पतिव्रतायास्सत्यायाश् शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्यं धर्मज्ञ गुणवानसि मे मतः ॥ ४

व्याधः—

यत्तया त्वं द्विजश्रेष्ठ नियुक्तो मां प्रति प्रभो ।
दृष्टमेव तया सम्यग् एकपत्न्या न संशयः ॥ ५

त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया ।
वाक्यं च शृणु मे तात यत् ते वक्ष्ये हितं द्विज ॥ ६

त्वया विनिकृता माता पिता च द्विजसत्तम ।
अनिसृष्टोऽसि निष्क्रान्तो गृहात् ताभ्यामनिन्दित ॥ ७
वेदोच्चारणकार्यार्थम् अयुक्तं तत् त्वया कृतम् ॥ ७॥

तव शोकेन वृद्धौ द्वावन्धौ स्यातां तपस्विनौ ।
तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगान्महान् ॥ ८॥

[1-2]सर्वमेतदपार्थं ते क्षिप्रं तौ सम्प्रसादय ।
तौ प्रसाद्य द्विजश्रेष्ठ यच्छ्रेयस्तदवाप्स्यसि ॥ ९॥

श्रद्दधस्व मम ब्रह्मन् नान्यथा कर्तुमर्हसि ।
गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ १०॥

कौशिकः—

यदेतदुक्तं भवता सर्वं सत्यमसंशयम् ।
प्रीतोऽस्मि तव धर्मज्ञ साध्वाचारसमन्वित ॥ ११॥

दैवतप्रतिमो हि त्वं यस्त्वाद् धर्ममनुव्रतः ।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः ॥ १२॥

व्याधः—

मातापित्रोस्सकाशं हि गत्वा त्वं द्विजसत्तम ।

1. ख—तपस्वी त्वं महात्मा च धर्मे च निरतस्सदा । [अधिकः पाठः]
2. क-घ—अर्धद्वयं नास्ति

अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् ॥ १३॥
अतः परमहं धर्मं नान्यं पश्यामि कञ्चन ॥ १४

कौशिकः—

इहाहमागतो दिष्ट्या दिष्ट्या मे सङ्गतिस्त्वया ।
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ॥ १५

एको नरसहस्रेषु धर्मवान् विद्यते न वा ।
प्रीतोऽस्मि तव सत्येन भद्रं ते पुरुषोत्तम ॥ १६

पतमानो हि नरके भवताऽस्मि समुद्धृतः ।
[1]भवितव्यमथैवं च यद्दृष्टोऽसि मयाऽनघ ॥ १७

राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ।
सद्भिः पुरुषशार्दूल तथाऽहं भवता त्विह ॥ १८

मातापितृभ्यां शुश्रूषां करोमि वचनात् तव ।
नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ १९

दुर्ज्ञेयश्शाश्वतो धर्मश् शूद्रयोनौ तु वर्तता ।
न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् ॥ २०

येन कर्मविशेषेण प्राप्तेयं शूद्रता तव ।
एतदिच्छामि विज्ञातुं तत्त्वेन तव शूद्रताम् ॥ २१
कामयानस्य मे शंस सर्वं त्वं प्रयतात्मवान् ॥ २१॥

---

1. ख—इदमर्धद्वयं नास्ति

व्याधः—

अनतिक्रमणीया हि ब्राह्मणा वै द्विजोत्तम ।
शृणु धर्मं यथावृत्तं पूर्वदेहे ममानघ ॥ २२॥

अहं हि ब्राह्मणः पूर्वम् आसं द्विजवरात्मजः ।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ॥ २३॥

आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम् ॥ २४

कश्चिद्राजा मम सखा धनुर्वेदपरोऽभवत् ।
[1]संसर्गाद्धनुषि श्रेष्ठस् ततोऽहमभवं द्विज ॥ २५

एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ।
सहितो योधमुख्यैश्च मन्त्रिभिश्चाभिसंवृतः ॥ २६

ततोऽभ्यघ्नन् मृगास्तत्र सुबहूनाश्रमं प्रति ॥ २६॥

अथ क्षिप्तश्शरो घोरो मयाऽपि द्विजसत्तम ।
ताडितश्च मुनिस्तेन शरेणानतपर्वणा ॥ २७॥

भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन् ॥ २८

मुनिः—

नापराध्याम्यहं किञ्चित् केन पापमिदं कृतम् ॥ २८॥

व्याधः—

मन्वानस्तं मृगं चाहं सम्प्राप्तस्सहसा मुनिम् ।

---

1. ख—इदमर्धं नास्ति

अपश्यं तं मुनिं विद्धं शरेणानतपर्वणा ॥ २९॥

तमुग्रतपसं विप्रं निष्टनन्तं महीतले ।
अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ॥ ३०॥
अजानता कृतमिदं मयेत्यहमथाब्रुवम् ॥ ३१

क्षन्तुमर्हसि मे ब्रह्मन्निति चोक्तो मया मुनिः ।
ततः प्रत्यब्रवीद्वाक्यम् ऋषिर्मां क्रोधमूर्च्छितः ॥ ३२

मुनिः—

व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ॥* ३२॥

व्याधः—

[1]एवं शप्तोऽहमृषिणा तदा द्विजवरात्मज ।
अहं प्रासादयमृषिं गिरा वाक्यविशारदम् ॥ ३३॥

अजानता कृतमिदं कार्यं [2]तन्मे मयाऽद्य वै ।
क्षन्तुमर्हसि तत् सर्वं प्रसीद भगवन्निति ॥ ३४॥

ऋषिः—

नान्यथा भविता शाप एवमेतन्न संशयः ।
आनृशंस्यात्त्वहं किञ्चित् कर्ताऽनुग्रहमद्य वै ॥ ३५॥

शूद्रयोनौ वर्तमानो धर्मज्ञो भविता ह्यसि ।
मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ॥ ३६॥

---

*क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

1. अ—अर्धद्वयं नास्ति; ख-ग—अकार्यं तु मयाऽद्य वै;

2. क—त्वमथाद्य वै

तयोश्शुश्रूषया सिद्धिं महतीं समवाप्स्यसि ।
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि ॥ ३७॥

भूत्वा च धार्मिको व्याधः पित्रोश्शुश्रूषणे रतः ।
शापक्षये च निर्वृत्ते भविताऽसि पुनर्द्विजः ॥ ३८॥

व्याधः—

एवं शप्तः पुरा तेन ऋषिणाऽस्म्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैव वदतां वर ॥ ३९॥

शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम ।
आश्रमं च मया नीतो न च प्राणैर्वियुज्यते ॥ ४०॥

एतत् ते सर्वमाख्यातं यथा मम पुराऽभवत् ।
अभितश्चापि गन्तव्यो मया स्वर्गो द्विजोत्तम ॥ ४१॥

ब्राह्मणः—

एवमेतानि पुरुषा दुःखानि च सुखानि च ।
आप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि ॥ ४२॥

दुष्करं हि कृतं कर्म जानता जातिमात्मनः ॥ ४३
[1]कर्मदोषश्च वै विद्वन्नात्मजातिकृतेन वै ।
[2]कश्चित् कालो मृष्यतां वै ततोऽसि भविता द्विजः ॥ ४४

1. क—अर्धद्वयं नास्ति
ख—कर्मदोषाच्च वै व्याधस् ततो वै भविता द्विजः । [मध्ये अर्धं त्यक्तम्]
2. घ—नास्तीदमर्धम्

साम्प्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः ॥ ४४॥
ब्राह्मणः [1]पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्रायश् शूद्रेण सदृशो भवेत् ॥ ४५॥
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन भविता द्विजः ॥ ४६॥
[2]कर्मदोषेण विषमां गतिमाप्तोऽसि दारुणाम् ।
क्षीणदोषमहं मन्ये घाभितस्त्वां नरोत्तम ॥ ४७॥
कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः ।
[3]लोकवृत्तान्तवृत्तज्ञा नित्यं धर्मपरायणाः ॥ ४८॥

व्याधः—

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैस्समतां व्रजेत् ॥ ४९॥
अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च ।
मनुष्या मानसैर्दुःखैर् युज्यन्ते स्वल्पबुद्धयः ॥ ५०॥
[4]गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि सर्वदैकस्य शोकस्थानं हि विद्यते ॥ ५१॥
अनिष्टेनान्वितं पश्यंस् तथा क्षिप्रं विरज्यते ।
ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमम् ॥ ५२॥

---

1. क-च—स्त्वन्यदीयेषु　2. क-च—धर्म
3. ख—इदमर्धं नास्ति　4. ख—अर्धचतुष्टयं नास्ति

शोकेन न भवेत् किञ्चित् [1]केवलं परितप्यते ॥ ५३

[2]परित्यजन्ति ये दुःखं सुखं वाऽनन्तरं नराः ।
[3]सर्वदा सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ॥ ५४

असन्तोषपरा मूढास् सन्तोषं यान्ति पण्डिताः ॥ ५४॥

असन्तोषस्य नास्त्यन्तस् तुष्टस्य परमं सुखम् ।
न शोचन्ति गताध्वानः पश्यन्ति परमां गतिम् ॥ ५५॥

न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ ५६॥

[4]यं विषादोऽभिभवति [5]विषमे समुपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते ॥ ५७॥

अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किञ्चित् प्राप्नोति शोभनम् ॥ ५८॥

अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे ।
अशो[6]चंस्तारयेदेव युक्तश्च व्यसनी भवेत् ॥ ५९॥

[7]भूतेष्वभावं सञ्चिन्त्य ये तु बुद्धेः परं गताः ।
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् ॥ ६०॥

---

1. ख—शोकस्थानं हि विद्यते    क-घ—सौख्यं वाऽप्युभयं नराः
2. क—नास्तीदमर्धम्    3. ख—इदमर्धं नास्ति
4. ख—अर्धद्वयं नास्ति    5. अ-ख—विक्रमे
6. ख—चञ्चारभेतैव    7. क-घ—भूतेषु भावं

न शोचामि रमे विद्वन् कालाकाङ्क्षी स्थितोऽस्म्यहम् ।
एतैर्निदर्शनैर्ब्रह्मन् नावसीदामि सत्तम ॥ ६१॥

ब्राह्मणः—

कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव ।
पापान्निवृत्तश्च सदा ज्ञानवृद्धोऽसि धर्मवित् ॥ ६२॥

आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वां परिरक्षतु ।
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतां वर ॥ ६३॥

मार्कण्डेयः—

[1]बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ।
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ॥ ६४॥

स तु गत्वा द्विजस्सर्वां शुश्रूषां कृतवांस्तदा ।
मातापितृभ्यामन्धाभ्यां यथान्यायं सुशिक्षितः ॥ ६५॥

एतत् ते सर्वमाख्यातं निखिलेन युधिष्ठिर ।
पृष्टवानसि यत् तात धर्मं धर्मभृतां वर ॥ ६६॥

पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम ।
मातापित्रोश्च शुश्रूषा व्याधे धर्मश्च कीर्तितः ॥ ६७॥

युधिष्ठिरः—

अत्यद्भुतमिदं ब्रह्मन् धर्माख्यानमनुत्तमम् ।
सर्वधर्मविदां श्रेष्ठ कथितं द्विजसत्तम ॥ ६८॥

---

1. क—अर्धषट्कं नास्ति

सुखश्राव्यं त्वया विद्वन् मुहूर्तमिव मे गतम् ।
[1]न हि तृप्तोऽस्मि भगवन् शृण्वानो धर्ममुत्तमम् ॥[2] ६९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये ६९॥ श्लोकाः]

---

## ॥ एकोनाशीत्यधिकशततमोऽध्यायः ॥

---

मार्कण्डेयेन युधिष्ठिरं प्रत्याङ्गिरसोपाख्यानकथनारम्भः ॥ १ ॥ अङ्गि-
रसः पुलस्य बृहस्पतेर्देवैरङ्गिरसो वचनाद्गुरुत्वेन स्वीकरणम् ॥२॥ मार्क-
ण्डेयेनाग्नीनामुत्पत्त्यादिकथनम् ॥ ३ ॥

---

वैशम्पायनः—

श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।
पुनः पप्रच्छ तमृषिं मार्कण्डेयं तपस्विनम् ॥ १

युधिष्ठिरः—

कथमग्निर्वनं यातः कथं चाप्यङ्गिराः पुरा ।
नष्टेऽग्नौ हव्यमवहद् अग्निर्भूत्वा महामुनिः । २

---

1. ख—इदमर्धं नास्ति
2. ख—मार्कण्डेयः—
शृणोति य इमं नित्यं संवादं व्याधविप्रयोः ।
इह कीर्तिं परां प्राप्य गच्छेत् स परमां गतिम् ॥ [अधिकःपाठः]

[1]अग्निर्यथा चैक एव बहुत्वं चास्य कर्मसु ।
दृश्यते भगवन् सर्वम् एतदिच्छामि वेदितुम् ॥ ३
कुमारश्च यथोत्पन्नो यथा चाग्नेस्सुतोऽभवत् ।
यथा रुद्राच्च सम्भूतो गङ्गायां कृत्तिकासु च ॥ ४
एतदिच्छाम्यहं त्वत्तश् श्रोतुं भार्गवसत्तम ।
[2]कौतूहलसमाविष्टो याथातथ्यं महामुने ॥ ५

मार्कण्डेयः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यथा क्रुद्धो हुतवहस् तपस्तप्तुं वनं गतः ॥ ६
यथा च भगवानग्निस् स्वयमेवाङ्गिराऽभवत् ।
सन्तापयन् स्वप्रभया नाशयंस्तिमिराणि च ॥ ७
आश्रमस्थं महाभागो हव्यवाहं विशेषयन् ।
[3]तथा तु भूत्वा स तदा जगत् सर्वं प्रकाशयत् ॥ ८
तपश्चरंश्च हुतभुक् सन्तप्तश्च स्वतेजसा ।
भृशं ग्लानश्च तेजस्वी न किञ्चित् प्रतिजज्ञिवान् ॥ ९
अथ सञ्चिन्तयामास भगवान् हव्यवाहनः ॥ ९॥
अन्योऽग्निरिव लोकानां ब्रह्मणा सम्प्रवर्तितः ।
अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः ॥ १०॥

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धमिदं नास्ति
3. ख—इदमर्धं नास्ति

कथमग्निः पुनरहं भवेयमिति चिन्त्य सः ।
अपश्यदग्निवल्लोकांस् तापयन्तं महामुनिम् ॥ ११॥
सोपासर्पच्छनैर्भीतस् तमुवाच ततोऽङ्गिराः ॥ १२

अङ्गिराः—

शीघ्रमेव भवस्वाग्निस् त्वं पुनर्लोकभावनः ।
[1]विज्ञातश्चासि लोकेषु त्रिषु सस्थाणुचारिषु ॥ १३

त्वमग्ने प्रथमस्सृष्टो ब्रह्मणा तिमिरापहः ।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद ॥ १४

अग्निः—

नष्टकीर्तिरहं लोके भवाञ्जातो हुताशनः ।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः ॥ १५

निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव ।
भविष्यामि द्वितीयोऽहं प्राजापत्यस्तथैकतः ॥ १६

अङ्गिराः—

कुरु पुण्यं [2]प्रजासु त्वं भवाग्निस्तिमिरापहः ।
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ १७

मार्कण्डेयः—

तच्छ्रुत्वाऽङ्गिरसो वाक्यं जातवेदास्तथाऽकरोत् ।
राजन् बृहस्पतिर्नाम तस्याप्याङ्गिरसस्सुतः ॥ १८

---

1. ख—इदमर्धं नास्ति
2. अ—प्रजस्वाङ्य; क—प्रजावस्त्वम्; ख—प्रज स्वर्गी

ज्ञात्वा प्रथमजं तं तु वह्नेरङ्गिरसं सुतम् ।
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत ॥ १९

स तु पृष्टस्तदा देवैस् ततः कारणमब्रवीत् ।
प्रत्यगृह्णन्त देवाश्च तद्वचोऽङ्गिरसस्तदा ॥ २०

तत्र नानाविधानग्नीन् प्रवक्ष्यामि महाप्रभान् ।
कर्मभिर्बहुभिः ख्यातान् नानात्वं ब्राह्मणेष्वपि ॥* २१

ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह ।
तस्यापि वसुधा भार्या प्रजास्तस्यापि मे शृणु ॥ २२

बृहज्ज्योतिर्बृहत्कीर्तिर् बृहद्ब्रह्मा बृहन्मनाः ।
बृहन्मन्त्रो बृहद्भासस् तथा राजन् बृहस्पतिः ॥ २३

प्रजासु तासु सर्वासु रूपेणानुपमाऽभवत् ।
[1]देवी सरस्वती नाम प्रथमाऽङ्गिरसस्सुता ॥ २४

भूतानामेव सर्वेषां यस्यां रागस्तथाऽभवत् ।
रागाद्रागेति यामाहुर् द्वितीयाऽङ्गिरसस्सुता ॥ २५

[2]यां कपर्दिसुतामाहुर् दृश्यादृश्येति देहिनः ।
तनुत्वात् सा सिनीवाली तृतीयाऽङ्गिरसस्सुता ॥ २६

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क—अर्धपञ्चकं नास्ति; घ—अर्धचतुष्टयं नास्ति

2. ख—इदमर्धं नास्ति

[1]यां तु दृष्ट्वा भगवतीं जनः कुहकुहायते ।
एकानङ्गेति यामाहुश् चतुर्थीमङ्गिरस्सुताम् ॥ २७

पञ्चम्यर्चिष्मती भाति हविर्भिश्च हविष्मती ।
[2]षष्ठीं चाङ्गिरसः कन्यां पुण्यामाहुर्हविष्मतीम् ॥ २८

महामखेष्वाङ्गिरसी [3]दीप्तिमत्सु महाद्युतिः ।
महामतीति विख्याता सप्तमी कथ्यते सुता ॥ २९

बृहस्पतेश्चान्द्रमसी भार्या भूत्वा यशस्विनी ।
अग्नीन् साऽजनयत् पुण्यान् षडेकां चापि पुत्रिकाम् ॥ ३०

आहुतिष्वेव यस्याग्ने हविराज्यं विधीयते ।
सोऽग्निर्बृहस्पतेः पुत्रश् शंयुर्नाम महाप्रभः ॥ ३१

चातुर्मास्येषु [4]यस्येष्ट्या अश्वमेधेऽग्रजः पशुः ।
[5]दीप्तज्वालैरनेकाग्नैर् अग्निष्टोमोऽथ वीर्यवान् ॥ ३२

शंयोरप्रतिमा भार्या सत्या सत्याऽथ धर्मजा ।
अग्निस्तस्य सुतो दीप्तस् तिस्रः कन्याश्च सुव्रताः ॥ ३३

प्रथमेनाज्यभागेन पूज्यते सोऽग्निरध्वरे ।

---

1. ख—इदमर्धं नास्ति
2. ध—नास्तीदमर्धम्
3. ख—अयं पादोऽनन्तरश्च न स्तः
4. क—यस्येष्ट्यां अश्वमेधेषु यः पशुः; ख—यस्येष्टमश्वमेधाग्रभागभृत्
ध—यस्येष्ट्या अश्वमेधेषु यः पशुः
5. ख—इदमर्धं नास्ति

अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ॥ ३४

पौर्णमास्येषु सर्वेषु हविराज्यं स्रुवोद्यतम् ।
भरतो नामतस्सोऽग्निर् द्वितीयश्शंयुजस्सुतः ॥ ३५

तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः ।
भारतस्तु सुतस्तस्य भारत्येका च पुत्रिका ॥ ३६

भारतो भरतस्याग्नेः पावकस्तु प्रजायते ।
[1]महानत्यर्थमाहितस् तथा भरतसत्तम ॥ ३७

भरद्वाजस्य भार्या तु वीरा वीरश्च पिण्डदः ।
प्राहुराज्येन यस्येज्यां सोमस्येव द्विजाश्शनैः ॥ ३८

हविषा यो द्वितीयेन सोमेन सह युज्यते ।
[2]रथप्रभू रथध्वानः कुम्भरेतास्स उच्यते ॥ ३९

सरय्वां जनयत् सिद्धिं भानुं भाभिस्समावृणोत् ।
आग्नेयमनयद्विद्वान् आह्वानेष्वेव कथ्यते ॥ ४०

यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया ।
अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् ॥ ४१

[3]विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन् ।
विपापोऽग्निस्सुतस्तस्य योज्यस्समयकर्मणि ॥ ४२

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धत्रयं नास्ति
3. ख—इदमर्धं नास्ति

अक्रोशतां नराणां हि यः करोति हि निष्कृतिम् ।
अग्निस्स निष्कृतिर्नाम शोभयत्यभिसेवितः ॥ ४३

अनुकूजन्ति येनेह वेदनार्तास्स्वयं जनाः ।
तस्य पुत्रस्स्वनो नाम पावकस्सरुजस्करः ॥ ४४

[1]यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम् ॥ ४५

अन्तराग्निश्श्रुतो यो हि भुक्तं पचति देहिनाम् ।
स यज्ञे विश्वभुङ्नाम सर्वलोकेषु भारत ॥ ४६

ब्रह्मचारी यतात्मा च सततं विपुलप्रभः ।
ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् ॥ ४७

प्रथितो गोपतिर्नाम [2]नन्दी यस्याभवत् प्रिया ।
तस्मिन् सर्वाणि कर्माणि क्रियन्ते कर्मभिस्सदा ॥ ४८

बडबामुखः पिबत्यापो योऽसौ परमदारुणः ।
ऊर्ध्वभागूर्ध्वभाङ् नाम कविः प्राणाश्रितस्तु सः ॥ ४९

उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते ।
ततस्त्विष्टो भवेद्ब्रह्मा स्विष्टकृत् परमस्स्मृतः ॥ ५०

यः प्रशान्तेषु भूतेषु आविर्भवति पावकः ।
क्रोधस्स तु महातेजा विज्ञेयस्सर्वदेहिषु ॥ ५१

1. क—द्वादशार्धानि न सन्ति 2. ख-घ—नदी

क्रोधस्य तु [1]रथो जज्ञे मन्यती चास्य पुत्रिका ।
[2]हाहेति दारुणा क्रुद्धा सर्वभूतेषु तिष्ठति ॥ ५२

त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन ।
अतुलत्वात् कृतो देवैर् नाम्ना देवस्तु पावकः ॥ ५३

दर्पान्मां धारयन् क्रोधं धन्वी स्रग्वी रथे स्थितः ।
समरे नाशयेच्छत्रून् अमोघो नाम पावकः ॥ ५४

अकथ्यो नाम महाभागस् त्रिभिरुक्थैरभिष्टुतः ।
महावर्षं त्वजनयत् सकामाश्वं हि यं विदुः ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये ५५ श्लोकाः]

---

## ॥ अशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रत्यग्न्युत्पत्तिकथनम् ॥

---

मार्कण्डेयः—

काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः ।
अग्निराङ्गिरसश्चैव च्यवनस्तीव्रवर्षकः ॥ १

---

1. क-ख—रणे जज्ञे मतिमाया च; ख—रणे जज्ञे रणान्मन्युस्तथाऽभवम्
2. ख—इदमर्धं नास्ति

अचरत् स तपस्तीव्रं पुत्रार्थे बहुवार्षिकम् ।
पुत्रं लभेम धर्मिष्ठं यशसा ब्रह्मणा समम् ॥ २
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ ।
जज्ञे तेजोमयोऽर्चिष्मान् पञ्चवर्णः प्रभाकरः ॥ ३
समिद्धोऽग्निश्शिरस्तस्य बाहू सूर्यनिभौ तथा ।
तन्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ॥ ४
[1–2]पञ्चवर्णस्स तपसा कृतस्तैः पञ्चभिर्जनैः ।
पाञ्चजन्यश्श्रुतो वेदे पञ्चवंशकरस्तु सः ॥ ५
दशवर्षसहस्राणि तपस्तप्त्वा महातपाः ।
जनयत् पावकान् घोरान् पितॄणां स प्रजास्सृजन् ॥ ६
बृहद्रथन्तरं मूर्ध्नो वक्त्राच्च तपसा हरिम् ।
शिवं नाभ्यां बलादिन्द्रं प्राणाद्वायुं च भारत ॥ ७
बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह ।
एतान् सृष्ट्वा ततः पञ्च पितॄणामसृजत् सुतान् ॥ ८
बृहदूर्जस्य प्रणिधाः काश्यपस्य बृहत्तरः ।
भानुरङ्गिरसो वीरः पुत्रो वर्चस्य सौरभः ॥ ९
[3]प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्च वंशजाः ॥ ९॥

1. क—पञ्चवर्णबलादिन्द्रं प्राणाद्वायुश्च भारत। [अधिकः पाठः]
2. क—अर्धषट्कं नास्ति
3. क-ध—ब्राह्मणस्यानुदात्तस्य

देवान् यज्ञमुषश्चान्यान् सृजन् पञ्चदशोत्तरान् ॥ १०
अभीममतिभीमं च भीमं भीमबलं बलम् ।
एतान् यज्ञमुषः पञ्च देवानभ्यसृजत् ततः ॥ ११
सुमित्रं मित्रवन्तं च मित्रघ्नं मित्रवर्धनम् ।
[1]मित्रावरुणमित्येतान् देवानभ्यसृजत् ततः ॥ १२
सुरप्रवीरं वीरं च सुरेशं च सुवर्चसम् ।
सुराणामपि हर्तारं पञ्चैतानसृजत् ततः ॥ १३
त्रिविधं संहिता ह्येते पञ्च पञ्च पृथक् पृथक् ।
मुष्णन्तोऽत्र स्थिता ह्येते स्वर्गतान् यज्ञयाजिनः ॥ १४
तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्धविः ।
स्पर्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च ॥ १५
हविर्वेद्यां तदादानं कुशलैस्सम्प्रकीर्तितम् ।
तत्रैते नोपसर्पन्ति यत्र चाग्निश्श्रितोऽभवत् ॥ १६
चितोऽग्निरुद्वहन् यज्ञं पक्षाभ्यां तान् प्रबाधते ।
मन्त्रैः प्रशमितास्त्वेते नेष्टं मुष्णन्ति यज्ञियम् ॥ १७
तपस्ये बृहदुक्थस्य पुत्रो भूमिमुपाश्रितः ।
अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरीड्यते ॥ १८
रथन्तरश्च तपसः पुत्रोऽग्निः परिपठ्यते ।

1. क—अर्धत्रयं नास्ति

मित्रविन्दा हि चैतस्य हविरध्वर्यवो विदुः ॥ १९

एतैस्सह महाभाग तपस्तेजस्विभिर्नृप ।
मुमुदे परमप्रीतस् सह पुत्रैर्महायशाः ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ एकाशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति विस्तरेणाग्नीनां वंशकथनम् ॥

---

मार्कण्डेयः—

गुरुभिर्नियमैर्युक्तो भरतो नाम पार्थिव ।
अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति ॥ १

भरत्येष प्रजास्सर्वास् ततो भरत उच्यते ।
सततं भरतश्रेष्ठ पावकोऽयं महाप्रभः ॥ २

अग्निर्यस्तु शिवो नाम शक्तिपूजाय नित्यशः ।
दुःखार्तानां स सर्वेषां शिवकृत् सततं शिवः ॥ ३

तपसस्तु फलं दृष्ट्वा सम्प्रवृत्तं तपोमयम् ।
उद्धर्तुकामो मतिमान् पुत्रो जज्ञे पुरन्दरः ॥ ४

ऊष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ।
अग्निश्चापि मनुर्नाम प्राजापत्यं सकारणम् ॥ ५

शम्भुमग्निमथ प्राहुर् ब्राह्मणा वेदपारगाः ।
आवसथ्यं द्विजाः प्राहुर् दीप्तमग्निं महाप्रभम् ॥ ६

ऊर्जस्करान् हव्यवाहान् सुवर्णसदृशप्रभान् ।
अग्निस्तपो ह्यजनयत् पञ्च यज्ञसुतानिह ॥ ७

प्रतीतोऽग्निर्महाभाग परिश्रान्तो गवां पतिः ।
असुरानजयद् घोरान् मर्त्यांश्चैव पृथग्विधान् ॥ ८

तपसश्च मनुं पुत्रं भानुं चाप्यङ्गिरास्सृजत् ।
बृहद्भानुं तु तं प्राहुर् ब्राह्मणा वेदपारगाः ॥ ९

भानोर्भार्या महाराज बृहद्भासा च सोमजा ।
षट्पुत्रा[1]ञ्जनयामास तदा सा कन्यकाऽभवत् ॥ १०

दुर्बलानां तु भूतानां तनुं यस्सम्प्रयच्छति ।
तमग्निं बलदं प्राहुः प्रथमं भानुजं सुतम् ॥ ११

यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ।
अग्निस्स मन्युमान् नाम द्वितीयो भानुजस्सुतः ॥ १२

दर्शे च पौर्णमासे च यस्येह हविरुच्यते ।

---

1. क—नजनयंस्तान् षट्पुत्रांस्तदा शृणु
ख—व्यजायत हि षट् पुत्रान् शृणु तासां प्रजाविधिम् ।
घ—सा षट्पुत्रानजायन्त हर्षैः पुत्रं तदा शृणु ।

विष्णुर्नामेह योऽग्निस्तु धृतिमान् नाम सोऽङ्गिराः ॥ १३

इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् ।
अग्निराग्रयणो नाम भानोरेवान्वयस्स्मृतः ॥ १४

[1]चातुर्मास्येषु नित्यानां हविषां योनिरग्रजः ।
[2]चतुर्भिस्सहितः पुत्रैर् भानोरेवान्वयस्स्मृतः ॥ १५

चातुर्मास्येषु नित्यानां हविषां योनिरस्तु सः ।
निशां त्वजनयत् कन्याम् अग्नीषोमावुभौ तदा ॥ १६

मनोरेवाभवद्भार्या सुषुवे पञ्च पावकान् ॥ १६॥

पूज्यते हविषा योऽग्रे चातुर्मास्येषु पावकः ।
पर्जन्यसहितश्श्रीमान् अग्निर्वैश्वानरस्तु सः ॥ १७॥

अस्य लोकस्य सर्वस्य यः प्रभुः परिपठ्यते ।
सोऽग्निर्विश्वपतिर्नाम द्वितीयस्तपसस्सुतः ॥ १८॥

[3]यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वकं नाम पावकम् ॥ १९॥

अन्तरग्निश्रितो यो हि भुक्तं पचति देहिनाम् ।
स जज्ञे विश्वभुङ्नाम सर्वलोकेश्वरो वरः ॥ २०॥

ब्रह्मचारी यतात्मा च सततं विपुलव्रतः ।

1. क-अर्धद्वयं नास्ति 2. ख—नास्तीदमर्धम्
3. ख—अर्धषट्कं नास्ति

ब्राह्मणाः पूजयन्तो यं पाकयज्ञेषु पावकम् ॥ २१॥
प्रथितो गोपतिर्नाम नदी भार्याऽभवत् प्रिया ।
तस्मिन् सर्वाणि कर्माणि क्रियन्ते सर्वसेतवः ॥ २२॥
बडवामुखः पिबत्यापो योऽसौ परमदारुणः ।
ऊर्ध्वभागूर्ध्वभाङ्नाम कविः प्राणाश्रितस्तु सः ॥ २३॥
उदग्भागे हविर्यस्य गृहे नित्यं प्रदीयते ।
[1]ततस्स्विष्टं भवेद्ब्राह्मं स्विष्टकृत् परमस्स्मृतः ॥ २४॥
कन्या सा हरिणी नाम हिरण्यकशिपोस्सुता ।
कर्मणाऽसौ बभौ भार्या स वह्निस्स प्रजापतिः ॥ २५॥
प्राणमाश्रित्य यो देहं प्रवर्तयति देहिनाम् ।
तस्य सन्निहितो नाम शब्दरूपस्य साधनः ॥ २६॥
शुक्लकृष्णवपुर्देवो यो बिभर्ति हुताशनः ।
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः ॥ २७॥
कपिलं परमर्षिं च यं प्राहुर्यतयस्सदा ।
अग्निस्तु कपिलो नाम साङ्ख्ययोगप्रवर्तकः ॥ २८॥
योऽग्निर्यच्छति भूतानि येन चेष्टन्ति नित्यदा ।
कर्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते ॥ २९॥
इमानन्यांश्चावसृजन् पावकान् प्रथितौजसः ।

1. ख—अर्धद्वयं नास्ति

अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुद्गलान् ॥ ३०॥

संस्पृशेयुर्यदाऽन्योन्यं कथञ्चिद्वायुनाऽग्नयः ।
इष्टिरष्टाकपालेन कार्या स्याच्छुचयेऽग्नये ॥ ३१॥

[1]दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल ।
इष्टिरष्टाकपालेन कार्या स्याद् वीतयेऽग्नये ॥ ३२॥

यद्यग्नयो हि स्पृश्येयुर् निवेशस्था दवाग्निना ।
इष्टिरष्टाकपालेन कार्या तु शुचयेऽग्नये ॥ ३३॥

अग्निर्गार्हपत्यस्तु स्पृशेदाहवनीयकम् ।
इष्टिरष्टाकपालेन कार्या स्याद्विप्रचेऽग्नये ॥ ३४॥

[2]वैद्युताग्निर्यदा त्वग्निं संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या ह्याग्निमतेऽग्नये ॥ ३५॥

अग्निं रजस्वला वै स्त्री संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या त्वस्य चयेऽग्नये ॥ ३६॥

[3]मृते स्पृशेच्च यश्चाग्निम् अशुचिर्वाल्लिशो नरः ।
इष्टिरष्टाकपालेन कार्या वसुमतेऽग्नये ॥ ३७॥

आर्तो न जुहुयादग्निं त्रिरात्रं यस्तु वै द्विजः ।

---

1. अ—अर्धषट्कं नास्ति 2. अ-ख-घ—अर्धसयं नास्ति
3. अ-क-घ—मृतो ननु न यो जीवन् परासुः पशवो तथा ।

इष्टिरष्टाकपालेन कार्या तन्तुमतेऽग्नये ॥ ३८॥

दर्शश्च पौर्णमासश्च यस्य तिष्ठेत् प्रतिष्ठितः ।
इष्टिरष्टाकपालेन कार्या पथिकृतेऽग्नये ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[अस्मिन्नध्याये ३९॥ श्लोकाः]

---

## ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रत्यग्निवंशादिकीर्तनम् ॥

---

मार्कण्डेयः—

आपस्य मुदिता भार्या सा चास्य परमा प्रिया ।
भूपतिं भूतभर्तारं जनयामास पावकम् ॥ १

भूतानां चापि सर्वेषां यं प्राहुः पावकं पतिम् ।
आत्मा भुवनकर्ता तु सोऽध्वरेषु द्विजातिभिः ॥ २

महतां चैव भूतानां सर्वेषां चैव यः पतिः ।
भगवान् स महातेजा नित्यं चरति पावकः ॥ ३

अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते ।
आज्यं वहति यो हव्यं सर्वलोकस्य पावकः ॥ ४

अपाङ्गुर्भो महाभागस् सहपुत्रो महाद्भुतः ।
भूपतिर्भूमिकर्ता च महतः पतिरुच्यते ॥ ५
[1]मृता वहन्तो हव्यानि तस्याग्नेरग्रजा भवन् ॥ ५॥
अग्निष्टोमस्तु नियतः क्रतुश्रेष्ठो भवत्युत ॥ ६
आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात् ।
देवास्तं नाधिगच्छन्ति मार्गमाणा यथातथम् ॥ ७
दृष्ट्वा त्वग्निरथर्वाणं ततो वचनमब्रवीत् ॥ ७॥

अग्निः—

देवानां वह हव्यं त्वम् अहं देवेषु दुर्बलः ।
अथर्वन् गच्छ मा क्षिप्रं प्रियमेतत् कुरुष्व मे ॥ ८॥

मार्कण्डेयः—

प्रेष्य चाग्निरथर्वाणम् अन्यं देशं ततोऽगमत् ॥ ९
मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत् ॥ ९॥

अग्निः—

भक्ष्या वै विविधैर्भावैर् भविष्यथ शरीरिणाम् ॥ १०

मार्कण्डेयः—

अथर्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः ॥ १०॥
[2]अनुनीयमानो हि भृशं देववाक्यान्वितेन सः ।
नैच्छद्वोढुं हविस्सर्वं शरीरं च परित्यजन् ॥ ११॥
स तच्छरीरं सन्त्यज्य प्रविवेश धरां तदा ।

---

1. अ—नास्तीदमर्धम् 2. क-ख-घ—आनीयमानोऽपि

भूमिं स्पृष्ट्वाऽसृजद्धातून् पृथक् पृथगतीव हि ॥ १२॥
आस्यात् सुगन्धं तेजश्च अस्थिभ्यो देवदारु च ।
श्लेष्मणा स्फाटिकं तस्य पित्तान्मरकतं तथा ॥ १३॥

वातात् कृष्णाभ्रमभवत् त्रिभिरेतैर्बहु प्रजाः ।
त्वचस्तस्याभ्रपटलं स्नायुजं चापि विद्रुमम् ॥ १४॥
शरीरं विविधाश्चान्ये धातवोऽस्याभवन् नृप ॥ १५
एवं त्यक्त्वा शरीरं तु परमे तपसि स्थितः ॥ १५॥

भृग्वङ्गिरादिभिर्भूयस् तपसोत्थापितस्तदा ।
भृशं जज्वाल तेजस्वी तपसाऽऽप्यायितश्शिखी ॥ १६॥
दृष्ट्वा ऋषीन् भयाच्चापि प्रविवेश महार्णवम् ॥ १७

तस्मिन् नष्टे जगद्भीतम् अथर्वाणमथाश्रितम् ।
अर्चयामासुरेवैनम् अथर्वाणं सुरर्षयः ॥ १८

अथर्वाणं श्रिताँल्लोकान् आत्मन्यालोच्य पावकः ।
मिषतां सर्वभूतानाम् [1]उन्ममज्ज महार्णवात् ॥ १९

एवमग्निर्भगवता नष्टः पूर्वमथर्वणा ।
आहूतस्सर्वभूतानां हव्यं वहति सर्वदा ॥ २०
[2]एवं त्वजनयद्धिष्ण्यान् वेदोक्तान् विबुधान् बहून् ।

1. क-ख—उन्ममाथ महार्णवम्   2. ख—एष त्व

[1]विचरन् विविधान् देशान् भ्रममाणस्तु तत्र वै ॥ २१

सिन्धुवर्ज्याः पञ्च नद्यो देविकाऽथ सरस्वती ।
गङ्गा च शतकुम्भा च सरयूर्गन्धसाह्वया ॥ २२

चर्मण्वती मही चैव मेध्या मेधा स्मृतिस्तदा ।
इरावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी ॥ २३

तमसा नर्मदा चैव नदी गोदावरी तथा ।
[2]वेण्णा प्रवेणी भीमा च मेद्रथा चैव भारत ॥ २४

सुप्रयोगा च कावेरी [3]सुरदी मुर्मुरास्तथा ।
कृष्णा च कृष्णवेण्णा च कलमा शोण एव च ॥ २५

एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः ॥ २५॥

अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः ।
यावन्तः पावकाः प्रोक्तास् सोमास्तावन्त एव च ॥ २६॥

अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।
अग्निः पुत्रान् स्रष्टुकामस् तानेवात्मन्यधारयत् ॥ २७॥

अस्य तान् ब्रह्मणः कायान् निर्हरन्ति हुताशनान् ॥ २८

एवमेते महात्मानः कीर्तितास्तेऽग्नयो यथा ।

---

1. ख—इदमर्धं नास्ति 2. क-घ—वण्टा
3. क—सा नदी दुर्मदस्तथा ; ख—स नन्दी साजेवा तथा ;
घ—सा नदी नर्मदा तथा

[1]अप्रमेया यथोत्पन्नाश् श्रीमन्तस्तिमिरापहाः ॥ २९

अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम् ।
तादृशं विद्धि सर्वेषाम् एको ह्येष हुताशनः ॥ ३०

एक एवैष भगवान् विज्ञेयः परमाङ्गिराः ।
बहुधा निस्सृतः कायाज् ज्योतिष्टोमः क्रतुर्यथा ॥ ३१

इत्येष वंशस्सुमहान् अग्नीनां कीर्तितो मया ।
पावको विविधैर्मन्त्रैर् हव्यं वहति देहिनाम् ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ३२ श्लोकाः]

---

1. ख—इत्येष वंशस्सुमहानग्नीनां कीर्तितो मया । [अधिकः पाठः]

## ॥ अशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति कुमारोत्पत्तिप्रकारकथनारम्भः ॥ १॥ देवसेनानां नायकसम्पादनाय चिन्तयता इन्द्रेण मानसशैले कस्याश्चित् कन्याया अवलोकनं तस्याः कुलचिकीर्षितादिप्रश्नश्च ॥ २ ॥ कन्यया इन्द्रं प्रति स्वस्या दक्षपुत्रीत्वकथनपूर्वकं भर्तृकामनानिवेदनम् ॥ ३॥ इन्द्रेण कन्याया उचितपतिं प्रार्थितेन ब्रह्मणा कन्याभर्तुरनतिचिरभावित्वकथनपूर्वकं तस्यैव तत्सेनापतीभवनकथनम् ॥ ४ ॥ सप्तर्षिमखे तत्पत्नीनामवलोकनेन क्षुभितमनसाऽग्निना तासामलाभेन निर्वेदाद्वनं प्रति गमनम् ॥ ५ ॥ चिरेणाग्निकामया स्वाहयाऽवावसरे सप्तर्षिपत्नीसमानरूपस्वीकारेणाग्निवशीकरणनिर्धारणम् ॥ ६ ॥

वैशम्पायनः—

श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।
पुनः पप्रच्छ तमृषिं मार्कण्डेयं तपस्विनम् ॥ १

युधिष्ठिरः—

कुमारस्तु यथा जातो यथा चाग्नेस्सुतोऽभवत् ।
यथा रुद्राच्च सम्भूतो गङ्गायां कृत्तिकासु च ॥ २
एतदिच्छाम्यहं श्रोतुं कौतूहलमतीव मे ॥ २॥

मार्कण्डेयः—

अग्नीनां विविधा वंशाः कीर्तितास्ते मयाऽनघ ।
जन्म त्वं शृणु कौरव्य कार्तिकेयस्य धीमतः ॥ ३॥
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम् ।

जातं सप्तर्षिभार्याभिर् ब्रह्मण्यं कीर्तिवर्धनम् ॥ ४॥

देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् ।
तत्राजयन् सदा देवान् दानवा घोररूपिणः ॥ ५॥

वध्यमानं बलं दृष्ट्वा भीषणास्त्रैः पुरन्दरः ।
[1]स सैन्यनायकार्थाय चिन्तयामास वासवः ॥ ६॥

[2]स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।
शुश्रावार्तस्वरं घोरम् अथ मुक्तं स्त्रिया तदा ॥ ७॥

स्त्री—
अभिधावतु मां कश्चित् पुरुषस्त्रातु चैव हि ।
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ॥ ८॥

मार्कण्डेयः—
पुरन्दरस्तु तामाह मा भैर्नास्ति भयं तव ॥ ९

एवमुक्त्वा ततोऽपश्यत् केशिनं स्थितमग्रतः ।
किरीटिनं गदापाणिं धातुमन्तमिवाचलम् ॥ १०
हस्ते गृहीत्वा कन्यां ताम् अथैनं वासवोऽब्रवीत् ॥ १०॥

इन्द्रः—
अनार्यकर्मन् कस्मात् त्वम् इमां कन्यां जिहीर्षसि ।
[3]वज्रिणं मां विजानीहि विरमास्मात् प्रमाथनात् ॥ ११॥

केशी—
विसृजाशु त्वमेवैनां शक्रैषा प्रार्थिता मया ।

1. क-घ—नास्तीदमर्धम्
2. ख—देवसेनां दानवैर्यो हृतां दृष्ट्वा महाबलः ।
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ [अधिकः पाठः]
3. ख—इदमर्धं नास्ति

क्षमं ते जीवतो गन्तुं स्वपुरं पाकशासन ॥ १२॥

मार्कण्डेयः—

एवमुक्त्वा गदां केशी चिक्षेपेन्द्राय वै तदा ।
तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ॥ १३॥

अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् ।
महामेघप्रतीकाशं चलत्पावकसङ्कुलम् ॥ १४॥

तदापतन्तं वेगेन शैलशृङ्गं शतक्रतुः ।
बिभेद राजन् वेगेन भुवि तन्निपपात च ॥ १५॥

पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद् भृशपीडितः ॥ १६॥

अपयातेऽसुरे तस्मिस् तां कन्यां वासवोऽब्रवीत् ॥ १७

वासवः—

काऽसि कस्यासि किञ्चेह कुरुषे त्वं वरानने ॥* १७॥

कन्या—

अहं प्रजापतेः कन्या देवसेनेति विश्रुता ।
भगिनी मे दैत्यसेना सा पूर्वं केशिना हृता ॥ १८॥

सहैवावां भगिन्यौ तु सखीभिस्सह मानसम् ।
आगच्छावो विहारार्थम् अनुज्ञाप्य प्रजापतिम् ॥ १९॥

नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः ।

---

* क-ख—कोशयोरत्रैवाध्यायसमाप्तिर्दृश्यते ॥

इच्छत्येनां दैत्यसेना न त्वहं पाकशासन ॥ २०॥
सा हृता तेन भगवन् मुक्ताऽहं त्वद्बलेन तु ।
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्लभम् ॥ २१॥

इन्द्रः—

मम मातृष्वसेया त्वं माता दाक्षायणी मम ।
आख्यातुमहमिच्छामि स्वयमात्मबलं त्वया ॥ २२॥

कन्या—

अबलाऽहं महाबाहो पतिस्तु बलवान् मम ।
वरदानात् पितुर्भावी सुरासुरनमस्कृतः ॥ २३॥

इन्द्रः—

कीदृशं वै बलं देवि पत्युस्तव भविष्यति ।
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ २४॥

कन्या—

देवदानवयक्षाणां किन्नरोरगरक्षसाम् ।
जेता स दुष्टो [1]दैत्यानां महावीर्यो महाबलः ॥ २५॥
यस्तु सर्वाणि भूतानि त्वया सार्धं विजेष्यति ।
स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः ॥ २६॥

मार्कण्डेयः—

इन्द्रस्तस्या वचश्श्रुत्वा दुःखितोऽचिन्तयद्भृशम् ।
अस्या देव्याः पतिर्नास्ति यादृशं सम्प्रभाषते ॥ २७॥

---

1. क-ख-ग—दुष्टानां

अथापश्यत् स उदये भास्करं भास्करद्युतिः ।
सोमं चैव महात्मानं विशमानं दिवाकरम् ॥ २८॥

अमावास्यां सम्प्रवृत्तं मुहूर्तं रौद्रमेव च ।
देवासुरं च सङ्ग्रामं सोऽपश्यदुदये गिरौ ॥ २९॥

लोहितैश्च घनैर्युक्तां पूर्वां सन्ध्यां शतक्रतुः ।
अपश्यल्लोहितोदं च मघवान् वरुणालयम् ॥ ३०॥

भृगुभिश्चाङ्गिरोभ्यश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् ॥ ३१॥

[1]पर्व चैव चतुर्विशं तदा सूर्यमुपस्थितम् ।
तथा सूर्यं वह्निगतं सोमं सूर्यगतं च तम् ॥ ३२॥

[2]समालोक्यैकतामेव शशिनो भास्करस्य च ।
समवायं तु तं रौद्रं दृष्ट्वा शक्रो व्यचिन्तयत् ॥ ३३॥

एष रौद्रश्च सङ्घातो महान् युक्तश्च तेजसा ।
सोमस्य वह्निसूर्याभ्याम् अद्भुतस्तु समागमः ॥ ३४॥

जनयेद्यं सुतं सोमस् सोऽस्या देव्याः पतिर्भवेत् ।
अग्निश्चैभिर्गुणैस्सर्वैर् अग्निस्सर्वाश्च देवताः ॥ ३५॥

एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ॥ ३६

एवं सञ्चिन्त्य भगवान् ब्रह्मलोकं तदा गतः ।

1. ख—इदमर्धं नास्ति 2. क—अर्धत्रयं नास्ति

गृहीत्वा देवसेनां तां ववन्दे स पितामहम् ॥ ३७

उवाच चास्या देव त्वं साधु शूरं पतिं दिश ॥ ३७॥

ब्रह्मा—

यथैतच्चिन्तितं कार्यं त्वया दानवसूदन ।
तथा स भविता गर्भो बलवानुग्रविक्रमः ॥ ३८॥

स भविष्यति सेनानीस् त्वया सह शतक्रतो ।
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् ॥ ३९॥

मार्कंण्डेयः—

एतच्छ्रुत्वा नमस्तस्मै कृत्वाऽसौ सह कन्यया ।
तत्राभ्यगच्छद्देवेन्द्रो यत्र सप्तर्षयोऽभवन् ॥ ४०॥

वसिष्ठप्रमुखा मुख्या विप्रेन्द्रास्सुमहाप्रभाः ।
भागार्थं तपसोपात्तं तेषां सोमं तथाऽध्वरे ॥ ४१॥

पिपासवो ययुर्देवाश् शतक्रतुपुरोगमाः ॥ ४२

इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ।
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ॥ ४३

[1]समाहूतो हुतवहस् सोऽद्भुतस्सूर्यमण्डलात् ।
विनिस्सृत्य ययौ वह्निः पार्श्वतो विधिवत् प्रभुः ॥ ४४

आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ।
सततं विविधं हव्यं प्रतिगृह्य हुताशनः ॥ ४५

---

1. ख—अर्धपद्यकं नास्ति

ऋषिभ्यो भरतश्रेष्ठ प्रयाति स्म दिवौकसाम् ।
निष्कामंश्चाप्यपश्यत् स पत्नीस्तेषां महात्मनाम् ॥ ४६

दृष्ट्वाऽऽश्रमेषूपविष्टास् स्नायन्तीश्च पतिव्रताः ।
कुशवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः ॥ ४७

[1]स तद्गतेन मनसा बभूव क्षुभितेन्द्रियः ।
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ॥ ४८

स वह्निश्चिन्तयामास न न्याय्यं क्षुभितोऽस्मि यत् ।
साध्वीः पत्नीर्द्विजेन्द्राणाम् अकामाः कामयाम्यहम् ॥ ४९

नैताश्शक्या मया द्रष्टुं स्प्रष्टुं वाऽप्यनिमित्ततः ।
गार्हपत्यं समाविश्य तस्मात् पश्याम्यभीक्ष्णशः ॥ ५०

संस्पृशन्निव सर्वास्ताश् शिखाभिः काञ्चनप्रभाः ।
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ॥ ५१

निरुष्य तत्र सुचिरम् एवं वह्निर्वनं गतः ।
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः ॥ ५२

कामसन्तप्तहृदयो देहत्यागे स निश्चितः ।
अलाभे ब्राह्मणस्त्रीणाम् अग्निर्वनमुपागतः ॥ ५३

स्वाहा तं दक्षदुहिता प्रथमाऽकामयत् तदा ॥ ५३॥
सा तत्र च्छिद्रमन्विच्छन्त् चिरात् प्रभृति भामिनी ।

1. स—हुताशनार्चिःप्रतिमाः सर्वास्तारा इवाद्भुताः [अधिकः पाठः]

[1]अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता ॥ ५४॥

सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् ।
तत्त्वतः कामसन्तप्तं चिन्तयामास भामिनी ॥ ५५॥

अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ।
कामयिष्यामि कामार्तं तासां रूपेण मोहितम् ॥ ५६॥

एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ५७ श्लोकाः ]

---

## ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥

स्वाहयाऽरुन्धतीवर्जं सप्तर्षिपत्नीसारूप्येणाग्निना सह रमणम् ॥ १ ॥ ततो गारुडरूपस्वीकारेणाग्निरेतसां श्वेतपर्वतस्थकाञ्चनकुण्डे प्रक्षेपणम् ॥२॥ स्कन्नात्तद्रेतसः षण्मुखस्य संभवः ॥ ३ ॥ ततस्तेन बाणैः क्रौञ्चगिरिविदारणपूर्वकं शक्त्या श्वेतगिरिशिखरविभेदनम् ॥ ४ ॥

---

मार्कण्डेयः—

शिवा भार्या त्वङ्गिरसश्च शीलरूपगुणान्विता ।
तस्यास्सा प्रथमं रूपं कृत्वा देवी जनाधिप ॥ १

---

1. ख—इदमर्धं नास्ति

जगाम पावकाभ्याशं उवाच च वराङ्गना ॥ १॥

शिवा—

मामग्ने कामसम्पन्नां त्वं कामयितुमर्हसि ॥ २

करिष्यसि न चेदेवं मृतां मामुपधारय ।
तवाप्यधर्मस्सुमहान् भविता वै हुताशन ॥ ३

अहमङ्गिरसो भार्या शिवा नाम हुताशन ।
सखीभिस्सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ ४

अग्निः—

कथं मां त्वं विजानासि कामार्तमितराः कथम् ।
यास्त्वया कीर्तितास्सर्वास् सप्तर्षीणां प्रियास्त्रियः ॥ ५

शिवा—

अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषिताऽस्मि तवान्तिकम् ॥ ६

मैथुनायेह सम्प्राप्ता कामाप्त्यैव द्रुतं च माम् ।
उपयन्तुं महावीर्ये पूर्वमेव त्वमर्हसि ॥ ७

मार्कण्डेयः—

ततोऽग्निरुपयेमे तां शिवां प्रीत उदाहरत् ।
प्रीत्या [1]देहीति संयुक्ता शुक्रं जग्राह पाणिना ॥ ८

साऽचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने ।

---

1. क-ख-ग—देवी च

ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावकम् ॥ ९

तस्मादेतद्रक्षमाणा गरुडी सम्भवाम्यहम् ।
वनान्निर्गमनं चैव सुखं मम भविष्यति ॥ १०

सुपर्णी सा तदा भूत्वा निर्गत्य महतो वनात् ।
अपश्यत् पर्वतं श्वेतं शरस्तम्बैस्सुसंवृतम् ॥ ११

दृष्टीविषैस्सप्तशीर्षैर् गुप्तं भोगिभिरद्भुतैः ।
[1]रक्षोभिश्च पिशाचैश्च दुष्टैर्भूतगणैस्तथा ॥ १२

राक्षसीभिश्च सम्पूर्णम् अनेकैश्च मृगद्विजैः ।
नदीप्रस्रवणोपेतं नानातरुसमाचितम् ॥ १३

सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ।
प्राक्षिपत् काञ्चने कुण्डे शुक्रं सा त्वरिता सती ॥ १४

शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम् ।
पत्नीसरूपतां कृत्वा रमयामास पावकम् ॥ १५

दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया ।
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च ॥ १६

षट्कृत्वस्तत्र निक्षिप्तम् अग्ने रेतः कुरूत्तम ।
तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ १७

तत् स्कन्नं तेजसा तत्र संघृतं जनयत् सुतम् ।

---

1. ख—इदमर्धं नास्ति

[1]ऋषिभिः पूजितं स्कन्दं जनयत् स्कन्दनात् तु तत् ॥ १८
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः ।
एकग्रीवस्त्वेककायः कुमारस्समपद्यत ॥ १९

द्वितीयायामभिव्यक्तस् तृतीयायां शिशुर्बभौ ।
अङ्गप्रत्यङ्गसम्पूर्णश् चतुर्थ्यामभवद्गुहः ॥ २०

[2]लोहिताभ्रेण महता संवृतस्सवितृद्युतिः ।
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः ॥ २१

गृहीतं तु धनुस्तेन विपुलं रोमहर्षणम् ।
न्यस्तं यत् त्रिपुरघ्नेन पुरारातिनिकृन्तनम् ॥ २२

तद्गृहीत्वा धनुश्श्रेष्ठं ननाद बलवांस्तदा ।
सम्मोहयन्निमाँल्लोकान् गुहस्त्रीन् सचराचरान् ॥ २३

[3]तस्य तं निनदं श्रुत्वा महामेघोदधिप्रभम् ।
उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह ॥ २४

तावापतन्तौ सम्प्रेक्ष्य स बालोऽर्कसमद्युतिः ।
[4]द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना ॥ २५

अपरेणाग्निदायादस् ताम्रचूडं भुजेन सः ।
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरः ॥ २६

---

1. ख—इदमर्धं नास्ति
2. ख—अर्धद्वयं नास्ति
3. क—अर्धचतुष्टयं नास्ति
4. ख—अर्धत्रयं नास्ति

गृहीत्वा व्यनदद्भीमं चिक्रीड च महाबलः ॥ २६॥
द्वाभ्यां भुजाभ्यां बलवद् गृहीत्वा शङ्खमुत्तमम् ।
प्राध्मापयत भूतानां त्रासनं बलिनामपि ॥ २७॥
[1]द्वाभ्यां भुजाभ्यामाकाशं बहुशोऽप्याजघान सः ॥ २८
क्रीडन् भाति महासेनस् त्रीन् करान् वदनैः पिबन् ।
पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ २९
स तस्य पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः ।
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ॥ ३०
स पश्यन् विविधान् भावांश् चकार निनदं पुनः ॥ ३०॥
तस्य तं निनदं श्रुत्वा न्यपतन् बहुधा जनाः ।
भीताश्चोद्विग्नमनसस् तमेव शरणं गताः ॥ ३१॥
ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः ।
तांस्तदा तुष्टुवुस्सर्वे ब्राह्मणास्सुमहाबलाः ॥ ३२॥
स तूत्थाय महाबाहुर् उपसान्त्व्य च तान् जनान् ।
धनुर्विकृष्यावसृजद् बाणान् श्वेते महागिरौ ॥ ३३॥
बिभेद स शरैश्शैलं क्रौञ्चं हिमवतस्सुतम् ।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ॥ ३४॥
स तु शीर्णोऽपतच्छैलो भृशमार्तस्वरो नदन् ॥ ३५

1. इदमर्धं नास्ति

तस्मिन् निपतिते त्वन्ये नेदुश्शैला भृशं भयात् ।
घोरमार्तस्वरं रूपं दृष्ट्वा क्रौञ्चं विदारितम् ॥ ३६

[1]स तं नादं भयार्तानां श्रुत्वाऽपि बलिनां वरः ।
तत् प्राप्य यदमेयात्मा शक्तिमुद्यम्य चानदत् ॥ ३७

[2]नदता विपुला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं रोषात् श्वेतस्य तरसा गिरेः ॥ ३८

स तेनाभिहतो दीर्णो गिरिश्श्वेतोऽचलैस्सह ।
पलायत महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ॥ ३९

ततः प्रव्यथिता भूमिर् व्यशीर्यत समन्ततः ।
आर्ता स्कन्दं नमस्कृत्य पुनर्बलवती बभौ ॥ ४०

पर्वताश्च नमस्कृत्य तमेव पृथिवीं गताः ।
अथायमभजल्लोकस् स्कन्दं शुक्लस्य पञ्चमीम् ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये ४१ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति
2. क-घ—न तदा ; ख—ततश्च विपुला+तेनामितात्मना ।

## ।। पञ्चाशीत्यधिकशततमोऽध्यायः ।।

षडृषिभिर्लोकापवादभयात् स्वपत्नीनां परित्यागः ॥ १ ॥ विश्वामित्रेण कुमारस्य जातकर्मादिना संस्करणम् ॥ २ ॥ स्कन्दपराक्रमासहिष्णुना शक्रेण स्कन्देन सहाऽऽयोधनम् ॥३॥ इन्द्रवज्राभिहतात् स्कन्दस्य दक्षिणपार्श्वाद्विशाखस्य तथा कुमाराणां कन्यानां च समुद्भवः ॥ ४ ॥ स्कन्दाद्भीतेनेन्द्रेण तेन सह संधानम् ॥ ५ ॥

मार्कण्डेयः—

[1]इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
तत्तद्युद्धं महाघोरं षष्ठ्यां वृत्तं जनाधिप ।। १

ऋषयस्तु महाघोरान् दृष्ट्वोत्पातान् पृथग्विधान् ।
अकुर्वन् शान्तिमुद्विग्ना लोकानां लोकभावनाः ।। २

निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः ।
तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान् ।। ३
सङ्गम्य षड्भिः पत्नीभिस् सप्तर्षीणामिति स्म ह ।। ३।।

अपरे गरुडीमाहुस् तयाऽनर्थोऽयमाहृतः ।
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती ।। ४।।
न तु तत् स्वाहया कर्म कृतं जानाति वै जनः ।। ५

सुपर्णी तु ततश्श्रुत्वा ममायं तनयस्त्विति ।
उपगम्य शनैस्स्कन्दम् आहाहं जननी तव ।। ६

1. ख—अर्धद्वयमिदं नास्ति

अथ सप्तर्षयश्श्रुत्वा जातं पुत्रं महौजसम् ।
तत्यजुष्षट् तदा पत्नीर् विना देवीमरुन्धतीम् ॥ ७
षड्भिरेव तदा जातम् आहुस्तद्वनवासिनः ॥ ७॥
सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ।
अहं हेतुर्नैतदेवम् इति राजन् पुनः पुनः ॥ ८॥
विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ।
पावकं कामसन्तप्तम् अदृष्टः पृष्ठतोऽन्वगात् ॥ ९॥
तत् तेन निखिलं सर्वम् अवबुध्य यथातथम् ।
विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः ॥ १०॥
[1]स्कन्दं देवं सम्प्रचक्रे महादेवस्य चापि सः ।
मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश ॥ ११॥
जातकर्मादिकांश्चैव क्रियाश्चक्रे महामुनिः ॥ १२
षण्मूर्ध्नस्तस्य माहात्म्यं कुक्कुटस्य च साधनम् ।
शक्त्या देव्यास्साधनं च तथा परिषदामपि ॥ १३
विश्वामित्रश्चकारैतत् सर्वलोकहिताय वै ॥ १३॥
तस्मादृषिः कुमारस्य विश्वामित्रो दृढप्रियः ।
अन्वजानात् तदा स्वाहारूपान्यत्वं महामुनिः ॥ १४॥
[2]अथाब्रवीत् तान् सप्तर्षीन् युष्मत्पत्नीष्वयं शिशुः ।

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धद्वयं नास्ति

षट्सु जातो हुतवहात् [1]ते चाग्नेस्त्वमतो त्यजन् ॥ १५॥
स्कन्दं श्रुत्वा ततो देवास् सहिताश्शक्रमब्रुवन् ॥ १६

देवाः—

अविषह्यं बलं स्कन्दं जहि शक्राशु माचिरम् ॥ १६॥
यदि वा न निहंस्येनम् अद्येन्द्रोऽयं भविष्यति ।
त्रैलोक्यं सन्निगृह्यास्मांस् त्वां च शक्र महाबल ॥ १७॥

मार्कण्डेयः—

[2]स तानुवाच व्यथितो बालोऽयं सुमहाबलः ।
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् ॥ १८॥
सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ॥ १९
कामवीर्यास्तं तु चैनं तथेत्युक्त्वा यथातथम् ॥ १९॥
तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ।
अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः ॥ २०॥
ऊचुश्चापि त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत् ।
[3]अभिनन्दंस्तु तास्सर्वाः प्रस्नुतास्स्नेहविक्लबाः ॥ २१॥
तास्सम्पूज्य महासेनः कामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ २२॥
स तु सम्पूजितस्तेन सह मातृगणेन तम् ।

---

1. क—तेजोऽग्नेस्तत्पृजोऽत्यजत् । घ—तेजोऽग्नेस्त्वमतो त्यजन् ।
2. ख—इदमर्धं नास्ति
3. क-ख—अभिनन्द्य ततः घ—अभ्यनन्दंस्तु ताः

परिवार्य महासेनं [1]पुत्रवत् समभाषत ॥ २३॥
[2]सर्वासां या तु मातृणां नारी क्रोधसमुद्भवा ।
धात्री स्वपुत्रवत् स्कन्दं शूलहस्ताऽभ्यरक्षत ॥ २४॥
[3]लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत् पर्यरक्षत ॥ २५॥
[4]महास्सोपमहाश्चापि ऋषयो मातरस्तथा ।
हुताशनमुखाश्चापि दीप्ताः पारिषदा गणाः ॥ २६॥
परिवार्य महासेनं स्थिता मातृगणैस्सह ॥ २७
संदिग्धविजयं दृष्ट्वा विजयेप्सुः पुरन्दरः ।
आरुह्यैरावतस्कन्धं प्रययौ दैवतैस्सह ॥ २८
जिघांसुस्तं महासेनम् इन्द्रस्तूर्णतरं ययौ ॥ २८॥
[5]उग्रं तस्य महावेगं देवानीकं महाप्रभम् ।
विचित्रध्वजसन्नाहं नानावाहनकार्मुकम् ॥ २९॥
प्रवराम्बरसंवीतं श्रिया जुष्टमलङ्कृतम् ।
विजिघांसुं तदायान्तं कुमारश्शक्रमन्वयात् ॥ ३०॥
[6-7]वियत्पतिस्तु शक्रस्तु द्रुतं याति महाबलः ।

---

1. क-ख—रक्षमाणः स्थितस्तदा । 2. अ-ब—अर्धद्वयं नास्ति
3. अ-ख-ब—अर्धद्वयं नास्ति 4. अ-ख-ब—पङ्क्तिर्नास्ति न सन्ति
5. ख—द्वयमर्धं नास्ति
6. ख—इन्द्रोऽपि देवसेनां तां हर्षयन्नाजगाम ह । [अधिकः पाठः]
7. ख—अर्धद्वयं नास्ति

संहर्षयन् देवगणान् जिघांसुः पावकात्मजम् ॥ ३१॥

सम्पूज्यमानस्त्रिदशैस् तथैव परमर्षिभिः ।
समीपमुपसम्प्राप्तो वह्निपुत्रस्य वासवः ॥ ३२॥

सिंहनादं ततश्चक्रे देवेशस्सहितैस्सुरैः ॥ ३३
गुहोऽपि शब्दं तं श्रुत्वा व्यनदत् सागरो यथा ॥ ३३॥

अस्य शब्देन महता समुद्धूतोदधिप्रभम् ।
बभ्राम तत्रतत्रैव देवसैन्यं समन्ततः ॥ ३४॥

जिघांसूनुपसम्प्राप्तान् देवान् दृष्ट्वा स पावकिः ।
विससर्ज मुखात् क्रुद्धः प्रवृद्धाः पावकार्चिषः ॥ ३५॥
सा देवसेना न्यपतत् वेष्टमाना महीतले ॥ ३६

ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ।
प्रच्युतास्सहसा भान्ति चित्रास्तारागणा इव ॥ ३७

दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ।
देवा वज्रधरं त्यक्त्वा ततश्शान्तिमुपागताः ॥ ३८

त्यक्तो देवैस्ततश्शक्रो वज्रं स्कन्दे ह्यवासृजत् ।
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम् ॥ ३९

[1]वज्रप्रहारात् स्कन्दस्य सञ्जातः पुरुषोऽपरः ।
युवा काञ्चनसन्नाहश् शक्तिधृग् दिव्यकुण्डलः ॥ ४०

---

1. स—बिभेद च महाराज पार्श्वं तस्य महात्मनः ।    [अधिकः पाठः]

[1]यस्त्ववज्रविनाशात् तु विशाखस्तेन सोऽभवत् ॥ ४०॥

तं जातमपरं दृष्ट्वा कालानलसमद्युतिम् ।
भयादिन्द्रस्ततस्स्कन्दं प्राञ्जलिश्शरणं गतः ॥ ४१॥

तस्याभयं ददौ स्कन्दस् सहसैन्यस्य सत्तम ।
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ ४२॥

स्कन्दस्य पार्षदान् घोरान् छृणुष्वाद्भुतदर्शनान् ॥ ४३

वज्रप्रहारात्स्कन्दस्य जातास्तत्र कुमारकाः ।
ये हरन्ति शिशूञ्जातान् गर्भस्थांश्चैव दारुणाः ॥ ४४

वज्रप्रहारात् कन्याश्च जज्ञिरेऽस्य महाबलाः ॥ ४४॥

कुमारस्य विशाखं तु पुत्रत्वे समकल्पयत् ॥ ४५

स भूत्वा भगवान् सङ्ख्ये रक्षंश्छागमुखस्तदा ।
वृतः कन्यागणैस्सर्वैर् आत्मदीयैश्च पुत्रकैः ॥ ४६

मातृणां प्रेषितानां च भद्रशाखस्तु कोमलः ।
ततः कुमारं सञ्जातं स्कन्दमाहुर्जना भुवि ॥ ४७

रुद्रमग्निममुं स्वाहा प्रदेशेषु महाबलाः ।
यजन्ति पुत्रकामाश्च पुत्रिणश्च तदा जनाः ॥ ४८

यास्तास्त्वजनयत् कन्यास् तपो नाम हुताशनः ।
किं करोमीति तास्स्कन्दं सम्प्राप्तास्समभाषत ॥ ४९

---

1. ख—यद्वज्रविशनाजातो; ग—यस्य

भवेम सर्वलोकस्य वयं मातर उत्तमाः ।
प्रसादात् तव पूज्याश्च प्रियमेतत् कुरुष्व नः ॥ ५०
सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः ॥ ५०॥
[1–2]ऊचुश्चापि त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत् ।
अभिनन्दस्व नस्सर्वाः प्रस्नुतास्स्नेहविक्लवाः ॥ ५१॥
तास्सम्पूज्य महासेनः कामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ ५२॥
स हि स्म पूजितस्तेन सहमातृगणेन तम् ।
परिवार्य महासेनं रक्षमाणास्तु तस्थिरे ॥ ५३॥
सर्वासां या तु मातॄणां नारी क्रोधसमुद्भवा ।
धात्री सा पुत्रवत् स्कन्दं शूलहस्ताभ्यरक्षत ॥ ५४॥
लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत् पर्यरक्षत ॥ ५५॥
अग्निर्भूत्वा ततश्चैनं छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थः बालः क्रीडनकैरिव ॥ ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ अस्मिन्नध्याये ५६॥ श्लोकाः ]

---

1. ख—अशिवाश्च शिवाश्चैव पुनः पुनरुवाच ह । [अधिकः पाठः]
2. ख—अर्धदशकमिदं नास्ति

## ॥ षडशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति स्कन्दचरित्रप्रतिपादनम् ॥ १ ॥ इन्द्रेण स्कन्दस्य देवसेनापत्येऽभिषेचनम् ॥ २ ॥ स्कन्देनेन्द्रप्रार्थनया देवसेनाया उद्वहनम् ॥ ३ ॥

मार्कण्डेयः—

ततः प्रकल्प्य पुत्रत्वे स्कन्दं मातृगणा गमन् ।
काकी च हलिमा चैव माता चाथ हली तथा ॥ १
आर्या बला या वै धात्र्यस् सप्तैताश्शिशुमातरः ॥ १ ॥
एतासां वीर्यसम्पन्नो [1]मद्गुर्नाम्नाऽतिदारुणः ।
[2]स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयङ्करः ॥ २ ॥
एष वीराष्टके प्रोक्तस् स्कन्दो मातृगणोद्भवः ।
छागवक्त्रेण सहितो महासेनः प्रकीर्त्यते ॥ ३ ॥
षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् ॥ ४
[3]षण्णामभ्यन्तरा राजन् यत्तु मातृगणाश्रितम् ।
षण्णां तु प्रवरं तस्य शीर्षाणामिह शस्यते ॥ ५
शक्तिं येनासृजद्दिव्यां भद्रशाखामिति स्म ह ।
इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ॥ ६

1. क-ख—शिशुनां  2. ख—वीरोऽष्टमः पुत्रः
3. ख—इदमर्धं नास्ति

तत्र घोरं महद्युद्धं वृत्तं षष्ठ्यां जनाधिप ।
उपविष्टं ततस्स्कन्दम् आमुक्तकवचस्रजम् ॥ ७

हिरण्यचूडमुकुटं हिरण्याक्षं महाप्रभम् ।
लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् ॥ ८

सर्वलक्षणसम्पन्नं त्रैलोक्यस्यापि सुप्रियम् ।
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् ॥ ९

अभजत् पद्मनिलया स्वयमेव शरीरिणी ।
श्रिया जुष्टः पृथुयशास् सुकुमारवपुस्तदा ॥ १०

निषण्णो ददृशे भूतैः पौर्णमास्यां शशी यथा ।
अपूजयन् महात्मानो ब्राह्मणास्तं महाबलम् ॥ ११

इदमाहुस्तथा चैव स्कन्दं तत्र महर्षयः ॥ ११॥

ऋषयः—

हिरण्यवर्ण भद्रं ते लोकानां शङ्करो भव ।
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ॥ १२॥

अभयं च पुनर्दत्तं त्वयैवैषां सुरोत्तम ।
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयङ्करः ॥ १३॥

स्कन्दः—

किमिन्द्रस्सर्वलोकानां करोतीह तपोधनाः ।
कथं देवगणांश्चैव पाति सर्वान् सुरेश्वरः ॥ १४॥

ऋषयः—

[1]इन्द्रो दधाति भूतानां बलं तेजः प्रजास्सुखम् ।
तुष्टः प्रयच्छति तथा सर्वान् कामान् सुरेश्वरः ॥ १५॥

दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलसूदनः ॥ १६॥

असूर्ये च भवेत् सूर्यस् तथाऽचन्द्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यापश्चकार वै ॥ १७॥

एतदिन्द्रेण कर्तव्यम् इन्द्रे हि विपुलं बलम् ।
त्वं च वीर्यबलश्रेष्ठस् तस्मादिन्द्रो भवस्व नः ॥ १८॥

इन्द्रः—

भवस्वेन्द्रो महाबाहो सर्वेषां नस्सुखावहः ।
अभिषिञ्चस्व चाद्यैव प्राप्तरूपोऽसि सत्तम ॥ १९॥

स्कन्दः—

शाधि त्वमेव त्रैलोक्यम् अव्यग्रो विजये रतः ।
अहं ते किङ्करश्शक्र न मे शक्रत्वमीप्सितम् ॥ २०॥

इन्द्रः—

बलं तवातुलं वीर त्वं देवानामरीन् जहि ।
[2-3]अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः ॥ २१॥

---

1. अ-च—अर्धद्वयं नास्ति
2. ख—जहि शत्रून्महाबाहो लोकास्सन्तु निरामयाः । [अधिकः पाठः]
3. ख—अर्धद्वयं नास्ति

स्वे पदे भ्रंशितं वीर बलहीनं पराजितम् ।
त्वत्तेजसाऽवमंस्यन्ति लोका मां सुरसत्तम ॥ २२॥

आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः ।
भेदिते च त्वयि तथा को द्वैधमपनेष्यति ॥ २३॥

द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ।
विग्रहास्सम्प्रवर्तन्ते भूतभेदान्महाबल ॥ २४॥

तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि ।
तस्माविन्द्रस्त्वमेवाद्य भविता मा विचारय ॥ २५॥

स्कन्दः—

त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ।
करोमि किं च ते शक्र शासनात् तद्ब्रवीहि माम् ॥ २६॥

इन्द्रः—

यदि सत्यमिदं वाक्यं निश्चयात् काङ्क्षितं त्वया ।
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु ॥ २७॥

अभिषिच्यस्व देवानां सेनापत्ये महाबल ।
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल ॥ २८॥

स्कन्दः—

दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणानां रक्षार्थे सेनापत्येऽभिषिञ्च माम् ॥ २९॥

मार्कण्डेयः—

सोऽभिषिक्तो मघवता सर्वैर्देवगणैस्सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः ॥ ३०॥

तत्र तत् काञ्चनं छत्रं ध्रियमाणं व्यराजत ।
यथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् ॥ ३१॥

विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ ३२॥

आगम्य मनुजाघ्रेषु सह देव्या परन्तप ।
अर्चयामास सुप्रीतो भगवान् गोवृषध्वजः ॥ ३३॥

रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
कीर्त्यते सुमहातेजाः कुमारोऽद्भुतदर्शनः ॥ ३४॥

रुद्रेण शुक्रमुत्सृष्टं येन श्वेतोऽभवद्गिरिः ।
[1–2]पावकस्येन्द्रियं श्वेते कृत्तिकाभिर्धृतं नगे ॥ ३५॥

पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वे दिवौकसः ।
रुद्रसूनुं ततः प्राहुर् गुहं गुणवतांवरम् ॥ ३६॥

[3]अनुप्रविश्य जातेन वह्निं जातोऽप्ययं शिशुः ।
तत्र जातस्ततस्स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥ ३७॥

---

1. ख—तच्छुक्रं धारयामास वह्निर्गङ्गाजलेऽत्यजत् ।
गङ्गाशरवणे चापि तत्र स्कन्दो व्यजायत ॥ [अधिकः पाठः]

2. ख—इदमर्धं नास्ति 3. ख—अर्द्धद्वयं नास्ति

रुद्रस्य वह्नेस्स्वाहायां षण्णां स्त्रीणां च तेजसा ।
जातस्कन्दस्सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ॥ ३८॥

अरजे वाससी रक्ते वसानः पावकात्मजः ।
[1]भाति दीप्तवपुश्श्रीमान् रक्ताभ्रेषु इवांशुमान् ॥ ३९॥

कुक्कुटश्चाग्निना दत्तस् तस्य केतुरलङ्कृतः ।
रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः ॥ ४०॥

विवेश कवचं चास्य शरीरं सहजं तथा ।
युध्यमानस्य देवस्य प्रादुर्भवति सर्वदा ॥ ४१॥

शक्तिर्वीर्यं बलं तेजः कान्तित्वं सत्यमुन्नतिः ।
ब्रह्मण्यत्वमसम्मोहो भक्तानां परिरक्षणम् ॥ ४२॥

निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम् ।
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ॥ ४३॥

एवं देवगणैस्सर्वैस् सोऽभिषिक्तस्स्वलङ्कृतः ।
बभौ प्रदीप्तस्सुमहान् परिपूर्णेन्दुदर्शनः ॥ ४४॥

इष्टैस्स्वाध्यायघोषैश्च देवतूर्यवरैरपि ।
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ॥ ४५॥

[2]एतैश्चान्यैश्च विविधैस् तुष्टैरिष्टैरलङ्कृतः ।
क्रीडन्निव तदा देवैर् अभिषिक्तश्च पावकिः ॥ ४६॥

---

1. क-ख-ग—बभौ  2. ख—इदमर्धं नास्ति

[1]अभिषिक्तं महासेनम् अपश्यन्त दिवौकसः ।
विनिहत्य तमस्सूर्यं यथैवाभ्युदितं तथा ॥ ४७॥
अथैनमभ्ययुस्सर्वा देवसेनास्सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवन्त्यस्सर्वतो दिशः ॥ ४८॥
तास्समासाद्य भगवान् सर्वभूतगणैर्वृतः ।
अर्चितश्च स्तुतश्चैव सान्त्वयामास तास्तदा ॥ ४९॥
शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ।
सस्मार तां देवसेनां या सा तेन विमोक्षिता ॥ ५०॥

इन्द्रः—

अयं तस्याः पतिर्दत्तो विहितो ब्रह्मणा स्वयम् ॥ ५१
[2]-[3]त्वमस्या विधिवत् पाणिं अद्य मन्त्रपुरस्कृतम् ।
[4]गृहाण दक्षिणं देव्याः पाणिना वर्चसा श्रिया ॥ ५२

मार्कण्डेयः—

एवमुक्तस्स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविधिं जजाप च जुहाव च ॥ ५३
एवं स्कन्दस्य महिषीं देवसेनां विदुर्जनाः ।
षष्ठीं यां ब्राह्मणाः प्राहुर् लक्ष्मीमाशां सुखप्रदाम् ॥ ५४

---

1. अर्धपञ्चकं नास्ति
2. ख—सञ्चिन्त्य त्वानयामास देवसेनां स्वलंकृताम् ॥
स्कन्दायोवाच वलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयम्भुवा ॥ [अधिकः पाठः]
3. ख—तस्मात्त्वमस्या विधिवत् पाणिं गृह्णीष्व मा चिरम् ।[अधिकः पाठः]
4. ख—इदमर्धं नास्ति

सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम् ।
इत्येवमादिभिर्देवी नामभिः परिकीर्त्यते ॥ ५५

यदा स्कन्दः पतिर्लब्धश् शाश्वतो देवसेनया ।
तदा तमाश्रयल्लक्ष्मीस् स्वयं देवी शरीरिणी ॥ ५६

[1]श्रिया जुष्टस्सपञ्चम्यां तस्माच्छ्रीः पञ्चमी स्मृता ।
षष्ठ्यां कृतार्थोऽभूद्यस्मात् तस्मात् षष्ठी महातिथिः ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये ५७ श्लोकाः ]

---

## ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति स्कन्दचरितकीर्तनम् ॥

---

मार्कण्डेयः—

[1]श्रिया जुष्टं महासेनं देवसेनापतिं कृतम् ।
सप्तर्षिपत्न्यष्षड् देव्यस् तत्सकाशमथागमन् ॥ १

ऋषिभिस्सम्परित्यक्ता धर्मयुक्ता महाव्रताः ।
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् ॥ २

1. ख—श्रीजुष्टः पञ्चमीस्कन्दः; क-घ—श्रिया

देव्यः—

वयं पुत्र परित्यक्ता भर्तृभिर्देवसम्मितैः ।
अकारणाद्रुषा तात पुण्यस्थानात् परिच्युताः ॥ ३
अस्माभिः किल जातस्त्वम् इति केनाप्युदाहृतम् ।
अपत्यमेतत् संस्मृत्य तस्मात्त्रातुमर्हसि ॥ ४
अक्षयश्च भवेत् स्वर्गस् त्वत्प्रसादाद्धि नः प्रभो ।
पुत्रं च त्वामवाप्स्यामः कृत्वैतदनृणो भव ॥ ५

स्कन्दः—

मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः ।
यदवाप्स्यथ तत् सर्वं सम्भविष्यति वस्तदा ॥ ६

मार्कण्डेयः—

विवक्षितं ततश्शक्रः किं कार्यमिति सोऽब्रवीत् ।
स्कन्देनोक्तः प्रब्रवीहि सोऽब्रवीद्वासवस्ततः ॥ ७

वासवः—

[1]अभिजित् स्पर्धमाना तु रोहिण्या तु कनीयसी ।
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ॥ ८
तत्र मूढोऽस्मि भद्रं ते नक्षत्रं गगनाच्च्युतम् ।
कार्यं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ॥ ९
[2]धाता प्रजापतिः पूर्वम् एवं सङ्ख्या समोऽभवत् ॥ ९॥

मार्कण्डेयः—

एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—रोहिण्यादिस्तथा कालो ब्रह्मणा परिनिर्मितः । [अधिकः पाठः]

नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ॥ १०॥
विनता चाब्रवीत् स्कन्दं मम त्वं पिण्डदस्सुतः ।
इच्छामि नित्यं सहिता त्वया पुत्र सहासितुम् ॥ ११॥

स्कन्दः—

एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात् प्रशाधि माम् ।
स्नुषया पूज्यमाना वै देवि वत्स्यसिं नित्यदा ॥ १२॥

मार्कण्डेयः—

अथ मातृगणस्सर्वेस् स्कन्दं वचनमब्रवीत् ॥ १३

मातरः—

वयं सर्वस्य लोकस्य मातरः कविभिस्स्मृताः ।
इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ १४

मार्कण्डेयः—

तासां तु भाषितं श्रुत्वा स्कन्दो वचनमब्रवीत् ॥ १४॥

स्कन्दः—

मातरस्तु भवत्यो मे भवतीनामहं सुतः ।
[1]उच्यतां यन्मया कार्यं भवतीनामिहेप्सितम् ॥ १५॥

मातरः—

यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकीर्तिताः ।
अस्माकं च भवेत् स्थानं तासां चैव न तद्भवेत् ॥ १६॥
भवेम पूज्या लोकस्य मा ताः पूज्यास्सुरर्षिभिः ।
प्रजाऽस्माकं हतास्ताभिस् त्वत्कृते ताः प्रयच्छ नः ॥ १७॥

---

1. क—नास्तीदमर्धम्

स्कन्दः—

वृत्ताः प्रजा न ताश्शक्या भवतीभिर्निषेवितुम् ।
[1]अन्यां वस्ताः प्रयच्छामि प्रजां यां मनसेच्छथ ॥ १८॥

मातरः—

[2]ब्रह्मा तु तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।
[3]त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ १९॥

स्कन्दः—

प्रजा वो दद्मि चेष्टं तु भवतीभिरुदाहृतम् ।
परिरक्षन्तु भद्रं वः प्रजास्साधुनमस्कृताः ॥ २०॥

मातरः—

परिरक्षाम भद्रं ते प्रजास्स्कन्द यथेच्छसि ।
[4]त्वया नो रोचते स्कन्द सहवासश्चिरं विभो ॥ २१॥

स्कन्दः—

यावत् षोडश वर्षाणि भवन्ति तरुणाः प्रजाः ।
प्रबाधत मनुष्याणां तत्तद्रूपैः पृथग्विधैः ॥ २२॥

---

1. ख-घ—अन्यं कामं प्रयच्छामि पूजया मनसेच्छथ । [पाठान्तरम्]
2. घ—दत्ताः प्रजा न ताश्शक्या भवतीभिर्निषेविताः । [अधिकः पाठः]
3. ख—अर्धचतुष्टयं नास्ति
4. ख—प्रजादातुं हि कष्टं ता भवतीभिरुदाहृतम् ।
परिरक्षत भद्रं वः प्रजाः साधुनमस्कृताः ॥
मातरः—
परिरक्षाम भद्रं ते प्रजाः स्कन्द प्रयच्छ ह ।
त्वया न रोचते स्कन्द सहवासश्चिरं प्रभो ॥ [अधिकः पाठः]

अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम् ।
परमं तेन सहितास् सुखं वत्स्यथ पूजिताः ॥ २३॥

ततश्शरीरात् स्कन्दस्य पुरुषः काञ्चनप्रभः ।
भोक्तुं प्रजास्तु मर्त्यानां निष्पपात महाबलः ॥ २४॥

अपतत् सहसा भूमौ विसंज्ञोऽथ क्षुधाऽन्वितः ।
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः ॥ २५॥

स्कन्दापस्मार इत्याहुर् गृहं तं द्विजसत्तमाः ।
विनता तु महारौद्रा कथ्यन्ते शत्रुनिग्रहाः ॥ २६॥

मातॄणां राक्षसीं प्राहुस् तां विद्यात् पूतनाग्रहम् ।
कष्टा दारुणरूपेण घोररूपा निशाचरी ॥ २७॥

पिशाची दारुणाकारा कथ्यते शत्रुसूदन ।
गर्भं सा मानुषीणां तु हरते घोरदर्शना ॥ २८॥

अदितिं रेवतीं प्राहुर् ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालान् छिशून् घोरान् बाधते वै महाग्रहः ॥ २९॥

दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् ।
अत्यर्थं शिशुमांसेन सम्प्रतुष्टा दुरासदा ॥ ३०॥

कुमाराश्च कुमार्यश्च ये प्रोक्तास्स्कन्दसम्भवाः ।
ते हि गर्भभुजस्सर्वे कौरव्य सुमहाग्रहाः ॥ ३१॥

तासामेव कुमारीणां पतयस्ते प्रकीर्तिताः ॥ ३२

अज्ञायमानान् गृह्णन्ति बालकान् क्षुद्रकर्मणः ॥ ३२॥

गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि ॥ ३३॥

सरमा नाम या माता शुनां तेषां नराधिप ।
सा तु गर्भान् समादत्ते मानुषीणां सदैव हि ॥ ३४॥

पादपानां तु या माता करञ्जनिलया हि सा ।
[1]वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी ॥ ३५॥

करञ्जे तां नमस्यन्ति तस्मात् पुत्रार्थिनो पराः ।
इमे त्वष्टादश ह्येते महा मांसमधुप्रियाः ॥ ३६॥

दिवा च रात्रिं तिष्ठन्ति सततं सूतिकागृहे ॥ ३७

कद्रूस्सूतवपुर्भूत्वा गर्भिणीं प्रविशेद्यदा ।
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ॥ ३८

[2]या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा ।
उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ॥ ३९

लोहितस्योदधेः कन्या धात्री स्कन्दसुता स्मृता ।
लोहितायनिरित्येवं कदम्बे सा तु पूज्यते ॥ ४०

---

1. क—अर्धसप्तकं नास्ति; ख—नास्तीदमर्धम्
2. ख—सुजाता हरिणी य तु सा गर्भं पिबति प्रभो ।
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ॥ [अधिकः पाठः]

[1]पुरुषेषु यथा रुद्रस् तथाऽऽर्या प्रमदास्वपि ।
आर्या माता कुमारस्य पृथक् कामार्थमिज्यते ॥ ४१
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः ।
यावत् षोडश वर्षाणि ह्यशिवास्ते शिवास्स्मृताः ॥ ४२
एवं मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ।
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ॥ ४३
तेषां प्रशमनं कुर्यात् स्नानं धूपमथाञ्जनम् ।
बलिकर्मोपहारं च स्कन्दस्येज्यां विशेषतः ॥ ४४
एवमेतेऽर्चितास्सर्वे प्रयच्छन्ति शुभं नृणाम् ।
आयुर्वीर्यं च राजेन्द्र सम्यक् पूजानमस्कृतैः ॥ ४५
ऊर्ध्वं तु षोडशाद्वर्षाद् ये निघ्नन्ति ग्रहा नृणाम् ।
तानहं सम्प्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ४६
यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा ।
उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः ॥ ४७
आसीनश्च शयानश्च नरः पश्यति यः पितॄन् ।
उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ४८
[2]अवेक्ष्यते हि यस्सिद्धस् सिद्धान् पश्यत्युपेत्य च ।
उन्माद्यति स तु क्षिप्रं ज्ञेयस्सिद्धग्रहस्तु सः ॥ ४९
उपाघ्राति च यो गन्धान् रसांश्चैव पृथग्विधान् ।

1. स—इदमर्धद्वयं नास्ति  2. अ-व—अर्धचतुष्टयं नास्ति

उन्मादयति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ॥ ५०

गन्धर्वाश्चापि दिव्या यं संस्पृशन्ति नरं भुवि ।
उन्मादयति स तु क्षिप्रं ग्रहो गान्धर्व उच्यते ॥ ५१

आविशन्ति तु यं कामात् पुरुषान् कालपर्यये ।
उन्मादयति स तु क्षिप्रं ग्रहो वै राक्षसस्स्मृतः ॥ ५२

[1]यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः ।
उन्मादयति स तु क्षिप्रं साधनं तस्य शास्त्रतः ॥ ५३

वैक्लव्याच्च भयाच्चैव घोराणां चैव दर्शनात् ।
उन्मादयति स तु क्षिप्रं सत्त्वं तस्य तु साधनम् ॥ ५४

कश्चित् क्रीडनकामो वै भोक्तुकामस्तथा ग्रहः ।
[2]अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ॥ ५५

यावत् सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् ।
अतः परं तु मर्त्यानां ग्रहतुल्या भवेज्जरा ॥ ५६

अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं श्रद्दधानं च वर्जयन्ति सदा ग्रहाः ॥ ५७

इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः ।
न स्पृशन्ति ग्रहा भक्तान् नरान् देवं महेश्वरम् ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ अस्मिन्नध्याये ५८ श्लोकाः ]

---

1. अ-ब—अर्धचतुष्टयं नास्ति 2. अ-क-ब—इदमर्धं नास्ति

## ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥

स्कन्देन स्वाहादेव्या अभीष्टदानम् ॥ १ ॥ ब्रह्मणा स्कन्दं प्रति सोपपत्तिकं तस्य रुद्रपुत्रत्वादिकथनम् ॥ २ ॥ स्कन्दस्य देवसैनापत्येऽभिषेकानन्तरं महादेवस्य पार्वत्या सह भद्रवटं प्रति प्रस्थानम् ॥३॥ तदेन्द्रादिभिर्दिक्पालैः ससैन्यैस्तमनु प्रस्थानम् ॥ ४ ॥ तदा रुद्रेण स्कन्दस्य देवसैनापत्ये नियोजनम् ॥ ५ ॥ ततो देवासुराणां महायुद्धम् । तत्र स्कन्देन महिषासुरसंहारः ॥ ६ ॥

मार्कण्डेयः—

यदा स्कन्देन मातॄणाम् एवमेतत् प्रकीर्तितम् ।
अथैनमब्रवीत् स्वाहा मम पुत्रस्त्वमौरसः ॥ १

इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम् ।
तामब्रवीत् ततस्स्कन्दः प्रीतिमिच्छसि कीदृशीम् ॥ २

स्वाहा—

दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज ।
बाल्यात् प्रभृति नित्यं च जातकामा हुताशने ॥ ३

न च मां कामिनीं पुत्र सम्यग्जानाति पावकः ।
इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना ॥ ४

स्कन्दः—

हव्यं कव्यं च यत् किञ्चिद् द्विजा मन्त्रपुरस्कृतम् ।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्यतम् ॥ ५

अद्यप्रभृति दास्यन्ति सुपुत्रास्सत्पथे स्थिताः ।
एवमग्निस्त्वया सार्धं सदा वत्स्यति शोभने ॥ ६

मार्कण्डेयः—

एवमुक्ता ततस्स्वाहा तुष्टा स्कन्देन पूजिता ।
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ७

ततो ब्रह्मा महासेनं प्रजापतिरभाषत ॥ ७॥

ब्रह्मा—

अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ।
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया ॥ ८॥

हितार्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ९

उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना ।
आस्ते गिरौ निपतितं मुञ्जिको मुञ्जिका ततः ॥ १०

मिथुनं वै महाभाग तत्र तद्रुद्रसम्भवम् ।
भूतं लोकहितोद्देशे शुक्रशेषमवापतत् ॥ ११

सूर्यरश्मिषु चाप्यन्यद् अन्यच्चैवापतद्भुवि ।
आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधाऽपतत् ॥ १२

तत्र ते विविधाकारा गणा ज्ञेया मनीषिभिः ।
त एवं पार्षदा घोरा य एते पिशिताशिनः ॥ १३

मार्कण्डेयः—

एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ।

अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ १४

अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः ।
व्याधेः प्रशमनार्थे च तेषां पूजां यथार्हतः ॥ १५

[1]मुञ्जिकोमुञ्जिका चैव मिथुनं रुद्रसम्भवम् ।
नमस्कार्यं सदैवेह बालानां हितमिच्छता ॥ १६

स्त्रियो मानुषमांसादा वृध्दिका नाम नामतः ।
वृक्षेषु जाता वै देव्यो नमस्कार्याः प्रजार्थिभिः ॥ १७

तेषामेव पिशाचानाम् असङ्ख्येया गुणास्स्मृताः ।
घण्टायास्सपताकायाश् शृणु मे सम्भवं नृप ॥ १८

ऐरावतस्य घण्टे द्वे वैजयन्त्या विभूषिते ।
शुभाय ते [2]शुभे दत्ते क्रमेणानाय्य धीमता ॥ १९

एतास्तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ।
[3]पताका कार्तिकेयस्य विशाखस्य च लोहिता ॥ २०

यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः ॥ २१

---

1. क—मञ्जिको मञ्जिका चैव; ख—मुञ्जको मुष्टिका चैव
   घ—मिञ्जिको मिञ्जिका चैव
2. ख—गुहायते स्वयं पत्ते शक्रेणानाय्य
   क—स्वयं तेजश्शक्रेणा;    घ—शुभे दत्ते शक्रेणा
3. ख—इदमर्धं नास्ति

स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानश्श्रिया वृतः ॥ २२

तेन वीरेण शुशुभे स शैलश्शुभकाननः ।
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः ॥ २३

सन्तानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जपाशोकवनैस्तथा ॥ २४

कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
[1]तत्र देवाश्च गन्धर्वा नृत्यन्त्यऽप्सरसस्तथा ॥ २५

हृष्टानां तत्र भूतानां श्रूयते निनदो महान ॥ २५॥

एवं सेन्द्रं जगत् सर्वं श्वेतपर्वतमास्थितम् ।
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् ॥* २६॥

यदाऽभिषिक्तो भगवान् सेनापत्ये तु पावकिः ।
तदा सम्प्रस्थितश्श्रीमांस् ततो भद्र[2]वटो हरः ॥ २७॥

रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ।
अनुयातस्सुरैस्सर्वैस् सहस्राक्षपुरोगमैः ॥ २८॥

सहस्रं तस्य सिंहानां तस्मिन् युक्तं रथोत्तमे ।

---

1. ख—तत्र देवगणास्सर्वे सर्वे चैव महर्षयः ।
मेघतूर्यरवाश्चापि क्षुब्धोदधिसमस्वनाः ॥ [अधिकः पाठः]

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. क-ख-ग—वनं

उत्पपात रथो दिव्यः कालेनाभिप्रचोदितः ॥ २९॥
पिबन्त इव चाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ॥ ३०॥
तस्मिन् रथे पशुपतिस् स्थितो भात्युमया सह ।
विद्युता सहितस्सूर्यस् सेन्द्रचापे घने यथा ॥ ३१॥
अग्रतस्तस्य भगवान् धनेशो गुह्यकैस्सह ।
आस्थाय रुचिरं भाति पुष्पकं नरवाहनः ॥ ३२॥
ऐरावतं समास्थाय शक्रश्चापि सुरैस्सह ।
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् । ३३॥
[1]भास्करस्यैषरक्षोभिस् स्रग्विभिस्समलङ्कृतः ।
यात्यमोघो महायक्षो दक्षिणं पक्षमाश्रितः ॥ ३४॥
तस्य दक्षिणतो देवा बहवाश्चित्रयोधिनः ।
गच्छन्ति वसुभिस्सार्धं रुद्रैश्च सह सङ्गताः ॥ ३५॥
यमश्च मृत्युना सार्धं सर्वतः परिवारितः ।
घोरैर्व्याधिशतैर्युक्तो घोररूपवपुस्तथा ॥ ३६॥
यमस्य पृष्ठतश्चैव स घोरस्त्रिशिराश्शितः ।
विजयो नाम रुद्रस्य याति शूलस्स्वलङ्कृतः ॥ ३७॥
तमुग्रपाशो भगवान् वरुणस्सलिलेश्वरः ।

1. ख—अर्धचतुष्टयं नास्ति

परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ ३८॥

[1]पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टसः ।
गदामुसलशक्त्याद्यैर् वृतः प्रहरणोत्तमैः ॥ ३९॥

पट्टसं त्वन्वगाद्राजन् वज्रं घोरं महाप्रभम् ।
कमण्डलुश्चाप्यनु तं महर्षिगणसेवितः ॥ ४०॥

तस्य दक्षिणतो याति दण्डो गच्छञ् श्रिया वृतः ।
[2]भृग्वङ्गिरोभिस्सहितो देवैश्चाप्यभिपूजितः ॥ ४१॥

[3]एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः ।
याति संहर्षयन् सर्वांस् तेजसा त्रिदिवौकसः ॥ ४२॥

ऋषयश्चैव देवाश्च गन्धर्वानुगतास्तथा ।
नद्यो द्रुमा नगाश्चैव तथैवाप्सरसां गणाः ॥ ४३॥

नक्षत्राणां गणाश्चैव देवानां शिशवश्च ये ।
स्त्रियश्च सर्वदेवानां यान्ति रुद्रस्य पृष्ठतः ॥ ४४॥

सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः ।
पर्जन्यश्चाप्यनुययौ नमस्कृत्य पितामहम् ॥ ४५॥

छत्रं तु पाण्डुरं सोमस् तस्य मूर्धन्यधारयत् ।
चामरे चापि वायुश्च गृहीत्वाऽग्निश्च विष्ठितौ ॥ ४६॥

---

1. अ—अर्धचतुष्टयं नास्ति 2. ख—इदमर्धं नास्ति
3. क—इदमर्धं नास्ति

[1]शङ्कश्च पृष्ठतस्तस्य याति राजन् छ्रिया धृतः ।
सह राजर्षिभिस्सर्वैस् स्तुवानो धृषकेतनम् ॥ ४७॥

गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया ।
सावित्र्या सह सर्वास्ताः पार्वत्या सह पृष्ठतः ॥ ४८॥

[2]तत्र विद्यागणास्सर्वे ये केचित् कविभिस्स्मृताः ।
तस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ॥ ४९॥

स गृहीत्वा पताकां तु यात्यग्रे राक्षसो ग्रहः ।
[3]क्रीडतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा ॥ ५०॥

पिङ्गलो नाम रक्षेन्द्रो लोकस्यानन्ददायकः ।
एभिस्स सहितस्तत्र ययौ देवो यथासुखम् ॥ ५१॥

[4]अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा ।
रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् ॥ ५२॥

शिवमित्येव यं प्राहू रुद्रं चैव पिनाकिनम् ॥ ५३

एवं सर्वे सुरगणास् तदा वै प्रीतमानसाः ।
भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् ॥ ५४

देवसेनापतिस्त्वेवं देवसेनाभिराधृतः ।
अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ॥ ५५

---

1. अ—अर्धद्वयं नास्ति
2. ख—इदमर्धद्वयं नास्ति
3. ख—इदमर्धं नास्ति
4. ख—अर्धत्रयं नास्ति

अथाब्रवीन्महासेनं महातेजा वृषध्वजः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥ ५६

गुहः—
सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो ।
यदन्यदपि मे कार्यं देव तद्वद माचिरम् ॥ ५७

महादेवः—
कार्येष्वहं त्वया पुत्र सन्द्रष्टव्यस्सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ ५८

मार्कण्डेयः—
इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः ।
स्कन्दं सहोमया प्रीतो ज्वलन्तमिव तेजसा ॥ ५९

विसर्जिते ततस्स्कन्दे बभूवौत्पातिकं महत् ।
सहसैव महाराज देवान् सर्वान् प्रमोहयन् ॥ ६०

जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ।
चचाल व्यनदच्चोर्वी तमोभूतं जगत् प्रभो ॥ ६१

ततस्स्कन्दाननं दृष्ट्वा क्षुभितश्शङ्करस्तदा ।
उमा चापि महाभागा स देवर्षिगणैस्सह ॥ ६२

ततस्तेषु प्रमूढेषु पर्वताम्बुदसन्निभम् ।
नानाप्रहरणं घोरम् अदृश्यत महद्बलम् ॥ ६३

तद्धि घोरमसङ्ख्येयं गर्जन्तं विविधां गिरम् ।

अभ्यद्रवद्रणे देवान् भगवन्तं च शङ्करम् ॥ ६४
तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ।
पर्वताश्च शतघ्न्यश्च प्रासाश्च परिघा गदाः ॥ ६५
निपतद्भिश्च तैर्घोरैर् देवानीकं महायुधैः ।
क्षणेना[1]भ्यद्रवत् सर्वं विमुखं चैव दृश्यते ॥ ६६
निकृत्तयोधनाभं च कृत्तायुधमहारथम् ।
दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ॥ ६७
असुरैर्वध्यमाणं तु पावकैरिव काननम् ।
अपतद्दग्धभूयिष्ठं महाद्रुमवनं यथा ॥ ६८
ते विभिन्नशिरोदेहाः प्राद्रवन्त दिवौकसः ।
[2]नानाविधमभीच्छन्त वध्यमाना महारणे ॥ ६९
अथ तद्विद्रुतं दृष्ट्वा सैन्यं देवः पुरन्दरः ।
आश्वासयन्नुवाचेदं बलं तद्दानवार्दितम् ॥ ७०

पुरन्दरः—

भयं त्यजत भद्रं वश् शूराश्शस्त्राणि गृह्णत ।
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ॥ ७१
जयतैनान् दुराधर्षान् दानवान् घोरदर्शनान् ।
[3]अभिद्रवत भद्रं वो मया सह महासुरान् ॥ ७२

---

1. अ—भवद्वत् सर्वं विमुखश्चैव दृश्यते
ख—व्यद्रवत् सर्वं विमुखं च व्यदृश्यत ।
2. अ–नानाविधमगच्छन्ति वध्यमानाः; ख–इदमर्धं नास्ति; घ–मगच्छन्त
3. अ–घ—इदमर्धं नास्ति

मार्कण्डेयः—

शक्रस्य वचनं श्रुत्वा समाश्वस्तास्तु दानवान् ।
प्रत्ययुध्यन्त देवा वै शक्रं कृत्वा व्यपाश्रयम् ॥ ७३

ततस्ते त्रिदशास्सर्वे मरुतश्च महाबलाः ।
प्रत्युद्ययुर्महासेनास् साध्याश्च वसुभिस्सह ॥ ७४

तैर्विसृष्टान्यनीकेषु क्रुद्धैश्शस्त्राणि संयुगे ।
दैतेयगजकायेषु पिबन्ति स्मासृगुल्बणम् ॥ ७५

तेषां देहान् विनिर्भिद्य शरास्ते निशितास्तदा ।
निपतन्तोऽभ्यदृश्यन्त नगेभ्य इव पन्नगाः ॥ ७६

तानि दैत्यशरीराणि निर्भिन्नानि सुसायकैः ।
न्यपतन् भूतले राजंश् छिन्नाभ्राणीव सर्वशः ॥ ७७

ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ।
त्रासितं विविधैर्बाणैः कृतं चैव पराङ्मुखम् ॥ ७८

अथोद्घुष्टं तदा हृष्टैस् सर्वैर्देवैरुदायुधैः ।
संहतानि च तूर्याणि तदा सर्वाण्यनेकशः ॥ ७९

एवमन्योन्यसंयुक्तं युद्धमासीत् सुदारुणम् ।
देवानां दानवानां च मांसशोणितकर्दमम् ॥ ८०

[1]अनयो देवलोकस्य सहसैवाभ्यदृश्यत ।
तदाऽपि दानवा घोरा विनिघ्नन्ति दिवौकसः ॥ ८१

---

1. ख—इदमर्धं नास्ति

[1]ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः ।
बभूवुर्दानवेन्द्राणां सिंहनादश्च दारुणः ॥ ८२
अथ दैत्यबलाद्घोरान्निष्पपात महाबलः ।
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ॥ ८३
ते तं घनैरिवादित्यं दृष्ट्वा सम्परिवारितम् ।
समुद्यतगिरिं राजन् व्यद्रवन्त दिवौकसः ॥ ८४
अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम् ।
महाकायं महाराज सतोयमिव तोयदम् ॥ ८५
पतता तेन गिरिणा देवसैन्यस्य पार्थिव ।
भीमरूपेण निहतम् अयुतं प्रापत[2]द्भुवि ॥ ८६
अथ तैर्दानवैस्सार्धं महिषस्त्रासयन् सुरान् ।
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ॥ ८७
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः ।
व्यद्रवन्त रणे भीता विशीर्णायुधकेतनाः ॥ ८८
ततस्तु महिषः क्रुद्धस् तूर्णं रुद्ररथं ययौ ।
अभिसृत्य च जग्राह स रुद्ररथकूबरम् ॥ ८९
यदा रुद्ररथं क्रुद्धो महिषस्सहसा गतः ।
[3]रसतो रोदसी गाढं मुमुहु ऋषयस्तदा । ९०

1. अ-क-ख—अर्धषट्कं नास्ति　2. क-ख—द् युधि　ख—रथतो

व्यनदंश्च महाकाया दैत्या जलधरोपमाः ।
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥ ९१
तथाभूते तु भगवान् आगतं महिषं रणे ।
सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ॥ ९२
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य नानदत् ।
देवान् सन्त्रासयंश्चापि दानवांश्च प्रहर्षयन् ॥ ९३
ततस्तस्मिन् क्षये घोरे देवानां समुपस्थिते ।
आजगाम महासेनः क्रोधात् सूर्य इव ज्वलन् ॥ ९४
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः ।
लोहितास्यो महाबाहुर् हिरण्यकवचस्रजः ॥ ९५
रथमादित्यसङ्काशम् आस्थितः कनकप्रभम् ।
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत् सहसा रणे ॥ ९६
स चापि तां प्रज्वलितां महिषस्य विदारणीम् ।
मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ॥ ९७
सा मुक्तान्यहनच्छक्तिर् महिषस्य शिरो महत् ।
पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ९८
क्षिप्ताक्षिप्ता तु सा शक्तिर् हत्वा शत्रून् सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ॥ ९९
प्रायो हतेषु शूरेषु महासेनेन धीमता ।

दानवेषु महाराज तस्मिन् देवासुरे युधि ॥ १००
तेषां दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः ।
स्कन्दस्य पार्षदैर्घोरैर् भक्षिताश्शतसङ्घशः ॥ १०१
दानवान् भक्षयन्तस्ते प्रपिबन्तश्च शोणितम् ।
क्षणान्निर्दानवं सर्वम् अकार्षुर्भृशहर्षिताः ॥ १०२
[1]तमांसीव यथा सूर्यो वृक्षानिनतिघनान् खगः ।
तथा स्कन्दोऽजयच्छत्रून् स्वेन वीर्येण शक्तिमान् ॥ १०३
सम्पूज्यमानस्त्रिदशैर् अभिपूज्य महेश्वरम् ।
शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ॥ १०४
नष्टशत्रुर्यथा स्कन्दः प्रयातश्च महेश्वरम् ।
तथाऽब्रवीन्महासेनं परिष्वज्य पुरन्दरः ॥ १०५

पुरन्दरः—

ब्रह्मदत्तवरस्स्कन्द त्वयाऽयं महिषो हतः ।
अजेयो युधि देवानां दानवस्सुमहाबलः ॥ १०६
देवासुरा मया यस्य बिभियुर्जयतांवर ।
सोऽयं त्वया महाबाहो शमितो देवकण्टकः ॥ १०७
शतं महिषतुल्यानां दानवानां महारणे ।
निहतं देवशत्रूणां यैर्वयं पूर्वतापिताः ॥ १०८
तावकैर्भक्षिताश्चान्ये दानवाश्शतसङ्घशः ।

1. ख—इदमर्धं नास्ति

भवतोऽनुचरैर्वीर गणैः परमभीषणैः ॥ १०८

[1]अशक्यस्त्वं रणेऽरीणाम् उमापतिरिव प्रभुः ॥ १०९॥

एतत् ते प्रथमं कर्म देव ख्यातं भविष्यति ।

त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति ॥ ११०॥

[2]वशगाश्च भविष्यन्ति सुरास्तव महाभुज ॥ १११

मार्कण्डेयः—

महासेनं त्वेवमुक्त्वा निवृत्तस्सह दैवतैः ।

अनुज्ञातो भगवता त्र्यम्बकेण शचीपतिः ॥ ११२

ततो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः ।

उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ११३

स हत्वा दानवगणान् पूज्यमानो महर्षिभिः ।

एकाह्नैवाजयत् सर्वं त्रैलोक्यं वह्निनन्दनः ॥ ११४

स्कन्दस्य य इदं जन्म पठते सुसमाहितः ।

[3]स पुष्टिमिह सम्प्राप्य स्कन्दसालोक्यतामियात् ॥ ११५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
॥ ३७ ॥ मार्कण्डेयसमास्यापर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये ११५ श्लोकाः ]
[मार्कण्डेयसमास्यापर्व समाप्तम्]

---

1. क-ख-ग—अजय्य 2. ख—इदमर्धं नास्ति
3. ख—शृणुयाद्ब्राह्मणेभ्यो वा श्रावयेद्वाऽपि यो नरः ।
धनमायुर्यशोदीर्सि पुत्राम् शत्रुजयं तथा ॥ [अधिकः पाठः]

## ॥ एकोननवत्यधिकशततमोऽध्यायः ॥

(द्रौपदीसत्यभामासंवादपर्व)

सत्यभामया पतिवशीकरणोपायं पृष्टया द्रौपद्या तदुत्तरदानव्याजेन पतिव्रताधर्मकथनम् ॥

वैशम्पायनः—

उपासीनेषु विप्रेषु पाण्डवेषु च भारत ।
द्रौपदी सत्यभामा च विविशाते तदाश्रमम् ॥ १

प्रविश्य चाश्रमं पुण्यम् उभे ते परमस्त्रियौ ।
ते हास्यमाने सुप्रीते सुखं तत्र निषीदतुः ॥ २

चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे ।
कथयामासतुश्चित्राः कथाः कुरुयदूत्थिताः ॥ ३

अथाब्रवीत् सत्यभामा कृष्णस्य महिषी प्रिया ।
[1]सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ ४

सत्यभामा—

केन द्रौपदि वृत्तेन पाण्डवानुपतिष्ठसि ।
लोकपालोपमान् वीरान् नित्यं परमसम्मतान् ॥ ५

कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ।
तव वश्या हि सुभृशं पाण्डवाः प्रियदर्शने ॥ ६

1. क—अर्धसप्तदशकं नास्ति

न चान्योन्यमसूयन्ते कथं वा ते सुमध्यमे ।
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ७

व्रतचर्या तपो वाऽपि स्नानमन्त्रौषधानि च ।
विद्यावीर्यं मूलवीर्यं जपहोमस्तथागदाः ॥ ८

ममाप्याचक्ष्व पाञ्चालि रहस्यं भगवेतनम् ।
[1]येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ॥ ९

वैशम्पायनः—

एवमुक्त्वा सत्यभामा विरराम यशस्विनी ॥ ९॥
[2]पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम् ॥ १०

द्रौपदी—

असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि ।
असदाचरितो मार्गः कथं स्यादनुकीर्तनम् ॥ ११

अनुप्रश्नस्संशयो वा नैष त्वय्युपपद्यते ।
कथं ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया ॥ १२

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजते तदैवास्यास् सर्पाद्वेश्मगतादिव ॥ १३

उद्विग्नस्य कुतश्शान्तिर् अशान्तस्य कुतस्सुखम् ।
न जातु वशगो भर्ता स्त्रियास्स्यान्मन्त्रकारणात् ॥ १४

अमित्रविहिताश्चापि नार्यस्तत्र सुदारुणाः ।

1. अ—अर्धद्वयं नास्ति 2. अ-ब—इदमर्धं नास्ति

मूलप्रवादेन विषं प्रयच्छन्ति जिघांसवः ॥ १५
जिह्वया यानि पुरुषस् त्वचा वाऽप्युपसेवते ।
ततश्चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम् ॥ १६
जलोदरसमायुक्ताश् चित्रिणः पलितास्तथा ।
अपुमांसः कृतास्स्त्रीभिर् जडान्धबधिरास्तथा ॥ १७
पापानुषङ्गाः पापास्ताः पतीनुपसृजन्त्युत ।
न जातु विप्रियं भर्तुस् स्त्रिया कार्यं कथञ्चन ॥ १८
वर्ताम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु ।
तां सर्वां शृणु मे सत्यं सत्यभामे यशस्विनि ॥ १९
अहङ्कारं विहायाहं कामक्रोधौ च सर्वदा ।
सदारान् पार्थिवान् नित्यं प्रयतोपचराम्यहम् ॥ २०
प्रणयं प्रतिसङ्गृह्य निधायात्मानमात्मनि ।
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षणी ॥ २१
दुर्व्याहृताच्च कामानाम् उत्थिताद्दुरवेक्षितात् ।
दुरासदाद्दुर्विनीताद् इङ्गिताध्यासितादपि ॥ २२
सूर्यवैश्वानरनिभान् सोमकल्पान् महारथान् ।
सेवे मित्रगुणान् पार्थान् उग्रतेजः प्रतापिनः ॥ २३
देवो मनुष्यो गन्धर्वो युवा चापि स्वलङ्कृतः ।
द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ॥ २४

न भुक्तवति न स्नाते नासंविष्टे च भर्तरि ।
न संविशामि नाश्नामि न स्नाये कर्म कुर्वती ॥ २५
क्षेत्राद्वनाद्वा ग्रामाद्वा गृहं भर्तारमागतम् ।
प्रत्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ २६
प्रसन्नभाण्डा मृष्टान्ना काले भोजनदायिनी ।
संयता गुप्तधान्या च सुसम्मृष्टनिवेशना ॥ २७
अतिरस्कृतसम्भारा दुःस्त्रियो नानुसेवना ।
अनुकूलवती नित्यं भवाम्यनलसा सदा ॥ २८
अनर्मे चापि हसितं द्वारि स्थानमभीक्ष्णशः ।
अवस्करेऽपि च स्थानं निष्कुटे च विसर्जये ॥ २९
अन्त्यालापमसन्तोषं परव्यापारसङ्कथाम् ।
अतिहासातिरोषं च क्रोधस्थानं च वर्जये ॥ ३०
निरताऽहं सदा सत्ये पापानां च विसर्जने ।
सर्वथा भर्तुरहितं न ममेष्टं कथञ्चन ॥ ३१
यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता वसामि व्रतधारिणी ॥ ३२
यच्च भर्ता न पिबति यच्च भर्ता न खादति ।
यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ॥ ३३
यथोपदेशं नियता वर्तमाना वराङ्गने ।

स्वलङ्कृता [1]स्ववहिता भर्तुः प्रियहिते रता ॥ ३४
ये च धर्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा ।
अनुतिष्ठामि तत् सर्वं नित्यकालमतन्द्रिता ॥ ३५

भिक्षाबलिश्राद्धमिति स्थालीपाकश्च सर्वशः ।
मान्यानां मान्यसत्कारं ये चान्ये विदिता मया ॥ ३६

तान् सर्वाननुवर्तेऽहं दिवारात्रमतन्द्रिता ।
विनयाचारसंयुक्ता सदा सर्वात्मना श्रिता ॥ ३७

मृदून् सततसत्यशीलान् सत्यधर्मानुपालिनः ।
आशीविषानिव क्रुद्धान् पतीन् परिचराम्यहम् ॥ ३८
पत्याश्रयो हि मे धर्मो मतस्त्रीणां सनातनः ।
स देवः [2]सा गतिर्नान्यस् तस्य का न प्रियं चरेत् ॥ ३९
अहं पतीन्नातिशये नात्यश्ने नातिभूषये ।
नापि श्वश्रूं परिवदे सर्वदा पतियन्त्रिता ॥ ४०
अवधानेन सुभगे नित्योत्थाना भवामि वा ।
भर्तारो वशगा मह्यं गुरुशुश्रूषणेन च ॥ ४१
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्येका स्नानाच्छादनभोजनैः ॥ ४२

---

1. ख—सुप्रयता
2. ख—स गतिर्नार्यास्तस्य का विप्रि

[1]न चाप्यतिशये जातु वस्त्रभूषणभोजनैः ।
न चाप्यतिवदे वाचा तां पृथां पृथिवीसमाम् ॥ ४३

अष्टावग्रे सहस्राणि ब्राह्मणानां च नित्यदा ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ४४

[2]अष्टावशसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः ॥ ४५

दशान्यानि सहस्राणि तेषामन्नं सुसंस्कृतम् ।
भुञ्जते रुक्मपात्रीभिर् यतीनामूर्ध्वरेतसाम् ॥ ४६

तान् सर्वानग्रहारेण ब्राह्मणान् ब्रह्मवादिनः ।
[3]यथार्हं पूजयन्ति स्म पानाच्छादनभोजनैः ॥ ४७

शतं दश सहस्राणां कौन्तेयस्य महात्मनः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यस्स्वलङ्कृताः ॥ ४८

महार्हमाल्याभरणास् सुवर्णाश्चन्दनोक्षिताः ।
मणीन् हेम च बिभ्रन्त्यो नृत्तगीतविशारदाः ॥ ४९

तासां नाम च रूपं च भोजनाच्छादनानि च ।
[4]तासामेव च वेदाहं कर्म चैव कृताकृतम् ॥ ५०

शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।

---

1. ख—इदमर्धं नास्ति
2. क-ख—अष्टाशीति
3. क—अर्धपञ्चकं नास्ति
4. अ-क—अर्धद्वयं नास्ति

[1]पात्रहस्ता दिवारात्रम् अतिथीन् भोजयन्त्युत ॥ ५१
शतमश्वसहस्राणि दशनागायुतानि च ।
युधिष्ठिरस्यानुयायिनी इन्द्रप्रस्थनिवासिनः ॥ ५२
एतदासीत् तदा राज्ञो यन्महीं पर्यपालयत् ।
तेषां सङ्ख्याविधिं चैव प्रदिशामि शृणोमि च ॥ ५३
[2]अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ।
आगोपालाविपालेभ्यस् सर्वं वेद कृताकृतम् ॥ ५४
सर्वं राज्ञस्समुदयम् आयं च व्ययमेव च ।
एकाऽहं वेद्मि कल्याणि पाण्डवानां यशस्विनि ॥ ५५
मयि सर्वं समासाद्य कुटुम्बं भरतर्षभाः ।
उपासनपरास्सर्वे दृयां यान्ति शुभानने ॥ ५६
[3]तमहं भारमासक्तम् अनाधृष्यं महात्मभिः ।
सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ॥ ५७
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाऽहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ॥ ५८
अनिशायां निशायां च विहाय क्षुत्पिपासयोः ।
आराधयन्त्याः कौन्तेयांस् तुल्या रात्रिरहश्च मे ॥ ५९

---

1. अ—अर्धद्वयं नास्ति
2. ख—अर्धद्वयं नास्ति
3. ख—अर्धाष्टकं नास्ति

प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।
नित्यकालमहं मन्ये एतत् संवेतनं महत् ॥ ६०
[1]एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ।
असत्स्त्रीणां समाचारं नाहं कुर्यां न रोचये ॥ ६१

वैशम्पायनः—
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा ।
उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् ॥ ६२

सत्यभामा—
अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।
कामकारस्सखीनां हि सोपहासं प्रभाषितुम् ॥ ६३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
॥ ३८ ॥ द्रौपदीसत्यभामासंवादपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ६३ श्लोकाः]

---

## ॥ नवत्यधिकशततमोऽध्यायः ॥

द्रौपद्या सत्यभामां प्रति पतिवशीकरणोपायोपदेशव्याजेन पतिव्रताधर्मकथनम् ॥

---

द्रौपदी—
इमं तु ते मार्गमपेतदोषं
वक्ष्यामि चित्तग्रहणाय भर्तुः ।

---

1. ख—अनिद्राऽहं निशायां च पतीनुपचरामि च [अधिकः पाठः]

[1]अस्मिन् यथावत् सह वर्तमाना
भर्तारमा[2]धास्यसि कामिनीभ्यः ॥ १

नैतादृशं दैवतमस्ति किञ्चित्
सर्वेषु लोकेषु सदैवतेषु ।
यथा पतिस्तस्य तु सर्वकामा
लभ्याः प्रसादे कुपितश्च हन्यात् ॥ २

तस्मादपत्यं विविधाश्च भोगाश्
शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धास्
स्वर्गश्च लोको विविधा च कीर्तिः ॥ ३

सुखं सुखेनेह न जातु लभ्यं
दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन
प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ४

[3]स्नानासनैश्चारुभिरग्र्यमाल्यैर्
दाक्षिण्ययोगैर्विविधैश्च भावैः ।
अस्याः प्रियोऽस्मीति तथा विदित्वा
त्वामेव संश्लिष्यति सर्वभावैः ॥ ५

1. ख—यस्मि + सखि वर्तं     2. ख—कर्षसि  धेस्यसि
3. क—अर्धचतुष्टयं नास्ति

श्रुत्वा स्वरं द्वारगतस्य भर्तुः
प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरिताऽऽसनेन
पाद्येन चैव प्रतिपूजय त्वम् ॥ ६
सम्प्रेषितायामपि चैव दास्याम्
उत्थाय चैव प्रतिकर्म कुर्याः ।
जानातु कृष्णस्तव चेतिभावं
सर्वात्मना मां भजतीति सत्ये ॥ ७
त्वत्सन्निधौ यद्वचनं पतिस्ते
यद्यप्यवश्यं परिरक्षितव्यम् ।
काचित् सपत्नी तव वासुदेवं
प्रत्यादिशेत् तेन भवेद्विकारः ॥ ८
प्रियांश्च रम्यांश्च हितांश्च भर्तुस्
तान् भोजयेस्त्वं विविधैरुपायैः ।
द्वेष्यैरुपेक्ष्यैरहितैश्च तस्य
भिद्यस्व नित्यं कुहकोद्धतैश्च ॥ ९
त्रयं प्रमाणं पुरुषेषु कृत्वा
संयच्छ मानं प्रतिगृह्यमाणम् ।
प्रद्युम्नसाम्बावपि ते कुमारौ
नोपासितव्यौ रहिते कदाचित् ॥ १०

माहात्म्यशीलाभिरपापिकाभिस्
स्त्रीभिस्सखीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च
चोराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ११
एतद्यशस्यं भगवेतनं च
[1]स्वार्थं तदा शत्रुनिबर्हणं च ।
महार्हमाल्याभरणाङ्गरागैर्
भर्तारमाराधय पुण्यगन्धैः ॥ १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
॥ ३८ ॥ द्रौपदीसत्यभामासंवादपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये १२ श्लोकाः]

## ॥ एकनवत्यधिकशततमोऽध्यायः ॥

प्रियोक्तिभिर्द्रौपदीं परिसान्त्वितवत्या सत्यभामया सह श्रीकृष्णेन स्वपुरं प्रति गमनम् ॥

वैशम्पायनः—
मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः ।
कथाभिरनुरूपाभिस् सहासित्वा जनार्दनः ॥ १
ततस्तैस्संविदं कृत्वा यथावन्मधुसूदनः ।

1. क-ख-ब—स्वर्ग्यं

आरुरुक्षू रथं सत्याम् आह्वयामास भारत ॥ २

सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम् ।
उवाच वचनं हृद्यं यथाभावं समाहितम् ॥ ३

सत्यभामा—

कृष्णे माभूत् तवोत्कण्ठा [1]मा व्यथा मा प्रजागरः ।
भर्तृभिर्देवसङ्काशैर् जितां प्राप्स्यसि मेदिनीम् ॥ ४

न ह्येवं शीलसम्पन्ना नैवं पूजितलक्षणाः ।
प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ॥ ५

अवश्यं च त्वया भूमिर् इयं निहतकण्टका ।
भर्तृभिस्सह भोक्तव्या निर्द्वन्द्वेति श्रुतं मया ॥ ६

धार्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च ।
युधिष्ठिरे स्वां पृथिवीं द्रष्टासि द्रुपदात्मजे ॥ ७

यास्ताः प्रव्राज्यमानां त्वां प्राहसन् दर्पमोहिताः ।
ताः क्षिप्रं हतसङ्कल्पा द्रक्ष्यसि त्वं कुरुस्त्रियः ॥ ८

तव दुःखोपपन्नाया यैराचरितमप्रियम् ।
विद्धि तान् प्रस्थितान् सर्वास् तान् कृष्णे यमसादनम् ॥ ९

पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमश्च वर्धनः ।
श्रुतकर्मार्जुनिश्चैव शतानीकश्च नाकुलिः ॥ १०

सहदेवाच्च यो जातश् श्रुतसेनस्तवात्मजः ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ॥ ११
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् ।
त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता ॥ १२
प्रीयते भावनिर्द्वन्द्वा तेभ्यश्च विगतज्वरा ।
भज सर्वात्मना चैव प्रद्युम्नजननी तथा ॥ १३
भानुप्रभृतिभिश्चैनान् विशिनष्टि च केशवः ।
भोजनाच्छादने तेषां नित्यं मे श्वशुरस्थितः ॥ १४
रामप्रभृतयस्सर्वे भजन्त्यन्धकवृष्णयः ।
तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भामिनि ॥ १५

वैशम्पायनः—

एवमादि प्रियं प्रीत्या हृद्यमुक्त्वा मनोगतम् ।
गमनाय मनश्चक्रे वासुदेवरथं प्रति ॥ १६
तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ।
आरुरोह रथं शौरेस् सत्यभामा च भामिनी ॥ १७
स्मयित्वा तु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च ।
उपावर्त्य हयैश्शीघ्रैस् ततः प्रायान्नराधिप ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

॥ ३८ ॥ द्रौपदीसत्यभामासंवादपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये १८ श्लोकाः ]

[ द्रौपदीसत्यभामासंवादपर्वं समाप्तम् ]

---

## ॥ द्विनवत्यधिकशततमोऽध्यायः ॥

[ घोषयात्रापर्व ]

कस्माच्चिद्ब्राह्मणात्पाण्डववृत्तान्तं श्रुतवता धृतराष्ट्रेण पाण्डवान् प्रति परिशोचनम् ॥ १ ॥ तथा पाण्डवपराक्रमानुस्मरणेन स्वपुत्राणां भाविवधनिर्धारणपूर्वकं तान् प्रति परिशोचनम् ॥ २ ॥

जनमेजयः—

एवं वने वर्तमाना नराग्र्याश्
शीतोष्णवातातपकर्शिताङ्गाः ।
[1]सरस्तदासाद्य वनं च पुण्यं
ततः परं किमकुर्वन्त पार्थाः ॥ १

वैशम्पायनः—

सरस्तदासाद्य तु पाण्डुपुत्रा
जनं समुत्सृज्य [2]विधाय चेष्टम् ।
वनानि रम्याण्यथ पर्वतांश्च
नदीप्रदेशांश्च तथा विचेरुः ॥ २

श्रुत्वा वने तान् वसतः प्रवीरान्
स्वाध्यायवन्तश्च तपोधनाश्च ।
अभ्याययुर्वेदविदः पुराणास्
तान् पूजयामासुरथो नराग्र्याः ॥ ३

1. क—नासीदमर्षम् 2. क-ख-ब—विहाय

ततः कदाचित् कुशलः कथासु
विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
स तैस्समेत्याथ यदृच्छयैव
वैचित्रवीर्यं नृपमभ्यगच्छत् ॥ ४

अथोपविष्टः प्रतिसत्कृतश्च
वृद्धेन राज्ञा कुरुसत्तमेन ।
प्रचोदितस्सकथयाम्बभूव
धर्मानिलेन्द्रप्रभवान् यमौ च ॥ ५

कृशांश्च वातातपकर्शिताङ्गान्
दुःखस्य चोग्रस्य मुखे प्रपन्नान् ।
[1]प्रोवाच चैनान् विहृतान्तरात्मा
निश्वासबाष्पोपहतांश्च पार्थान ॥ ६

वाचं कथञ्चित् स्थिरतामुपेत्य
तत् सर्वमात्मप्रभवं विचिन्त्य ॥ ६॥

धृतराष्ट्रः—

कथं नु सत्यश्रुतिरार्यवृत्तो
ज्येष्ठस्सुतानां मम धर्मराजः ।

---

1. ख—तां चाप्यनाथामिव वीरनाथां
कृष्णां परिक्लेशगुणेन युक्ताम् ।
वने स्थितान् पार्थिवपुत्रपौत्रान्
श्रुत्वा तदा दुःखनदीं प्रपन्नान् ॥
ततः कथास्तस्य निशम्य राजा
वैचित्रवीर्यः कृपयाभितप्तः । [अधिकः पाठः]

अजातशत्रुर्वसुधातलेषु
शेते पुरा राङ्कवकूटशायी ॥ ७॥
प्रबोध्यते मागधसूतपुत्रैर्
नित्यं स्तुवद्भिस्स्वयमिन्द्रकल्पः ।
पतत्त्रिसङ्घैस्समुपेत्य रात्रौ
प्रबोध्यते नूनमिलातलस्थः ॥ ८॥

कथं नु वातातपकर्शिताङ्गो
वृकोदरः कोपपरिप्लुताक्षः ।
शेते पृथिव्यामतथोचितस्स
कृष्णासमक्षं वसुधातलस्थः ॥ ९॥

तथाऽर्जुनस्सुकुमारो मनस्वी
वशे स्थितो धर्मसुतस्य राज्ञः ।
विधूयमानैरिव सर्वगात्रैर्
ध्रुवं न शेते वसतीरमर्षात् ॥ १०॥

[1]यमौ च कृष्णां च युधिष्ठिरं च
भीमं च दृष्ट्वा सुखसंवियुक्तम् ।
विनिश्श्वसन् सर्प इवोग्रतेजा
ध्रुवं न शेते वसतीरमर्षात् ॥ ११॥

1. ख—इदमर्धद्वयं नास्ति

तथा यमौ चाप्यसुखौ सुखार्हौ
समृद्धरूपावमरौ दिवीव ।
प्रजागरस्थौ ध्रुवमप्रशान्तौ
क्रोधेन सत्येन च वार्यमाणौ ॥ १२॥

समीरणेनाथ समो बलेन
समीरणस्यापि सुतो बलीयान् ।
स धर्मपाशेन धृतोऽप्रतेजा
ध्रुवं विनिश्श्वस्य सहत्यमर्षम् ॥ १३॥

स चापि भूमौ परिवर्तमानो
वधं सुतानां मम काङ्क्षमाणः ।
सत्येन धर्मेण च वार्यमाणः
कालं प्रतीक्षत्यथ कारणैस्तैः ॥ १४॥

अजातशत्रौ तु जिते निकृत्या
दुश्शासनो यत् परुषाण्यवोचत् ।
तानि प्रविष्टानि वृकोदराङ्गं
दहन्ति मर्माग्निरिवेन्धनानि ॥ १५॥

न पापके स्थास्यति धर्मपुत्रो
धनञ्जयश्चाप्यनुवर्तते तम् ।
अरण्यवासेन विवर्धते तु
भीमस्य कोपोऽग्निरिवानिलेन ॥ १६॥

[1]स तेन कोपेन विदीर्यमाणः
करं करेणाभिनिपीड्य वीरः ।
विनिश्श्वसत्युष्णमतीव घोरं
दहन्निवैनं मम पुत्रमाभ्याम् ॥ १७॥

गाण्डीवधन्वा च वृकोदरश्च
संरम्भिणौ पन्नगकालकल्पौ ।
न शेषयेतां युधि शत्रुसेनां
शरान् किरन्तावशनिप्रकाशान् ॥ १८॥

दुर्योधनश्शकुनिस्सूतपुत्रो
दुश्शासनश्चापि सुमन्दचेताः ।
मधु प्रपश्यन्ति न तु प्रपातं
वृकोदरं चैव धनञ्जयं च ॥ १९॥

शुभाशुभं पुरुषः कर्म कृत्वा
प्रतीक्षते चेत् स फलं विपाके ।
स तेन युज्यत्यवशः फलेन
मोक्षः कथं स्यात् पुरुषस्य तस्मात् ॥ २०॥

क्षेत्रे सुकृष्टे निचिते च बीजे
देवे च वर्षत्यनुकूलयुक्तम् ।

1. ख—अर्धद्वयं नास्ति

न स्यात् फलं तस्य तु साध्यसिद्धिर्
अन्यत्र दैवादिति नास्ति हेतुः ॥ २१॥

कृतं मताक्षेण यथा न साधु
साधुप्रवृत्तेन च पाण्डवेन ।
मया च दुष्पुत्रशताकुलेन
कृतः कुरूणामयमन्तकालः ॥ २२॥

ध्रुवं प्रशाम्येत् स समीरितोऽग्निर्
ध्रुवं प्रजास्यत्युत गर्भिणी या ।
ध्रुवं दिनादौ रजनीप्रणाशस्
तथा क्षपादौ च दिनप्रणाशः ॥ २३॥

कृते च कस्मान्न परे च कुर्युर्
दत्ते च दद्युः पुरुषाः कथंस्वित् ।
प्राप्यार्थकामं च भवेदनर्थः
[1]कथं नु न स्यादितरः कथं नु ॥ २४॥

कथं न भिद्येत न च क्लियेत
न चावसीदेदिति रक्षितव्यम् ।
अवेक्षमाणश्शतधा प्रशीर्येद्
ध्रुवं न नाशोऽस्ति कृतस्य लोके ॥ २५॥

---

1. क-ख—कथञ्चनस्यादिति तत् कुतस्स्यात् ।

गतो ह्यरण्यादपि शक्रलोकं
धनञ्जयः पश्यत वीर्यमस्य ।
अस्त्राणि दिव्यानि चतुर्विधानि
ज्ञात्वा पुनर्लोकमिमं प्रपन्नः ॥ २६॥

स्वर्गं हि गत्वा सशरीर एव
को मानुषः पुनरागन्तुमिच्छेत् ।
अनेककालोपहृताननेकान्
समीक्षमाणस्स गुरुर्मुहूर्तम् ॥ २७॥

धनुर्ग्राहश्चार्जुनस्सव्यसाची
धनुश्च तद्गाण्डिवं लोकसारम् ।
अस्त्राणि दिव्यानि च तानि तस्य
जयस्य तेजो विषहेत को नु ॥ २८॥

वैशम्पायनः—
निशम्य तद्वचनं पार्थिवस्य
दुर्योधनं रहिते सौबलश्च ।
अवोचतां कर्णमुपेत्य सर्वं
स चापि हृष्टोऽभवदल्प[1]चेताः ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

॥ ३९ ॥ घोषयात्रापर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

1. क-ख-घ—तेजाः

## ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥

कर्णशकुनिभ्यां दुर्योधनं प्रति स्ववैभवप्रदर्शनेन पाण्डवानां दुःखजननाय द्वैतवनगमनचोदना ॥

वैशम्पायनः—

धृतराष्ट्रस्य तद्वाक्यं निशम्य सहसौबलः ।
दुर्योधनमिदं काले कर्णो वचनमब्रवीत् ॥ १

कर्णः—

प्रव्राज्य पाण्डवान् वीरान् स्वेन वीर्येण भारत ।
भुङ्क्ष्वेमां पृथिवीमेको दिवि शम्बरहा यथा ॥ २
तवाद्य पृथिवी राजन् अखिला सागराम्बरा ।
सपर्वतवनारामा सहस्थावरजङ्गमा ॥ ३
प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः ।
कृताः करप्रदास्सर्वे राजानस्ते नराधिप ॥ ४
या हि सा दीप्यमानेव पाण्डवान् भजते पुरा ।
साऽद्य लक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिस्सह ॥ ५
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे ।
अपश्याम श्रियं राजन् न चिरात् शोककर्शिताः ॥ ६
सा तु बुद्धिबलेनेयं राजंस्तस्य तथाविधा ।
त्वयाऽऽक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ॥ ७

[1]तथैव तव राजेन्द्र राजानः परवीरहन् ।
शासने च स्थितास्सर्वे किं कुर्म इति वादिनः ॥ ८

तवाद्य पृथिवी राजन् निखिला सागराम्बरा ।
[2]सपर्वतवना देव समग्रनगराकरा ॥ ९

नानावनोद्देशवती पत्तनैरुपशोभिता ।
नानाध्वजपताकाङ्का स्फीतराष्ट्रा महाबला ॥ १०

नन्द्यमानो द्विजै राजन् पूज्यमानश्च राजभिः ।
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिमानिव ॥ ११

[3]रुद्रैरिव यमो राजन् मरुद्भिरिव वासवः ।
कुरुभिस्संवृतो राजन् [4]भासि नक्षत्रराडिव ॥ १२

ये नाद्रियन्ते ज्ञानात् त्वां न प्रीयन्ते कदाचन ।
पश्यामस्तान् श्रिया हीनान् पाण्डवान् वनवासिनः ॥ १३

श्रूयते हि महाराज सरो द्वैतवनं प्रति ।
वसन्तः पाण्डवास्सार्धं ब्राह्मणैर्वनवासिभिः ॥ १४

स प्रियो हि महाराज श्रिया परमया युतः ।
प्रतपन् पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ १५

---

1. ख—श्लोकार्धं नास्ति 2. ख—अर्धद्वयं नास्ति
3. ख—अर्धत्रयं नास्ति
4. क—न भोक्षेत नराधिप; घ—न नभो नक्षत्रराडिव

स्थितो राज्ये च्युतान् राज्यात् श्रिया हीनान् श्रिया युतः ।
असमृद्धान् समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ १६

महाभिजनसम्पन्नं भद्रे महति च स्थितम् ।
पाण्डवास्त्वाऽभिवीक्षन्तां ययातिमिव नाहुषम् ॥ १७

यां श्रियं सुहृदश्चैव दुर्हृदश्च विशां पते ।
पश्यन्तः पुरुषे [1]दीप्ता सा समर्थ्या भवत्युत ॥ १८

समस्थो विषमस्थान् हि दुर्हृदो योऽभिवीक्षते ।
भूमिस्थांश्चैव यानस्थः किमतः परमं सुखम् ॥ १९

न पुनर्धनलाभेन राज्यलाभेन विन्दति ।
प्रीतिं नृपतिशार्दूल याममित्राय दर्शनात् ॥ २०

[2]किं नु तस्य सुखं न स्याद् आश्रमे यो धनञ्जयम् ।
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् ॥ २१

पश्य त्वं सुखितां कृष्णां सा च निर्वेद्यतां पुनः ।
दीनानां च स्वभर्तॄणां जीवतां च धनच्युतिम् ॥ २२

दाराणां ते श्रियं दृष्ट्वा दीप्तमन्युर्जनाधिप ।
न तथा हि सभामध्ये तस्या भवितुमर्हति ॥ २३

---

1. क—दीप्तान् सा समर्था  घ—दीप्तान् समर्थ्याश्च
   ख—पश्यन्ति पुरुषे दीप्तां किं ततः परमं सुखम्
2. ख—इदमर्धं नास्ति

वैमनस्यं यया दृष्ट्वा तव भार्यास्स्वलङ्कृताः ॥ २३॥

वैशम्पायनः—

एवमुक्त्वा तु राजानं कर्णश्शकुनिना सह ।

तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥१९३॥
॥ ३९ ॥ घोषयात्रापर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

## ॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥

कर्णशकुन्यादिभिर्द्वैतवनगमने घोषयात्राया उपायत्वनिर्धारणम् ॥

वैशम्पायनः—

कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।

हृष्टो भूत्वा पुनर्दीनो राधेयमिदमब्रवीत् ॥ १

दुर्योधनः—

ब्रवीषि यदिदं कर्ण सर्वं मे मनसि स्थितम् ।

न त्वभ्यनुज्ञां लप्स्येऽहं गमने यत्र पाण्डवाः ॥ २

परिदेवति तान् वीरान् धृतराष्ट्रोऽम्बिकासुतः ।

मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान् ॥ ३

अथवाऽप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।

एतामप्यायातिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ४

न हि द्वैतवने किञ्चिद् विद्यतेऽन्यत् प्रयोजनम् ।
[1]उन्मादनं मदं तेषां वनस्थानां मम द्विषाम् ॥ ५

जानाति हि यथा क्षत्ता द्यूतकाल उपस्थिते ।
अब्रवीत् त्वां च मां चैव सौबलं च वचस्तदा ॥ ६

तानि सर्वाणि वाक्यानि यच्चान्यत् परिदेवितम् ।
विचिन्त्य निश्चयं राजन् गमनायेतराय वा ॥ ७

ममापि सुमहान् हर्षो यदहं भीमफल्गुनौ ।
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ८

न तथा प्राप्नुयां भूतिम् अवाप्य वसुधामपि ॥ ८॥
[2]यदि मां धर्मराजश्च भीमसेनश्च पाण्डवः ।
युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत् ॥ ९॥
उपायान् नानुपश्यामि येन गच्छेम तद्वनम् ॥ १०
यथा चाभ्यनुजानीयाद् व्रजन्तं मां महीपतिः ।
स सौबलेन सर्वैश्च तथा दुश्शासनेन च ॥ ११
उपायं पश्य निपुणं येन गच्छेम तद्वनम् ॥ ११॥
[3]अहमप्यत्र निश्चित्य गमनायेतराय च ।

---

1. क-उन्मदानमिदं	ख—उन्मादनाद्दते + नामपि द्विषाम्
2. ख—दृष्ट्वा यथा पाण्डुसुतान् वल्कलाजिनवाससः ।
किं नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् ॥
द्रौपदीं कर्ण पश्येयं काषायवसनां वने ।	[अधिकः पाठः]
3. ख—इदमर्धं नास्ति

काल्यमेव गमिष्यामि समीपं पार्थिवस्य ह ॥ १२॥
मयि तत्रोपविष्टे च भीष्मे च कुरुसत्तमे ।
उपायो यो भवेद्दृष्टस् तं ब्रूयास्सहसौबलः ॥ १३॥
ततो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति ।
व्यवसायं करिष्येऽहम् अनुनीय पितामहम् ॥ १४॥

वैशम्पायनः—

तथेत्युक्त्वा तु ते सर्वे जग्मुरावसथान् प्रति ।
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात् ॥ १५॥
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत् ॥ १६

कर्णः—

उपायः परिदृष्टोऽयं तं निबोध जनेश्वर ॥ १६॥
[1]घोषा द्वैतवनं सर्वे त्वत्प्रतीक्षा महाभुज ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ १७॥
[2]उचितं हि सदा गन्तुं घोषयात्रां विशां पते ।
एवं च [3]स्थापितो राजंस् त्वमनुज्ञातुमर्हति ॥ १८॥

वैशम्पायनः—

तथा कथयमानौ तु घोषयात्राविनिश्चयम् ।
गान्धारराजश्शकुनिर् इत्युवाच हसन्निव ॥ १९॥

शकुनिः—

उपायोऽयं मया दृष्टो गमनाय निरामयः ।
अनुज्ञास्यति वै राजा चोदयिष्यति चाप्युत ॥ २०॥

---

1. ख—इदमर्धं नास्ति 2. क—नास्तीदमर्धम्
3. क—ज्ञापितो राजास; ख—चेत् त्वां पिता; ग—स्थापिता राजन्

घोषा द्वैतवनं सर्वे त्वत्प्रतीक्षा जनाधिप ।
घोषयात्रापदेशेन गमिष्यामस्सरः प्रति ॥ २१॥

वैशम्पायनः—
ततः प्रहसितास्सर्वे तेऽन्योन्यस्य तलं ददुः ।
तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥
॥ ३९ ॥ घोषयात्रापर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २२॥ श्लोकाः]

---

## ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥

दुर्योधनेन घोषयात्राव्याजेनानुजादिभिस्सह द्वैतवनं प्रति गमनम् ॥

---

वैशम्पायनः—
धृतराष्ट्रं ततस्सर्वे ददृशुर्जनमेजय ।
दृष्ट्वा सुखमथो राज्ञः पृष्ट्वा राज्ञा च भारत ॥ १

ततस्तैर्विहितः पूर्वं [1]सङ्गवो नाम वल्लवः ।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ २

अनन्तरं च राधेयश् शकुनिश्च महाबलः ।
आहतुः पार्थिवश्रेष्ठ धृतराष्ट्रं जनाधिपम् ॥ ३

---

1. ब—समगो

शकुनि-कर्णौ—

रमणीयेषु देशेषु घोषास्सम्प्रति कौरव ।
स्मरणे समयः प्राप्तो वत्सानामपि चाङ्कितुम् ॥ ४
मृगया ऽप्योचिता राजन्नस्मिन् काले सुतस्य ते ।
दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि ॥ ५

धृतराष्ट्रः—

मृगया शोभना तात गवां च समवेक्षणम् ।
संविस्रम्भ्य न गन्तव्यः पाण्डवानामिति स्मह ॥ ६
ते तु तत्र नरव्याघ्रास् समीप इति नश्श्रुतम् ।
ततो न ह्यनुजानामि गमनं तत्र यत् स्वयम् ॥ ७
छद्मना निर्जितास्ते तु कर्शिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ८
धर्मराजस्तु सङ्क्रुद्धेद् भीमसेनस्त्वमर्षणः ।
यज्ञसेनस्य दुहिता तेजसा सा तु केवलम् ॥ ९
यूयं च पुनरर्देयुर् दर्पमोहसमन्विताः ॥ ९॥
[1]अथवा सायुधा वीरा मन्युनाऽभिपरिप्लुताः ।
सहिता बद्धनिस्त्रिंशा दहेयुश्शस्त्रतेजसा ॥ १०॥
अथ यूयं बहुत्वात् तान्नालभध्वं कथञ्चन ।
अन्यायं परमं तत् स्यात् क्षमं शक्यं च मे मतम् ॥ ११॥

---

1. ख—ततो विनिर्दहेयुस्ते तपसा हि समन्विता । [ अधिकः पाठः ]

उषितो हि महाबाहुर् इन्द्रलोके धनञ्जयः ।
दिव्यान्यस्त्राणि सम्प्राप्य ततः प्रत्यागतो वनम् ॥ १२॥

अकृतास्त्रेण भीतास्स्म वयं बीभत्सुना पुरा ।
किं पुनस्स कृतास्त्रोऽद्य न हन्याद्वो महारथः ॥ १३॥

अथवा मद्वचश्श्रुत्वा तत्र यत्ता भविष्यथ ॥ १४

[1]अथवा सैनिकाः केचिद् अपकुर्युर्युधिष्ठिरे ।
तद्बुद्धिकृतं कर्म दोषमुत्पादयेत् तव ॥ १५

तस्मादन्यो नरो यातु स्मरणापातकारणम् ।
न स्वयं तत्र गमनं रोचते तव भारत ॥ १६

शकुनिः—

धर्मज्ञः पाण्डवश्श्रेष्ठः प्रतिज्ञातश्च संसदि ।
तेन द्वादशवर्षाणि वस्तव्यानीति भारत ॥ १७

अनुवृत्ताश्च ते सर्वे पाण्डवा धर्मचारिणः ।
युधिष्ठिरस्तु कौन्तेयो न नः कोपं करिष्यति ॥ १८

मृगयां चैव नो गन्तुम् इच्छा संवर्धते भृशम् ।
स्मारणाय चिकीर्षामो न तु पाण्डवदर्शनम् ॥ १९

न चानार्यसमाचारः कश्चित् तत्र भविष्यति ।
न च [2]तत्र समाचारो यत्र तेषां प्रतिश्रयः ॥ २०

---

1. ख—उद्विग्ना वा सुविस्रब्धा दुःखं तत्र गमिष्यथ । [ अधिकः पाठः ]
2. अ—तत्रासमाचारो; ख—तत्र गमिष्यामो

वैशम्पायनः—

एवमुक्तश्शकुनिना धृतराष्ट्रो जनाधिप ।

दुर्योधनं सहामात्यम् अनुजज्ञे न कामतः ॥ २१

अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा ।

निर्ययौ भरतश्रेष्ठ सौबलेन समावृतः ॥ २२

दुश्शासनेन च तथा सौबलेन च देविना ।

सर्वैश्च भ्रातृभिस्सार्धं स्त्रीभिश्चैव सहस्रशः ॥ २३

[1]पौराश्चानुययुस्सर्वे सहदारा वनं च तत् ॥ २३॥

अष्टौ रथसहस्राणि त्रीणि नागायुतानि च ।

पत्तीश्शतसहस्राणि हयानां तावतीश्शतम् ॥ २४॥

शकटापणवेशाश्च वणिजो वन्दिनस्तथा ।

नराश्च मृगयाशीलाश् शतशोऽथ सहस्रशः ॥ २५॥

ततः प्रयाते नृपतौ सुमहानभवत् स्वनः ।

प्रावृषीव महावायोर् उत्थितस्य विशां पते ॥ २६॥

गव्यूतिमात्रे न्यवसद् राजा दुर्योधनस्तदा ।

प्रयातो वाहनैस्सर्वैस् ततो द्वैतवनं सरः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि, पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

॥ ३९ ॥ घोषयात्रापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. ख—तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः । [अधिकः पाठः]

## ॥ षण्णवत्यधिकशततमोऽध्यायः ॥

द्वैतवने सरोऽभितः क्रीडास्थाननिर्माणायागतानां दुर्योधनभृत्यानां पूर्वमेव तत्रागतैर्गन्धर्वैः प्रतिवारणम् ॥ १ ॥ भृत्यैर्गन्धर्वकृतनिवारणं निवेदितेन दुर्योधनेन तेषामुत्सारणाय सेनाप्रेषणम् ॥ २ ॥ गन्धर्वैः परुषभाषणैर्भीषितानां भटानां दुर्योधनं प्रति तन्निवेदनम् ॥ ३ ॥

वैशम्पायनः—

अथ दुर्योधनो राजा तत्र तत्र वने वसन् ।
जगाम घोषानभितस् तत्र चक्रे निवेशनम् ॥ १

देशे हि रमणीये च सोदके समहीतले ।
तत्र सर्वगुणोपेते चक्रुरावसथान् नराः ॥ २

[1]वासं तथैव कर्णस्य भ्रातृणां चैव सर्वशः ॥ २॥

पश्यन्तस्ते तदा गावश् शतशोऽथ सहस्रशः ।
अङ्कैर्लक्षैश्च तास्सर्वा लक्षयामास पार्थिवः ॥ ३॥

अङ्कयामास वत्सांश्च जज्ञे चोपास्यतांस्त्वपि ।
[2]बालवत्साश्च या गावो गणयामास ता अपि ॥ ४॥

अथ संस्मारणं कृत्वा स सत्यां याति भानुवत् ।
वृतो गोपालकैः प्रीतो व्याहरत् कुरुनन्दनः ॥ ५॥

---

1. ख—तथैव तत्समीपेऽन्यान् पृथगावसथान् बहून् ।　[अधिकः पाठः]
2. ख—इदमर्धं नास्ति

स च पौरजनस्सर्वस् सैनिकाश्च सहस्रशः ।
यथोपजोषं चिक्रीडुर् वने तस्मिन् यथाऽमराः ॥ ६॥
ततोऽध्वगमनाच्छ्रान्तं कुशला नृत्यवादिते ।
धार्तराष्ट्रमुपातिष्ठन् कन्याश्चैव स्वलङ्कृताः ॥ ७॥
स स्त्रीगणवृतो राजा वसूंस्तासां ददौ तदा ।
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥ ८॥
ततस्ते सहितास्सर्वे तरक्षून् महिषान् मृगान् ।
गवयर्क्षवराहांश्च समन्तात् पर्यकालयन् ॥ ९॥
[1]स ताञ् छरैर्विनिर्भिन्दन् गजान् बद्ध्वा महावने ।
रमणीयेषु देशेषु द्रावयन् शतशो मृगान् ॥ १०॥
गोरसानुपयुञ्जान उपभोगांश्च भारत ।
पश्यंश्च रमणीयानि पुष्पितानि वनानि च ॥ ११॥
मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च ।
अगच्छदानुपूर्व्येण पुण्यं द्वैतवनं सरः ॥ १२॥
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् ॥ १३
यदृच्छया च तद्वृद्धो धर्मराजो युधिष्ठिरः ।
ईजे राजर्षियज्ञेन स्वकाम्येन विशां पते ॥ १४
दिव्येन विधिना राजा वन्येन कुरुसत्तमः ।

---

1. ख—इदमर्धं नास्ति

विद्वद्भिस्सहितो धीमान् ब्राह्मणैर्वनवासिभिः ॥ १५
कृत्वा निवेशमभितस् सरसस्तस्य कौरव ।
द्रौपद्या सहितो धीमान् धर्मपत्न्या महामनाः ॥ १६
ततो दुर्योधनः प्रेष्यान् आदिदेश सहानुजः ।
आक्रीडावसथान् क्षिप्रं क्रियन्तामिति भारत ॥ १७
ते तथेत्येव कौरव्यम् उक्त्वा वचनकारिणः ।
चिकीर्षन्तस्तदाक्रीडाञ् जग्मुर्द्वैतवनं सरः ॥ १८
[1]शासनाद् धार्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः ।
प्रविशन्तं वनं राजन् गन्धर्वास्समवारयन् ॥ १९
तत्र गन्धर्वराजो वै पूर्वमेव विशां पते ।
कुबेरभवनाद्राजन्नाजगाम जनावृतः ॥ २०
गणैरप्सरसां चैव त्रिदशानां तदाऽऽत्मजैः ।
विहारशीलैः क्रीडार्थं तेन तत् संवृतं सरः ॥ २१
तेन तत् संवृतं दृष्ट्वा ते राजपरिचारकाः ।
प्रतिजग्मुस्तथा राजन् यत्र दुर्योधनो नृपः ॥ २२
स तु तेषां वचश्श्रुत्वा सामर्षो वाहिनीं तदा ।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ २३
[2]तस्य तद्वचनं श्रुत्वा राज्ञस्सेनाग्रयायिनः ।

1. घ—नास्तीदमर्धम् 2. ख—इदमर्धं नास्ति

सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ २४

सैनिकाः—

राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।
विक्रीडिषुरिहायाति तदर्थमपसर्पत ॥ २५

वैशम्पायनः—

एवमुक्तास्तु गन्धर्वाः प्रहसन्तो विशां पते ।
प्रत्यब्रुवंस्तान् पुरुषान् इदं हि परुषं वचः ॥ २६

गन्धर्वाः—

[1]न चेतयति वो राजा मन्दबुद्धिस्सुयोधनः ।
सोऽस्मानाज्ञापयत्येष वश्यानिव दिवौकसः ॥ २७
यूयं मुमूर्षवश्चैव मन्दप्रज्ञानसंयुताः ।
ये तस्य वचनादेवम् अस्मान् ब्रूत विचेतसः ॥ २८
गच्छध्वं त्वरितास्सर्वे यत्र राजा स कौरवः ।
[2]यथा न गच्छति द्वैतं धर्मराजनिवेशनम् ॥ २९

वैशम्पायनः—

एवमुक्तास्तु ते सर्वे राज्ञस्सेनाग्रयायिनः ।
सम्प्राद्रवन् यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥
॥ ३९ ॥ घोषयात्रापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

1. क-ख—नासीदमर्षम्
2. क—शयामा गच्छत; ख-घ—यथा नागच्छत द्वैतं

## ।। सप्तनवत्यधिकशततमोऽध्यायः ।।

गन्धर्वैस्सह कौरवाणामायोधनम् ॥ १ ॥ चित्रसेनादिभिर्विरथीकृतेन कर्णेन रणाङ्गणात् पलायनम् ॥ २ ॥

वैशम्पायनः—

ततस्ते सहितास्सर्वे दुर्योधनमुपागमन् ।
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति ॥ १

गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान् ।
अमर्षपूर्णस्सैन्यानि प्रत्यभाषत भारत ॥ २

दुर्योधनः—

शासतैनानधर्मज्ञान् मम विप्रियकारिणः ।
यदि प्रक्रीडते सर्वैर् देवैस्सह शचीपतिः ॥ ३

वैशम्पायनः—

[1]दुर्योधनवचश्श्रुत्वा धार्तराष्ट्रा महाबलाः ।
सर्व एवाभिसन्नद्धा योधाश्चापि सहस्रशः ॥ ४

ततः प्रमथ्य गन्धर्वान् तद्वनं विविशुर्बलात् ।
सिंहनादेन महता पूरयन्तो दिशो दश ॥ ५

ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः ।
साम्नैव तत्र विक्रान्ता मा साहसमिति प्रभो ॥ ६

ते वार्यमाणा गन्धर्वैस् साम्नैव वसुधाधिप ।

1. ख—वयमत्र यथा प्रीताः क्रीडिष्यामो निरङ्कुशम् ; [अधिकः पाठः]

ताननादृत्य गन्धर्वास् तद्वनं विविशुर्बलात् ॥ ७
यदा वाचा न तिष्ठन्ति वार्यमाणास्सराजकाः ।
ततस्ते खेचरास्सर्वे चित्रसेने न्यवेदयन् ॥ ८
गन्धर्वराजस्तान् सर्वान् अब्रवीत् कौरवं प्रति ।
अनार्यान्[1] बाधतेत्येवं चित्रसेनोऽत्यमर्षणः ॥ ९
अनुज्ञाताश्च गन्धर्वाश् चित्रसेनेन भारत ।
प्रगृहीतायुधास्सर्वे धार्तराष्ट्रान् समाद्रवन् ॥ १०
तान् दृष्ट्वाऽऽपततश्शीघ्रं गन्धर्वानुद्यतायुधान् ।
सर्वे ते प्राद्रवन् सङ्ख्ये धार्तराष्ट्रस्य पश्यतः ॥ ११
तान् दृष्ट्वा द्रवतस्सर्वान् धार्तराष्ट्रान् पराङ्मुखान् ।
वैकर्तनस्तदा वीरो नासीत् तत्र पराङ्मुखः ॥ १२
आपतन्तीं तु तां प्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ १३
क्षुरप्रैर्विविधैर्भल्लैर् वत्सदन्तैस्तथाऽयसैः ।
गन्धर्वाञ् शतशोऽभ्यघ्नँल्लघु तान् सूतनन्दनः ॥ १४
पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः ।
क्षणेन व्यधमत् सर्वां चित्रसेनस्य वाहिनीम् ॥ १५
ते वध्यमाना गन्धर्वास् सूतपुत्रेण धीमता ।

---

1. ख-ध—न् शासतेत्येवं

भूय एवाभ्यवर्तन्त शतशोऽथ सहस्रशः ॥ १६
गन्धर्वभूता पृथिवी क्षणेन समपद्यत ।
आपतद्भिर्महावेगैश् चित्रसेनस्य सैनिकैः ॥ १७
अथ दुर्योधनो राजा शकुनिश्च महाबलः ।
दुश्शासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ॥ १८
न्यघ्नंस्तत् तदा सैन्यं रथैर्गरुडनिस्वनैः ॥ १८॥
सैन्य[1]मायोधितं दृष्ट्वा कर्णो राजन्नहृष्यत ।
महता रथघोषेण योधयामास चाच्युतम् ॥ १९॥
वैकर्तनं परीप्सन्तो गन्धर्वाः प्रत्यवारयन् ॥ २०
ततस्संन्यपतन् सर्वे गन्धर्वाः कौरवं प्रति ।
तदा स्म तुमुलं युद्धम् अभवद्रोमहर्षणम् ॥ २१
ततस्ते बहवोऽभूवन् गन्धर्वाश्शरपीडिताः ।
उच्चुक्रुशुश्च कौरव्या गन्धर्वान् प्रेक्ष्य पीडितान् ॥ २२
गन्धर्वांस्त्रासितान् दृष्ट्वा चित्रसेनोऽत्यमर्षणः ।
उत्पपातासनात् क्रुद्धो वधे तेषां समाहितः ॥ २३
ततो मायास्समाश्रित्य युयुधे चित्रमार्गवित् ।
गगनं छादयामास न ववौ तत्र मारुतः ॥ २४
हस्त्यारोहा हताः पेतुर् हस्तिभिस्सह भारत ।

1. क—मायोजितं ; घ—मायोधनं + मृष्यत

हयारोहाश्च सहया रथैश्च रथिनस्तदा ॥ २५

पत्तयश्च तथा पेतुर् विशस्ताश्शरवृष्टिभिः ।
तथा मुह्यन्ति कौरव्याश् चित्रसेनस्य मायया ॥ २६

एकैकं हि यथा योधो धार्तराष्ट्रस्य भारत ।
पर्यवार्यतं गन्धर्वैर् दशभिर्दशभिर्युधि ॥ २७

ततस्सम्पीड्यमानास्ते बलेन महता तदा । २७॥
[1]भज्यमानेषु सर्वेषु धार्तराष्ट्रेषु सर्वशः ।
कर्णो वैकर्तनो राजंस् तस्थौ गिरिरिवाचलः ॥ २८॥

दुर्योधनश्च तेजस्वी शकुनिश्चापि सौबलः ।
गन्धर्वान् योधयामासुस् समरे शरविक्षताः ॥ २९॥

सर्वे एव तु गन्धर्वाश् शतशोऽथ सहस्रशः ।
जिघांसमानास्संरब्धाः कर्णमभ्यद्रवन् रणे ॥ ३०॥

असिभिः पट्टसैः खड्गैर् गदाभिश्च महारथाः ।
सूतपुत्रं जिघांसन्तस् समन्तात् पर्यवारयन् ॥ ३१॥

अन्येऽस्य युगमच्छिन्दन् युगमन्ये न्यपातयन् ।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् ॥ ३२॥

अन्ये छत्रं वरूथं च बभञ्जुश्च तथा परे ।
अन्ये सञ्चूर्णयामासुश् चक्रे अक्षे तथा परे ॥ ३३॥

---

1. स—प्राद्रवन्त रणे भीता यत्र राजा युधिष्ठिरः । [अधिकः पाठः]

गन्धर्वा बहुसाहस्राः खण्डशोऽभ्यहनन् रथम् ।
प्रगृहीतायुधा वीराश् चित्रसेनपुरोगमाः ॥ ३४॥
ततो रथादवप्लुत्य सूतपुत्रोऽपि भारत ।
अथावलम्बितधनुर् धावमानो महाबलः ॥ ३५॥
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
॥ ३७ ॥ घोषयात्रापर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

---

## ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥

---

चित्ररथेन रणे पराजितस्य दुर्योधनस्य बन्धनपूर्वकं स्वरथारोपणम् ॥ १ ॥ इतरैर्गन्धर्वैर्दुर्योधनभ्रातॄणां तद्दाराणां च बन्धनम् ॥ २ ॥ दुर्योधनामात्यादिभिर्युधिष्ठिराय तन्निवेदने भीमेन तदनुमोदनम् ॥ ३ ॥

---

वैशम्पायनः—

गन्धर्वैस्तु महाराज कर्णे भग्ने महारथे ।
सम्प्राद्रवन्चमूस्सर्वा धार्तराष्ट्रस्य पश्यतः ॥ १
तान् दृष्ट्वा द्रवतस्सर्वान् धार्तराष्ट्रान् पराङ्मुखान् ।
[1]दुर्योधनो महाराजो नासीत् तत्र पराङ्मुखः ॥ २

1. अ-च—नासीदमर्षम्

तामापतन्तीं सम्प्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण सोऽभ्यवर्षदमर्षणः ॥ ३
अचिन्त्य शरवर्षं तं गन्धर्वास्तस्य तं रथम् ।
दुर्योधनं जिघांसन्तस् समन्तात् पर्यवारयन् ॥ ४
युगमीषां वरूथं च तथैव ध्वजसारथिम् ।
[1]अश्वांस्त्रिवेणुमक्षं च शतशो ह्यहनन् रथम् ॥ ५
दुर्योधनं चित्रसेनो विरथं पतितं भुवि ।
अभिद्रुत्य महाबाहुः केशपक्षे तथाऽग्रहीत् ॥ ६
तस्य बद्ध्वा महाराज बाहू रज्ज्वा महारथः ।
आरोप्य स महाबाहुश् चित्रसेनो ननाद ह ॥ ७
तस्मिन् गृहीते राजेन्द्र स्थितं दुश्शासनं रथे ।
प्रत्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ॥ ८
[2]विविंशतिं चित्रसेनम् आदायान्ये प्रदुद्रुवुः ।
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ९
सेनास्तु धार्तराष्ट्रस्य गन्धर्वैस्समभिद्रुताः ।
पूर्वं प्रभग्नैस्सहिताः पाण्डवानभ्ययुस्तदा ॥ १०
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।

1. क—पूर्वं त्रिवेणुमक्षं च शतशोऽभ्यहनद्रथम् ।
ख—नास्ति + ह्यहनद्रथम् ।
2. क—अर्धचतुष्टयं नास्ति

शरणं पाण्डवं जग्मुर् ह्रियमाणाः परन्तप ॥ ११

दुर्योधनामात्याः—

प्रियदर्शो महाबाहुर् धार्तराष्ट्रो महाबलः ।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ १२
दुश्शासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा ।
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः ॥ १३

वैशम्पायनः—

इति दुर्योधनामात्याः क्रोशन्तो राजभिर्विना ।
आर्ता दीनस्वरास्सर्वे युधिष्ठिरमुपागमन् ॥ १४
तांस्तथा व्यथितान् दीनान् भिक्षमाणान् युधिष्ठिरम् ।
वृद्धान् दुर्योधनामात्यान् भीमसेनोऽभ्यभाषत ॥ १५

भीमसेनः—

अन्यथा वर्तमानानाम् अर्थो भूतोऽयमन्यथा ।
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ॥ १६
दुर्मन्त्रितं तथा राजन्निदं दुर्द्यूतदेविनः ।
दीनान् दुर्योधनस्यास्मान् द्रष्टुकामस्य दुर्मतेः ॥ १७
द्वेष्टारमन्ये क्लीबस्य घातयन्तीति शाश्वतम् ।
कृतं तदेव प्रत्यक्षं गन्धर्वैरतिमानुषम् ॥ १८
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः ।
येनास्माकं हृतो भार आसीनानां सुखावहः ॥ १९
शीतवातातपसहांस् तपसा चैव कर्शितान् ।
समस्थो विषमस्थांश्च द्रष्टुमिच्छति दुर्मतिः ॥ २०

[1]अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्तन्ति ते पश्यन्ति पराभवम् ॥ २१
अधर्मो हि कृतस्तेन येनैतदुपलक्षितम् ।
आनृशंस्यात् तु कौन्तेयास् तत् प्रत्यक्षं ब्रवीमि वः ॥ २२

वैशम्पायनः—
एवं ब्रुवाणं कौन्तेयं भीमसेनं परस्परम् ।
न कालः परुषस्यायम् इति राजाऽभ्यभाषत ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ ३९ ॥ घोषयात्रापर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये २३ श्लोकाः]

## ॥ एकोनद्विशततमोऽध्यायः ॥

भीमेन युधिष्ठिरं प्रति दुर्योधनकृतापनयानुस्मारणपूर्वकं तद्विमोचनस्यानौचित्यप्रतिपादने युधिष्ठिरेण पुनस्तं प्रति तच्चोदनायामर्जुनेन तत्प्रतिज्ञानम् ॥

युधिष्ठिरः—
अस्मानभिगतांस्तात भयार्तान् छरणैषिणः ।
कौरवान् विषमं प्राप्तान् कथं ब्रूयास्त्वमीदृशम् ॥ १

1. क—अर्धत्रयं नास्ति

[1]भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ।
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति ॥ २

यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति ते सर्वे बाह्येनाभिप्रमर्शनम् ॥ ३

जन्मतो ह्येष दुर्बुद्धिर् अस्मानिह वनोषितान् ।
स एवं परिभूयास्मान् अकार्षीदिदमप्रियम् ॥ ४

दुर्योधनस्य ग्रहणाद् गन्धर्वेण बलाद्रणे ।
स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ॥ ५

शरणं च प्रपन्नानां त्राणार्थं च कुलस्य च ।
उत्तिष्ठत नरव्याघ्रास् सज्जीभवत मा चिरम् ॥ ६

अर्जुनश्च यमौ चैव त्वं च भीमापराजितः ।
मोक्षयध्वं धार्तराष्ट्रं ह्रियमाणं सुयोधनम् ॥ ७

एते रथा नरव्याघ्रास् सर्वशस्त्रसमन्विताः ।
इन्द्रसेनादिभिस्सूतैस् सायुधाः कनकध्वजाः ॥ ८

एतानास्थाय वै तात गन्धर्वान् योद्धुमाहवे ।
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥ ९

य एव कश्चिद्राजन्यश् शरणार्थमिहागतम् ।
परं शक्त्याऽभिरक्षेत किं पुनस्त्वं वृकोदर ॥ १०

वैशम्पायनः—

एवमुक्तस्तु कौन्तेयः पुनर्वाक्यमभाषत ।
कोपसंरक्तनयनः पूर्ववैरमनुस्मरन् ॥ ११

---

1. ञ-क-ब—श्लोकद्वयमिदं नास्ति

भीमः—

पुरा जतुगृहेऽनेन दग्धुमस्मान् युधिष्ठिर ।
दुर्बुद्धिर्हि तदा वीर भृशं दैवेन रक्षिताः[1] ॥ १२
कालकूटविषं तीक्ष्णं भोजने मम भारत ।
उप्त्वा गङ्गां लतापाशैर् बद्ध्वा च प्राक्षिपत् प्रभो ॥ १३
द्यूतकाले हि कौन्तेय वृजिनानि कृतानि वै ।
द्रौपद्याश्च परामर्शः केशग्रहणमेव च ॥ १४
वस्त्रापहरणं चैव सभामध्ये कृतानि वै ॥ १४॥
पुरा कृतानां पापानां फलं भुङ्क्ते सुयोधनः ॥ १५
अस्माभिरेव कर्तव्यो धार्तराष्ट्रस्य निग्रहः ।
अन्येन तु कृतं तत्र मैत्र्यमस्माभिरिच्छता ॥ १६
उपकारी तु गन्धर्वो मा राजन् विमना भव ॥ १६॥

वैशम्पायनः—

एतस्मिन्नन्तरे राजंश् चित्रसेनेन वै हृतः ।
विललाप सुदुःखार्तो ह्रियमाणस्सुयोधनः ॥ १७॥

दुर्योधनः—

पाण्डुपुत्र महाबाहो पौरवाणां यशस्कर ।
सर्वधर्मभृतां श्रेष्ठ गन्धर्वेण हृतं बलात् ॥ १८॥
रक्षस्व पुरुषव्याघ्र युधिष्ठिर महायशः ॥ १९
भ्रातरं वे महाबाहो बद्ध्वा नयति मामयम् ।
दुश्शासनं दुर्विषहं दुर्मुखं दुर्जयं तथा ॥ २०

1. अ-क-घ—नास्त्ययं श्लोकः

बद्ध्वा हरन्ति गन्धर्वा अस्मद्दारांश्च सर्वशः ।
अनुधावत मां क्षिप्रं रक्षध्वं पुरुषोत्तमाः ॥ २१
[1]वृकोदर महाबाहो धनञ्जय महायशः ॥ २१॥
यमौ मामनुधावेतां रक्षार्थं मम सायुधौ ।
कुरुवंशस्य तु महद् अयशः प्राप्तमीदृशम् ॥ २२॥
व्यपोहयध्वं गन्धर्वान् जित्वा वीर्येण पाण्डवाः ॥ २३

वैशम्पायनः—

एवं विलपमानस्य कौरवस्यार्तया गिरा ।
श्रुत्वा विलापं सम्भ्रान्तो घृणयाऽभिपरिप्लुतः ॥ २४
युधिष्ठिरः पुनर्वाक्यं भीमसेनमथाब्रवीत् । २४॥

युधिष्ठिरः—

सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥ २५
य एव कश्चिद्राजन्यश् शरणार्थमिहागतः ।
परं शक्त्याऽभिरक्षेत किं पुनस्त्वं वृकोदर ॥ २६
कद्योऽनुनयेत् प्राणान् अभिधावेति चोदितः ।
प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि द्रुतम् ॥ २७
वरप्रदानं राज्यं च पुत्रजन्म च पाण्डवाः ।
शत्रोश्च मोक्षणं क्लेशात् त्रीणि चैकं च तत्समम् ॥ २८
न ह्यस्ति [2]विक्रमस्तस्य यदापन्नस्सुयोधनः ।

---

1. अ-क-ख—नासीदमर्षम्
2. क—विक्रमे तस्माद्; ख-घ—नह्यस्त्यधिकमेतस्माद्

त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गते ॥ २९

स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर ।

विततोऽयं क्रतुर्वीर न हि मेऽत्र विचारणा ॥ ३०

साम्नैव तु यथा वीर मोक्षयेथास्सुयोधनम् ।

[1]तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन ॥ ३१

न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ ।

पराक्रमेण मृदुना मोक्षयेथास्सुयोधनम् ॥ ३२

अथासौ मृदुयत्नेन न मुञ्चेद्भीम कौरवान् ।

सर्वोपायेन मोच्यास्ते निगृह्य परिपन्थिनः ॥ ३३

एतावत् तु मया शक्यं सन्देष्टुं वै वृकोदर । ३३॥

वैताने कर्मणि तते वर्तमाने च भारत ॥

[2]वरप्रदानं सुमहद् याचकस्य प्रकीर्तितम् ॥ ३४॥

वैशम्पायनः—

अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनञ्जयः ।

प्रतिजज्ञे गुरोर्वाक्यात् कौरवाणां विमोक्षणम् ॥ ३५॥

अर्जुनः—

यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान् ।

अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ ३६॥

---

1. क—अर्धश्लोकं नास्ति

2. अ-क-घ—नास्तीदमर्धम्

अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः ।
कौरवाणां तदा राजन् पुनः प्रत्यागतं मनः ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥
॥ ३९ ॥ घोषयात्रापर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३७॥ श्लोकाः ]

---

## ॥ द्विशततमोऽध्यायः ॥

भीमादीनां चतुर्णां चित्रसेनादिभिर्गन्धर्वैर्युद्धम् ॥ १ ॥ अर्जुनेन मायाशक्त्याऽन्तर्धानेन युध्यते चित्रसेनायास्त्रप्रयोगे सति तेनार्जुनं प्रति स्वस्य सखित्वकथनम् ॥ २ ॥ ततोऽर्जुनेनास्त्रोपसंहारे भीमादीनां युद्धोपरमपूर्वकं तेन सह सल्लापः ॥ ३ ॥

---

वैशम्पायनः—

युधिष्ठिरवचश्श्रुत्वा भीमसेनपुरोगमाः ।
प्रहृष्टवदनास्सर्वे समुत्तस्थुर्नरर्षभाः ॥ १

[1]जाम्बूनदविचित्राणि कवचानि महारथाः ।
[2]अभेद्यानि ततस्सर्वे समं नह्यन्त भारत ॥ २

ते दंशिता रथैस्सर्वे ध्वजिनस्सशरासनाः ।

1. क—अर्धद्वयं नास्ति
2. अ—अभेद्यांस्तु ततस्सर्वे संयुक्ताश्चवनैर्हयैः । इत्यसम्बद्धं दृश्यते

पाण्डवास्समदृश्यन्त ज्वलिता इव पावकाः ॥ ३
तान् रथान् साधुसम्पन्नान् संयुक्तान् जवनैर्हयैः ।
आस्थाय नरशार्दूलाश् शीघ्रमेव ययुस्तदा ॥ ४
ततः कौरवसैन्यानां प्रादुरासन् महास्वनाः ।
प्रयातान् सहितान् दृष्ट्वा पाण्डुपुत्रान् महारथान् ॥ ५
जितारयश्च खचरास् त्वरिताश्च महारथाः ।
क्षणेनैव वने तस्मिन् समाजग्मुरभीतवत् ॥ ६
न्यवर्तन्त ततस्सर्वे गन्धर्वा जितकाशिनः ।
दृष्ट्वा रथगतान् वीरान् पाण्डवांश्च ततो रणे ॥ ७
तांस्तु विभ्राजितान् दृष्ट्वा लोकपालानिवोद्यतान् ।
व्यूढानीकाः प्रतिष्ठन्त गन्धमादनवासिनः ॥ ८
राज्ञस्तु वचनं श्रुत्वा धर्मपुत्रस्य धीमतः ।
क्रमेण मृदुना युक्तास् समावर्तन्त भारत ॥ ९
न तु गन्धर्वराजस्य सैनिका मन्दतेजसः ।
शक्यन्ते मृदुना [1]योद्धुं प्रवादमतुवंस्तदा ॥ १०
ततस्तान् युधि दुर्धर्षान् सव्यसाची परन्तपः ।
सान्त्वपूर्वमिदं वाक्यम् उवाच खचरान् वने ॥ ११

अर्जुनः—

नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम् ।
परदाराभिमर्शश्च मानुषैश्च समागमः ॥ १२

1. ख—श्रेयः प्रतिपादयितुं तदा

उत्सृजध्वं महावीर्यान् धृतराष्ट्रसुतानिमान् ।
दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् ॥ १३

वैशम्पायनः—

एवमुक्तास्तु गन्धर्वाः पाण्डवेन यशस्विना ।
उत्स्मयन्तस्तदा पार्थम् इदं वचनमब्रुवन् ॥ १४

गन्धर्वाः—

एकस्यैव वयं तात कुर्याम वचनं भुवि ।
यस्य शासनमाज्ञाय चराम विगतज्वराः ॥ १५
तेनैकेन यथाऽऽदिष्टं तथा कुर्मश्च भारत ।
न शास्ता विद्यतेऽस्माकम् अन्यस्तस्मात् सुरेश्वरात् ॥ १६

वैशम्पायनः—

एवमुक्तस्तु गन्धर्वैः कुन्तीपुत्रो धनञ्जयः ।
गन्धर्वान् पुनरेवेदं वचनं प्रत्यभाषत ॥ १७

अर्जुनः—

यदि साम्ना न मोक्षध्वं गन्धर्वा धृतराष्ट्रजम् ।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ १८

वैशम्पायनः—

एवमुक्त्वा ततः पार्थस् सव्यसाची धनञ्जयः ।
ससर्ज निशितान् बाणान् खचरान् खेचरान् प्रति ॥ १९
तथैव शरवर्षेण गन्धर्वाश्च मदोत्कटाः ।

पाण्डवानभ्यवर्तन्त पाण्डवाश्च दिवौकसः ॥ २०
ततस्समभवद्युद्धं गन्धर्वाणां तरस्विनाम् ।
तत्र तद् भीमवेगानां पाण्डवानां च भारत ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥*

॥ ३९ ॥ घोषयात्रापर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ एकाधिकद्विशततमोऽध्यायः ॥

पाण्डवानां चित्रसेनादिभिर्गन्धर्वैस्सह युद्धम् ॥

---

वैशम्पायनः—

ततो दिव्यास्त्रसम्पन्ना गन्धर्वा हेममालिनः ।
विसृजन्तश्शरान् दीप्तान् पाण्डवान् पर्यवारयन् ॥ १
चतुरः पाण्डवान् वीरान् गन्धर्वाश्च सहस्रशः ।
रणे सन्न्यपतन् राजंस् तदद्भुतमिवापतत् ॥ २
यथा कर्णस्य च रथो धार्तराष्ट्रस्य चोभयोः ।
गन्धर्वैश्शतशश्छिन्नस् तथा तेषां प्रचक्रिरे ॥ ३
तान् समापततो राजन् गन्धर्वान् छतशो रणे ।

---

* २०० सर्गस्य १६ श्लोकदारभ्य २०१ सर्गस्य ११॥ श्लोकान्तमुपलभ्यमानाश्श्लोकाः अ-क-घ—कोशेषु २०१ सर्गस्य २७ श्लोकानन्तरं दृश्यन्ते । तथाऽपि अन्वयसामञ्जस्यात् ख—कोशानुसारेण मूलतया मुद्रिताः ।

प्रत्यगृह्णन् नरव्याघ्राश् शरवर्षैरवाकिरन् ॥ ४
आकीर्यमाणाः खचराश् शरवर्षैस्समन्ततः ।
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ॥ ५
अथ क्रुद्धानभिप्रेक्ष्य गन्धर्वानर्जुनस्तदा ।
लक्षयित्वाऽथ दिव्यानि महास्त्राण्युपचक्रमे ॥ ६
सहस्राणां सहस्रं स प्राहिणोद्यमसादनम् ।
अजेयानर्जुनस्सङ्ख्ये गन्धर्वान् सूर्यवर्चसः ॥ ७
तथा भीमो महेष्वासस् संयुगे बलिनां वरः ।
गन्धर्वान् शतशस्तत्र जघान निशितैश्शरैः ॥ ८
माद्रीसुतावपि ततो भ्रममाणान् पराङ्मुखान् ।
परिगृह्याग्रतो राजन् जघ्नतुश्शतशोऽपरान् ॥ ९
ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महात्मभिः ।
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्तदा ॥ १०
तानुत्पतिष्णून् बुद्ध्वा तु कुन्तीपुत्रो धनञ्जयः ।
महता शरजालेन समन्तात् पर्यवारयत् ॥ ११
ते बद्धाश्शरजालेन शकुन्ता इव पञ्जरे ।
[1]ववर्षुरर्जुनं घोरा गदाशक्त्यृष्टिवृष्टिभिः ॥ १२
गदाशक्त्यृष्टिवृष्टिं तां निहत्य स महास्त्रवित् ।

1. ख—अर्धपद्यकं नास्ति

गात्राणि प्राहरद्भल्लैर् गन्धर्वाणां धनञ्जयः ॥ १३
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तदा ।
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् ॥ १४
ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना ।
भूमिष्ठमन्तरिक्षस्थाश् शरवर्षैरवाकिरन् ॥ १५
तेषां तु शरवर्षाणि सव्यसाची परन्तपः ।
अस्त्रैस्संवार्य तेजस्वी गन्धर्वान् प्रत्यविध्यत ॥ १६
स्थूणाकर्णमथैन्द्रं च सौरञ्चापि तथाऽर्जुनः ।
आग्नेयं चापि सौम्यं च ससर्ज कुरुनन्दनः ॥ १७
ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन् परम् ॥ १८
ऊर्ध्वमाक्रममाणाश्च शरवर्षेण वारिताः ।
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना ॥ १९
गन्धर्वांस्त्रासितान् दृष्ट्वा कुन्तीपुत्रेण भारत ।
चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत् ॥ २०
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे ।
गदां सर्वायसीं पार्थश् शरैश्चिच्छेद सप्तधा ॥ २१
स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना ।
संवृत्य विद्ययाऽऽत्मानं योधयामास पाण्डवम् ॥ २२

अस्त्राणि तस्य दिव्यानि पोथयामास खे स्थितः ।
गन्धर्वराजो बलवान् माययाऽन्तर्हितस्तदा ॥ २३

अन्तर्हितं तमालक्ष्य प्रहरन्तमथार्जुनः ।
ताडयामास खचरैर् दिव्यास्त्रप्रतिमन्त्रितैः ॥ २४

अन्तर्धानवधं तस्य चक्रे क्रुद्धोऽर्जुनस्तदा ।
शब्दवेध्यमथालक्ष्य बहुरूपो धनञ्जयः ॥ २५

स वध्यमानस्तैरस्त्रैर् अर्जुनेन महात्मना ।
अथास्य दर्शयामास तदाऽऽत्मानं प्रियस्सखा ॥ २६

चित्रसेनमथासाद्य सखाऽयमिति विस्मितः ।
सञ्जहारास्त्रमथ तत् प्रहृष्टः पाण्डवर्षभः ॥ २७

दृष्ट्वा तु पाण्डवास्सर्वे [2]संहृतास्त्रं धनञ्जयम् ।
जगृहुः प्रद्रुतानश्वान् शरवेगं धनूंषि च ॥ २८

चित्रसेनश्च भीमश्च सव्यसाची यमावपि ।
पृष्ट्वा कुशलमन्योन्यं रथेष्वेवावतस्थिरे ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

॥ ३९ ॥ घोषयात्रापर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ द्व्यधिकद्विशततमोऽध्यायः ॥

चित्रसेनेनार्जुनं प्रति दुर्योधनबन्धने कारणाभिधानपूर्वकं युधिष्ठिरसमीपगमनम् ॥ १ ॥ युधिष्ठिरेण गन्धर्वैर्दुर्योधनादीनां बन्धाद्विमोचनम् ॥ २ ॥ ततो दुर्योधनेन स्वपुरं प्रति प्रस्थानम् ॥ ३ ॥

वैशम्पायनः—

ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत् ।
मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः ॥ १

किं ते व्यवसितं वीर कौरवाणां विनिग्रहे ।
किमर्थं च सदारोऽयं निगृहीतस्सुयोधनः ॥ २

चित्रसेनः—

विदितोऽयमभिप्रायस् तत्रस्थेन महात्मना ।
इन्द्रेण धार्तराष्ट्रस्य कर्णस्य च धनञ्जय ॥ ३

वनस्थान् भवतो ज्ञात्वा क्लिश्यमानाननर्हतः ।
इमे वञ्चयितुं प्राप्ता द्रौपदीं च यशस्विनीम् ॥ ४

ज्ञात्वा चिकीर्षितं तेषां मामुवाच सुराधिपः ॥ ४॥

इन्द्रः—

गच्छ दुर्योधनं बद्ध्वा सामात्यं त्वमिहानय ।
धनञ्जयश्च ते रक्ष्यस् सह भ्रातृभिराहवे ॥ ५॥
स हि प्रियसखा तुभ्यं शिष्यश्च सहबान्धवः ॥ ६

चित्रसेनः—

वचनाद् देवराजस्य ततो ह्यभ्यागतो द्रुतम् ।
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयम् ॥ ७

अर्जुनः—

उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः ।
धर्मराजस्य सन्देशं मम चेदिच्छसि प्रियम् ॥ ८

चित्रसेनः—

पापयोनिरयं दुष्टो न विमोक्षणमर्हति ।
प्रलब्धो धर्मराजस्य कृष्णायाश्च धनञ्जय ॥ ९

अर्जुनः—

नेदं चिकीर्षितं तस्य कुन्तीपुत्रो युधिष्ठिरः ।
जानाति धर्मराजो हि श्रुत्वा कुरु यथेच्छसि ॥ १०

वैशम्पायनः—

ते सर्व एव राजानम् अभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य ततस्सर्वे शशंसुस्तस्य दुष्कृतम् ॥ ११

अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा ।
मोक्षयामास तान् सर्वान् गन्धर्वान् प्रशशंस च ॥ १२

युधिष्ठिरः—

दिष्ट्या भवद्भिर्बलिभिश् शक्तैस्सर्वैर्न हिंसितः ।
दुर्वृत्तो धार्तराष्ट्रोऽयं सामात्यज्ञातिबान्धवः ॥ १३

उपकारो महांस्तात कृतोऽयं मम खेचर ।

कुलं न परिभूतं मे मोक्षणेन दुरात्मनः ॥ १४

आज्ञापयध्वमिष्टा हि प्रीतिर्मे दर्शनेन च ।

प्राप्य सर्वानभिप्रायांस् ततो गच्छत मा चिरम् ॥ १५

वैशम्पायनः—

अनुज्ञातास्तु गन्धर्वाः पाण्डुपुत्रेण धीमता ।

सहाप्सरोभिस्संहृष्टाश् चित्रसेनमुखा ययुः ॥ १६

देवलोकं ततो गत्वा गन्धर्वैस्सहितस्तदा ।

न्यवेदयच्च तत् सर्वं चित्रसेनश्शतक्रतोः ॥ १७

देवराजोऽपि गन्धर्वान् हतांश्चैव समजीवयत् ।

दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि ॥ १८

ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः ।

कृत्वा तद्दुष्करं कर्म प्रीतियुक्ताश्च पाण्डवाः ॥ १९

सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः ।

बभ्राजिरे महात्मानः कुरुमध्ये यथाऽग्नयः ॥ २०

ततो दुर्योधनं मुच्य भ्रातृभिस्सहितस्तदा ।

युधिष्ठिरस्सप्रणयम् इदं वचनमब्रवीत् ॥ २१

युधिष्ठिरः—

मा स्म तात पुनः कार्षीर् ईदृशं साहसं क्वचित् ।

न हि साहसकर्तारस् सुखमेधन्ति भारत ॥ २२

स्वस्तिमान् सहितस्सर्वैर् भ्रातृभिः कुरुनन्दन ।

1. अ-क-ब—स्वस्तीत्युक्त्वा तु तान् सर्वान्

गृहान् व्रज यथाकामं वैमनस्यं च मा कृथाः ॥ २३

वैशम्पायनः—

पाण्डवेनाभ्यनुज्ञातो राजा दुर्योधनस्तदा ।
विदार्यमाणो व्रीलेन जगाम नगरं प्रति ॥ २४
तस्मिन् गते कौरवेये कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातृभिस्सहितो वीरैः पूज्यमानो द्विजातिभिः ॥ २५
तपोधनैश्च तैस्सर्वैर् वृतश्शक्र इवामरैः ।
वने द्वैतवने तस्मिन् विजहार मुदाऽन्वितः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
॥ ३९ ॥ घोषयात्रापर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये २६ श्लोकाः]
[घोषयात्रापर्व समाप्तम्]

---

## ॥ त्र्यधिकद्विशततमोऽध्यायः ॥



(प्रायोपवेशनपर्व)

दुर्योधनेन मध्येमार्गं क्वचन रमणीये देशे सेनादिसन्निवेशनपूर्वकमवस्थानम् ॥ १ ॥ तत्र समागतेन गन्धर्वकृते बन्धनमोचने अपरिजानता कर्णेन भ्रमात्तस्य गन्धर्वजेतृत्वेन रूपेण प्रशंसनम् ॥ २ ॥

---

जनमेजयः—

शत्रुभिर्बाध्यमानस्य पाण्डवैश्च महात्मभिः ।
मोक्षितस्य कथं चासीन्मनस्तस्य दुरात्मनः ॥ १

कथं तस्यावलिप्तस्य गर्वितस्य च नित्यशः ।
कथं च पौरुषौदार्यान् पाण्डवानवमन्यतः ॥ २

दुर्योधनस्य पापस्य नित्याहङ्कारवादिनः ।
प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ॥ ३

तस्य लज्जान्वितस्यैवं शोकव्याकुलचेतसः ।
प्रवेशं विस्तरेण त्वं वैशम्पायन कीर्तय ॥ ४

वैशम्पायनः—

धर्मराजेन मुक्तस्तु धार्तराष्ट्रस्सुयोधनः ।
लज्जयाऽधोमुखस्सीदन्नुपासर्पत दुःखितः ॥ ५

स्वपुरं प्रययौ राजा चतुरङ्गबलान्वितः ।
शोकोपहतया बुद्ध्या चिन्तयानः पराभवम् ॥ ६

विमुच्य पथि यानानि देशे सुयवसोदके ।
सुनिविष्टे शुभे रम्ये भूमिभागे यथेप्सितम् ॥ ७
हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत् ॥ ७॥

अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे ।
उपप्लुतं यथा सोमं राहुणा रात्रिसङ्क्षये ॥ ८॥
उपागम्याब्रवीत् कर्णो दुर्योधनमिदं तदा ॥ ९

कर्णः—

दिष्ट्या जीवसि गान्धारे दिष्ट्या नस्सङ्गमः पुनः ।

दिष्ट्या त्वया जितास्संख्ये गन्धर्वाः कामरूपिणः ॥ १०

दिष्ट्या समग्रान् पश्यामि भ्रातॄंस्ते कुरुनन्दन ।
विजिगीषून् रणे मुक्तान् निर्जितारीन् महारथान् ॥ ११

अहं त्वभिद्रुतस्सर्वैर् गन्धर्वैः पश्यतस्तव ।
नाशक्नुवं [1]स्थापयितुं पीड्यमानस्स्ववाहिनीम् ॥ १२

शरक्षतोऽहं च भृशं व्यपयातो निपीडितः ।
इदं त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत ॥ १३

अरिष्टानक्षतांश्चापि सदाररथवाहनान् ।
विमुक्तान् सम्प्रपश्यामि सर्वान् युद्धादमानुषात् ॥ १४

नैतस्य कर्ता लोकेऽस्मिन् पुमान् विद्येत भारत ।
यत् कृतं ते महाराज सह भ्रातृभिराहवे ॥ १५

वैशम्पायनः—

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
उवाच वचनं राजन् बाष्पगद्गदया गिरा ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये १६ श्लोकाः]

---

1. क—धारयितुं वध्यमानां; ख—धारयितुं दीर्यमाणां तु;
ग—धारयितुं पीड्यमानां

## ॥ चतुरधिकद्विशततमोऽध्यायः ॥



दुर्योधनेन कर्णं प्रति युद्धे सानुजस्य स्वस्य गन्धर्वैर्बन्धनस्य युधिष्ठिरचोदनया भीमादिभिर्गन्धर्वाणां रणे पराजयस्य च कथनम् ॥

---

दुर्योधनः—

अजानतस्तु राधेय नाभ्यसूयामि ते वचः ।
जानासि त्वं जितान् शत्रून् गन्धर्वांस्तेजसा मया ॥ १
आयोधितास्तु गन्धर्वास् सुचिरं सोदरैर्मम ।
मया सह महाबाहो कृतश्चोभयतः क्षयः ॥ २
मया दूरात् तु युध्यन्तो यदा शूरा वियद्गताः ।
तदा नो न समं युद्धम् अभवत् सह खेचरैः ॥ ३
पराजयं च प्राप्तास्स्मो रणे बन्धनमेव च ।
सभृत्यामात्यपुत्राश्च सदारधनबान्धवाः ॥ ४
उच्चैराकाशमार्गेण प्रणीतास्ते सुदुःखिताः ॥ ४॥
अथ नस्सैनिकाः केचिद् अमात्याश्च महारथाः ।
उपगम्याब्रुवन् दीनाः पाण्डवान् शरणप्रदान् ॥ ५॥

सैनिकामात्याः—

एष दुर्योधनो राजा धार्तराष्ट्रस्सहानुजः ।
सामात्यदारो ह्रियते गन्धर्वैर्दिवमास्थितैः ॥ ६॥
तं मोक्षयत भद्रं वस् सहदारं नराधिपम् ॥ ७

परामर्शो नाभविष्यत् कुरुदारेषु सर्वथा ॥ ७॥

दुर्योधनः—

एवमुक्तस्स धर्मात्मा ज्येष्ठः पाण्डुसुतस्तदा ।
प्रसाद्य सोदरान् सर्वान् आज्ञापयत मोक्षणे ॥ ८॥
अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ।
साम्ना पूर्वमयाचन्त मुक्तास्सन्तो महारथाः ॥ ९॥
यदा चास्मान् न मुमुचुर् गन्धर्वास्सान्त्विताश्च ते ।
आकाशचारिणो वीरा नदन्तो जलदा इव ॥ १०॥
ततोऽर्जुनश्च भीमश्च यमौ च प्रबलोत्कटौ ।
मुमुचुश्शरवर्षाणि गन्धर्वान् प्रत्यनेकशः ॥ ११॥
अथ सर्वे रणं मुक्त्वा प्रयाताः खेचरा दिशः ।
अस्मानेवाभिवीक्षन्तो दीनान् मुदितमानसाः ॥ १२॥
ततस्समन्तात् पश्यामि शरजालेन वेष्टितम् ।
अमानुषाणि चास्त्राणि प्रयुञ्जानं धनञ्जयम् ॥ १३॥
समावृता दिशो दृष्ट्वा पाण्डवेन शितैश्शरैः ।
धनञ्जयसखाऽऽत्मानं दर्शयामास वै तदा ॥ १४॥
चित्रसेनः पाण्डवेन समाश्लिष्टः परन्तपः ।
कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् ॥ १५॥
ते समेत्य यथान्यायं सन्नाहान् विप्रमुच्य च ।
एकीभूतास्ततस्सर्वे गन्धर्वास्सह पाण्डवैः ॥ १६॥

परस्परं समागम्य प्रीत्या परमया युताः ।
अपूजयेतामन्योन्यं चित्रसेनधनञ्जयौ ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये १७॥ श्लोकाः]

## ॥ पञ्चाधिकद्विशततमोऽध्यायः ॥



दुर्योधनेन कर्णं प्रति स्वबन्धनविषये चित्रसेनार्जुनसंवादप्रकारकथन-पूर्वकं युधिष्ठिरात् स्वस्य बन्धमोचनकथनम् ॥

दुर्योधनः—
चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा ।
इदं वचनमक्लीबम् अब्रवीत् परवीरहा ॥ १

अर्जुनः—
भ्रातॄनर्हसि मे वीर मोक्तुं गन्धर्वसत्तम ।
अनर्हं धर्षणं [1]हीदं जीवमानेषु पाण्डुषु ॥ २

दुर्योधनः—
एवमुक्तस्तु गन्धर्वः पाण्डवेन महात्मना ।
उवाच यत् कर्ण वयं मन्त्रयन्तो विनिर्गताः ॥ ३

स्थितो राज्ये च्युतान् स्थानाच् छ्रिया हीनाञ् श्रिया वृतः ।
द्रष्टा च निस्सुखान् वीरान् सदारान् पाण्डवानिति ॥ ४

1. क-ष—भीमे

अस्मिन्नुच्चार्यमाणे तु गन्धर्वेण वचस्यथ ।
भूमेर्विवरमन्विच्छं प्रवेष्टुं व्रीडयाऽन्वितः ॥ ५

युधिष्ठिरमुपागम्य गन्धर्वास्सह पाण्डवैः ।
अस्मद्दुर्मन्त्रितं तस्मै बद्ध्वा चास्मान् न्यवेदयन् ॥ ६

स्त्रीसमक्षमहं दीनो बद्धश्शत्रुवशं गतः ।
युधिष्ठिरस्योपहृतः किं नु दुःखमतः परम् ॥ ७

ये मे निराकृता नित्यं रिपुर्येषामहं गतः ।
तैर्मोक्षितोऽहं दुर्बुद्धिर् दत्तं तैर्जीवितं च मे ॥ ८

प्राप्तव्यं यद्यहं वीर वधं तस्मिन् महारणे ।
श्रेयस्तद्भविता मह्यं एवंभूतं न जीवितम् ॥ ९

भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च लोकाः पुण्या मे महेन्द्रसदनेऽक्षयाः ॥ १०

[1]यन्मे व्यवसितं किञ्चित् तच्छृणुध्व नराधिप ॥ १०॥

इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान् ।
भ्रातरश्चैव मे सर्वे यान्त्वद्य स्वपुरं प्रति ॥ ११॥

कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये ।
दुश्शासनं पुरस्कृत्य प्रयान्तु नगरं प्रति ॥ १२॥

---

1. अ—यद्यन्मे व्यवसितं किञ्चित्
   ख—यस्त्वद्य मेऽव्यवसितं तच्छृणुध्वं नराधिपाः ।

न ह्यहं प्रतियास्यामि पुरं शत्रुनिराकृतः ।
[1]शत्रुमानासहो भूत्वा सुहृदां मानवर्धनः ॥ १३॥

कारणैरस्म्यभिहितश् शत्रुभिर्वै विमानितः ।
स सुहृच्छोकसन्तप्तश् शत्रूणां हर्षवर्धनः ॥ १४॥

वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् ॥ १५

भीष्मो द्रोणः कृपो द्रौणिर् विदुरस्सञ्जयस्तथा ।
बाह्लीकस्सोमदत्तश्च ये चान्ये वृद्धसम्मताः ॥ १६

ब्राह्मणाश्श्रेणिमुख्याश्च तथोदासीनवृत्तयः ।
किं नु वक्ष्यन्ति किं चापि प्रतिवक्ष्यामि तानहम् ॥ १७

रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि ।
आत्मदोषात् परिभ्रष्टः कथं वक्ष्यामि तानहम् ॥ १८

दुर्विनीतास्श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरं भद्रे यथाऽहं मदगर्वितः ॥ १९

अहो बत यथैतन्मे कष्टं दुश्चरितं कृतम् ।
स्वयं दुर्बुद्धिना मोहाद् येन प्राप्तोऽस्मि संशयम् ॥ २०

तस्मात् प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम् ।
चिन्तयानो हि को जीवेत् कृच्छ्राच्छत्रुभिरुद्धृतः ॥ २१

---

1. स—इदमर्धं नास्ति

शत्रुभिश्चावहसितो मानी पौरुषवर्जितः ।
पाण्डवैर्विक्रमस्थैश्च सावमानमवेक्षितः ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ षडधिकद्विशततमोऽध्यायः ॥

दुर्योधनेन प्रायोपवेशने निजाध्यवसायकथनपूर्वकं दुश्शासनं प्रति राज्यपालनविधानम् ॥ १ ॥ कर्णेन दुर्योधनं प्रति प्रायोपवेशनान्निवर्तनाय सान्त्वोक्तिः ॥ २ ॥

वैशम्पायनः—

एवं चिन्तापरिगतो दुश्शासनमथाब्रवीत् ॥ ॥

दुर्योधनः—

दुश्शासन निबोधेदं वचनं मम भारत ।
प्रतीच्छ त्वं मया दत्तम् अभिषेकं नृपो भव ॥ १॥

प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम् ।
भ्रातॄन् पालय विस्रब्धं मरुतो वृत्रहा यथा ॥ २॥
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ॥ ३

ब्राह्मणेषु यथा दान्तं कुरुवीराप्रमादतः ।
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिस्सदा ॥ ४

[1]ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणानिव ।
गुरवः पालनीयाश्च गच्छ पालय मेदिनीम् ॥ ५
नन्दयन् सुहृदस्सर्वान् शात्रवांश्चाहूय स्वयम् ।
कर्णं चैनं परिष्वज्य गम्यतामित्युवाच ह ॥ ६

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा दीनो दुश्शासनोऽब्रवीत् ।
अश्रुकण्ठस्सुदुःखार्तः प्राञ्जलिः प्रणिपत्य च ॥ ७
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः ।
प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ॥ ८
सखेदं पादयोस्तस्य नेत्रजं जलमुत्सृजन् ।
उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ॥ ९
विदीर्येत् सकला भूमिर् द्यौश्चापि शकलीभवेत् ।
रविरातपतां जह्यात् सोमश्शीतांशुतां त्यजेत् ॥ १०
पाशं जलेशो जह्याद्वा हिमवान् छैलतां व्रजेत् ।
शुष्येत् तोयं समुद्रस्य [2]भविष्यन्ति शतं समाः ॥ ११
न चाहं त्वहते राजन् प्रशासेयं वसुंधराम् ।
पुनःपुनः प्रसीदेति वाक्यं चेदमुवाच ह ॥ १२

दुश्शासनः—

शत्रूणां शोककृद्राजन् सुहृदां शोकनाशनः ।
त्वमेव नः कुले राजा भविष्यसि न संशयः ॥ १३

---

1. ख—इदमर्धं नास्ति 2. ख—अयं पादोऽनन्तरश्च न स्तः

वैशम्पायनः—

एवमुक्त्वा स राजेन्द्रं सुस्वरं प्ररुरोद ह ।
पादौ सङ्गृह्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ॥ १४
तथा तौ दुःखितौ दृष्ट्वा दुश्शासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ॥ १५

कर्णः—

विषीदथः किं कौरव्यौ बालिश्यात् प्राकृताविव ।
न शोकश्शोचमानस्य विनिवर्तेत कर्हिचित् ॥ १६
तदा च शोचतश्शोको व्यसनान्नापकर्षति ।
सामर्थ्यं किं त्वतश्शोकं शोचमानौ प्रपद्यथः ॥ १७
[1]धृतिमन्तौ श्रियं चेमाञ् शत्रूञ्शोकमिमं जहि ।
कर्तव्यं हि कृतं राजन् पाण्डवैस्तु विमोक्षणम् ॥ १८
नित्यमेव हितं कार्यं राज्ञो विषयवासिभिः ।
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ॥ १९
नार्हस्येवंगते मृत्युं कर्तुं प्राकृतवद् वृथा ।
विषण्णास्तव सोदर्यास् त्वयि प्रायं समाश्रिते ॥ २०
तदलं दुःखितानेतान् कर्तुं सर्वान्नराधिप ।
उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. ख–धृतिं गृह्णीत मा शत्रून् शोचन्तो नन्दयिष्यथः । [पाठान्तरम्]

## ॥ सप्ताधिकद्विशततमोऽध्यायः ॥

कर्णेन बहुधा प्रार्थनेऽपि दुर्योधनेन प्रायोपवेशाध्यवसायादपरावर्तनम् ॥

कर्णः—

राजन्नद्यावगच्छामि तवैव लघुसत्त्वताम् ।
अल्पत्वं च तथा बुद्धेः कार्याणामविवेकिताम् ॥ १

किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि ।
सद्यो वशं समापन्नश् शत्रूणां शत्रुकर्शन ॥ २

सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
[1]अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम् ॥ ३

प्रायः प्रधानपुरुषाः क्षोभयित्वाऽरिवाहिनीम् ।
निगृह्यन्ते च वै युद्धे मोक्ष्यन्ते च स्वसैनिकैः ॥ ४

सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैस्सङ्गम्य नृपार्थाय यतितव्यं यथातथम् ॥ ५

इत्येवं पाण्डवै राजन् भवद्विषयवासिभिः ।
यदृच्छया मोक्षितोऽद्य तत्र का परिदेवना ॥ ६

न चैतत् साधु यद्राजन् पाण्डवास्त्वां नृपोत्तमम् ।
स्वसेनया सम्प्रयान्तं नानुयान्ति स्म पृष्ठतः ॥ ७

---

1. अ-च—नासीदमर्षम्

शूराश्च बलवन्तश्च संयुगेष्वपराजिताः ।
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः ॥ ८

पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्त्वस्थाः पाण्डवाश्चापि न ते प्रायमुपाविशन् ॥ ९

तदलं ते महाबाहो विषादं कर्तुमीदृशम् ।
उत्तिष्ठ राजन् भद्रं ते न चिन्तां कर्तुमर्हसि ॥ १०

अवश्यमेवं नृपते राज्ञो विषयवासिभिः ।
प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ ११

मद्वाक्यमेतद्राजेन्द्र यदि त्वं न करिष्यसि ।
स्थास्यामीह भवत्पादौ शुश्रूषुररिमर्दन ॥ १२

नोत्सहे जीवितुं सत्यं त्वद्विहीनो नरर्षभ ।
[1]उत्तिष्ठ राजन् भद्रं ते न चिन्तां कर्तुमर्हसि ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

---

1. ख—प्रायोपविष्टस्तु तथा राज्ञां हास्यो भविष्यति । [पाठान्तरम्]
वैशम्पायनः—
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तथा ।
नाभ्युत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ [अधिकः पाठः]

## ॥ अष्टाधिकद्विशततमोऽध्यायः ॥

शकुन्यादिभिर्बहुधा परिसान्त्वनेऽपि दुर्योधनेन प्रायोपवेशनिश्चयाद्-निवर्तने पातालवासिभिर्दैत्यदानवैस्तदानयनाय जपहोमादिना कृत्यासर्जनम् ॥ १॥ तया कृत्यया प्रायोपविष्टस्य दुर्योधनस्य पातालं प्रत्यानयनम्॥२॥

शकुनिः—

[1]एवमुक्तं च कर्णेन तच्छ्रुतं कौरव त्वया ।
मया हृतां श्रियं दीप्तां मोहात् समुपहासि किम् ॥ १

त्वं बुद्ध्या नृवर प्राणान् उत्स्रष्टुमिह चेच्छसि ।
अद्यचाऽप्यवगच्छामि न वृद्धास्सेवितास्त्वया ॥ २

यस्समुत्पतितं दैन्यं बुद्ध्या च न नियच्छति ।
नश्यते हि श्रियं प्राप्य वात्या नावमिवाम्भसि ॥ ३

अतिभीरुं मृदुं क्लीबं दीर्घसूत्रं प्रमादिनम् ।
व्यसनाद्विषमं तात न भजन्ति परश्श्रियः ॥ ४

सत्कृतस्य हि ते शोको विपरीतः कथं भवेत् ।
मा कृतं शोभनं पार्थैश् शोकमालम्ब्य नाशय ॥ ५

यत्र हर्षस्त्वया कार्यश् सत्कर्तव्याश्च पाण्डवाः ।

---

वैशम्पायनः—
1. ख—प्रायोपविष्टं राजानं दुर्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्शकुनिस्सौबलस्तदा ॥ [अधिकः पाठः]
ख—अर्धेपङ्क्त्युत्यं नास्ति

अत्र शोचसि राजेन्द्र विपरीतमिदं तव ॥ ६

प्रसीद नः कृतं मानं सन्तुष्टस्सुकृतं स्मर ।
प्रयच्छ राज्यं पाण्डूनां यशो धनमवाप्नुहि ॥ ७

क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि ॥ ७॥

सौभ्रात्रं पाण्डवैः कृत्वा समये स्थाप्य चैव तान् ।
पित्र्यं राज्यं प्रयच्छैषां ततस्सुखमवाप्नुहि ॥ ८॥

वैशम्पायनः—
शकुनेर्वचनं श्रुत्वा दुश्शासनमवेक्ष्य च ।
पादयोः पतितं दीनं विक्लबं भुवि सौहृदात् ॥ ९॥

बाहुभ्यां संयुताभ्यां तं दुश्शासनमरिन्दमम् ।
उत्थाप्य सम्परिष्वज्य प्रीत्याऽजिघ्रत मूर्धनि ॥ १०॥

कर्णसौबलयोश्चैव संश्रुत्य वचनान्यसौ ।
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा ॥ ११॥

व्रीलेनाऽभिपरीतात्मा नैराश्यमगमत् परम् ।
सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत् ॥ १२॥

दुर्योधनः—
न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया ।
नैव भोगैश्च मे कार्यं मानविघ्नेन गच्छतः ॥ १३॥

[1]निश्चितेयं मम मतिस् सिद्धा प्रायोपवेशने ।

---

1. ख—अर्धद्वयं नास्ति

गच्छध्वं सहितास्सर्वे पूज्याश्च गुरवो मम ॥ १४॥

वैशम्पायनः—

इत्येवमुक्त्वा प्रत्यूचू राजानमरिमर्दनम् ॥ १५

कर्णसौबलौ—

या गतिस्तव राजेन्द्र साऽस्माकमपि भारत ।

कथं हि सम्प्रवेक्ष्यामस् त्वद्विहीनाः पुरं वयम् ॥ १६

वैशम्पायनः—

स सुहृद्भिरमात्यैश्च भ्रातृभिस्स्वजनेन च ।

बहुप्राकारमप्युक्तो निश्चयान्नाभिचाल्यते ॥ १७

दर्भसंस्तरमास्तीर्य निश्चयाद्धृतराष्ट्रजः ।

संस्पृश्यापश्शुचिर्भूत्वा भूतलं समुपाश्रितः ॥ १८

कुशचीराम्बरधरः परं नियममास्थितः ।

वाग्यतो राजशार्दूलस् स स्वर्गगतिकाङ्क्षया ॥ १९

[1]मनसोपचितिं कृत्वा निरस्य तु बहुश्रियम् ।

तस्थौ प्रायोपवेशे च मतिं कृत्वा सुनिश्चलाम् ॥ २०

अथ तं निश्चयं बुद्ध्वा तस्य दैतेयदानवाः ।

पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ २१

तैस्स्वकस्य क्षयं तं तु ज्ञात्वा दुर्योधनस्य वै ।

आनयार्थं ततश्चक्रुः कर्म वैतानसम्भवम् ॥ २२

---

1. ख—इदमर्धं नास्ति

बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ।
अथर्ववेदप्रोक्तैश्च याश्चौपनिषदाः क्रियाः ॥ २३
[1]मन्त्रजप्यसमायुक्तास् तदा स्म समवर्तयन् ॥ २३॥
जुह्वते गो हविः क्षीरं मन्त्रवत् सुसमाहिताः ।
ब्राह्मणा वेदवेदाङ्गपारगास्सुदृढव्रताः ॥ २४॥
अध्वर्यवो दानवानां आसन् कर्मप्रवर्तकाः ॥ २५
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता ।
कृत्या समुत्थिता राजन् किं करोमीति चाब्रवीत् ॥ २६
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना ॥ २६॥

दैत्याः—

प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ २७

वैशम्पायनः—

तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा ।
निमेषादगमच्चापि यत्र राजा सुयोधनः ॥ २८
सा तमादाय राजानं प्रविवेश रसातलम् ।
दानवानां मुहूर्ताच्च पुरतस्तं न्यवेदयत् ॥ २९
मौनिनं तं ततो दृष्ट्वा रात्रौ सङ्गत्य दानवाः ।
प्रहृष्टमनसस्सर्वे किञ्चिदुत्फुल्ललोचनाः ॥ ३०

1. ख—अर्धमिदं नास्ति

दृढमेनं परिष्वज्य पृष्ट्वा च कुशलं तदा ।
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

## ॥ नवाधिकद्विशततमोऽध्यायः ॥

पातालवासिभिर्दैत्यदानवैर्दुर्योधनं प्रति हेतूपन्यासपूर्वकं प्रायोपवेशनिश्चयान्निवर्तनम् ॥ १॥ पुनः कृत्यया दुर्योधनस्य पूर्वस्थानं प्रत्यानयनम् ॥ २ ॥ परेद्युः कर्णादिप्रार्थनया दुर्योधनेन सर्वैस्सह स्वपुरं प्रत्यागमनम् ॥ ३॥

दानवाः—

भोस्सुयोधन राजेन्द्र भारतानां कुलोद्वह ।
शूरैः परिवृतो नित्यं तथैव च महात्मभिः ॥ १

माकार्षीस्साहसमिदं कस्मात् प्रायोपवेशनम् ।
आत्मत्यागी ह्यवाप्नोति पापानां चाप्यधोगतिम् ॥ २

न हि कार्यविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३

नियच्छतां मतिं राजन् धर्मार्थसुखनाशिनीम् ।
यशःप्रतापधर्मघ्नीं शत्रूणां हर्षवर्धनीम् ॥ ४

श्रूयतां तु प्रभूतिं च दिव्यतां चात्मनोऽनघ ।
[1]पुरा द्वैतवनेऽस्माभिर् लब्धो देवान्महेश्वरात् ॥ ५

पूर्वकायश्च ते सर्वो निर्मितो वज्रसञ्चयैः ।
अस्त्रैरभेद्यश्शस्त्रैर्वोऽप्यधःकायश्च ते नृप ॥ ६

कृतः पुष्पमयो दिव्यो रूपवान् स्त्रीमनोहरः ।
एवमीश्वरसंयुक्तस् तव देहो नृपोत्तम ॥ ७
देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ॥ ७॥

क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
[2-3]ये पुराऽपि घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ॥ ८॥

नैव भ्रातॄन् न च सुतान् न पितॄन् न च बान्धवान् ।
न शिष्यान् नैव च ज्ञातीन् न बालान् स्थविरान् न च ॥
युधि सम्प्रहरिष्यन्ति प्रमोक्ष्ये कुरुसत्तम ॥ १०

निस्स्नेहा दानवाविष्टास् समाक्रान्तेऽन्तरात्मनि ।
प्रहरिष्यन्ति बन्धुभ्यस् स्नेहमुत्सृज्य दूरतः ॥ ११

---

1. ख—निर्माणं च शरीरस्य ततो धैर्यमवाप्नुहि । [अधिकः पाठः]
2. ख—दिव्यास्त्रविदुषश्शूराः क्षपयिष्यन्ति ते रिपून् ।
तदलं ते विषादेन भयं तव न विद्यते ॥
सहायार्थं च ते वीर सम्भूता भुवि दानवाः ।
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः ॥ [अधिकः पाठः]
3. अर्धषट्कं नास्ति

हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ।
अज्ञातमूला देवाश्च दैवाश्च विधिनिर्मितात् ॥ १२
[1]व्याभाषमाणाश्चान्योन्यं नेमे जीवितुमर्हथ ।
सर्वशस्त्रास्त्रमोक्षे च पौरुषे समवस्थिताः ॥ १३
श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ।
ते च शक्या महात्मानः प्रयोत्स्यन्तीह पाण्डवाः ॥ १४
वधं तेषां करिष्यन्ति दैवयुक्ता महाबलाः ।
दैत्यरक्षोगणाश्चैव सम्भूताः क्षत्रयोनिषु ॥ १५
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ।
गदाभिर्मुसलैः खड्गैश् शस्त्रैरुच्चावचैरपि ॥ १६
प्रहरिष्यन्ति ये वीरास् तवारिषु महाबलाः ॥ १६॥
यच्च तेऽन्तर्गतं वीर भयमर्जुनसम्भवम् ।
तत्रापि विहितोऽस्माभिर् वधोपायोऽर्जुनस्य वै ॥ १७॥
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः ।
तद्वैरं संस्मरन् वीर योत्स्यते केशवार्जुनौ ॥ १८॥
स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यते ।
कर्णः प्रहरतां श्रेष्ठस् सर्वांश्चारीन् महारथान् ॥ १९॥
ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।

1. ख—इदमर्धं नास्ति

कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ २०॥

तस्मादस्माभिरप्यत्र दैत्याश्शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ॥ २१॥
प्रख्यातास्तेऽर्जुनं वीरं युधि योत्स्यन्ति मा शुचः ॥ २२
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ॥ २२॥

[1]न विषादं नयस्वाद्य न चास्वस्थो भवानघ ।
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ॥ २३॥

गच्छ वीर न ते बुद्धिर् अन्या कार्या कथञ्चन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥ २४॥

वैशम्पायनः—

एवमुक्त्वा परिष्वज्य दैत्यास्ते राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ २५॥

स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाप्य जयमाप्नुहि चेत्यथ ॥ २६॥

तैर्विसृष्टं महाबाहुं कृत्या सैवानयत् पुनः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ २७॥

प्रतिवेश्य च तं वीरं कृत्या समभिपूज्य च ।

---

1. अ—न विषादं न चस्वास्थ्यं न चास्वस्थो भवानघ ।　　[पाऽन्तरम्]
क—मा विषादं नयस्वाद्य
ख—माविषादस्त्वया कार्यो नैतत्त्वय्युपपद्यते ।

अनुज्ञाता च सा राज्ञा तत्रैवान्तरधीयत ॥ २८॥
गतायामथ तस्यां च राजा दुर्योधनस्तदा ।
[1]स्वप्नभूतमिदं सर्वम् अचिन्तयत भारत ॥ २९॥
[2]सम्मृश्य तानि वाक्यानि दानवोक्तानि दुर्मतिः ।
विजेष्यामि रणे पाण्डून् इति चास्याभवन्मतिः ॥ ३०॥
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान् समर्थांश्च सुयोधनः ॥ ३१॥
एवमाशा दृथा तस्य धार्तराष्ट्रस्य दुर्मतेः ।
विनिर्जये पाण्डवानाम् अभवद्भरतर्षभ ॥ ३२॥
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरां करोति स्म सदा मतिम् ॥ ३३॥
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभवाक्रान्ताः फाल्गुनस्य वधैषिणः ॥ ३४॥
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां तेऽभवन् हि विशां पते ॥ ३५॥
न चाचष्टे च कस्मिंश्चिद् एतद्राजा सुयोधनः ।
कृत्ययाऽऽनाय्यकथितं यत् तस्यां निशि दानवैः ॥ ३६॥
दुर्योधनं निशान्ते च कर्णो वचनमब्रवीत् ।

1. ख—नासीदमर्षम्  2. अ-ब—अर्धचतुष्टयं नास्ति

स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ३७॥

कर्णः—

न मृतो जयते शत्रून् जीवन् भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ॥ ३८॥
न कालोऽद्य विषादस्य भयस्य मरणस्य च ।

वैशम्पायनः—

परिष्वज्याब्रवीदेवं भुजाभ्यां स महाभुजः ॥ ३९॥

कर्णः—

उत्तिष्ठ राजन् किं शेषे कस्माच्छोचसि शत्रुहन् ।
[1]शत्रून् प्रताप्य वीर्येण सकलं कर्तुमर्हसि ॥ ४०॥
अथ वा ते भयं जातं दृष्ट्वाऽर्जुनपराक्रमम् ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ४१॥
ततस्त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्थं वशं तव जनाधिप ॥ ४२॥

वैशम्पायनः—

एवमुक्तस्तु कर्णेन दैत्यानां वचसा तथा ।
प्रणिपातेन चाप्येषाम् उदतिष्ठत् सुयोधनः ॥ ४३॥
दैत्यानां स वचश्श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ।
ततो मनुजशार्दूलो योजयामास वाहिनीम् ॥ ४४॥
रथनागाश्वकलिलां पदातिजनसङ्कुलाम् ॥
[2]गङ्गौघप्रतिमां वीरः प्रायेण स महाचमूम् ॥ ४५॥

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति

[1]श्वेतच्छत्रैः पताकाभिः पाण्डरैश्चमरैरपि ।
रथैर्नागैः पदातैश्च प्रयाणे सा बभौ चमूः ॥ ४६॥

व्यपेताभ्रघने काले द्यौरिवासीत् तु शारदी ।
हंसपङ्क्तिसमाकीर्णा माद्यत्सारसशोभिता ॥ ४७॥

जयाशीर्भिर्नरेन्द्राणां स्तूयमानोऽथ राजवत् ।
[2]गृह्णन्नञ्जलयश्चापि धार्तराष्ट्रो जनाधिपः ॥ ४८॥

सुयोधनो ययावग्रे श्रिया परमया युतः ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ४९॥

दुश्शासनादयश्चास्य भ्रातरस्सर्व एव ते ।
[3]भूरिश्रवास्सोमदत्तो महाराजश्च बाह्लिकः ॥ ५०॥

रथैर्नानाविधाकारैर् हयैर्गजवरैस्तथा ॥ ५१
प्रयान्तं नृपसिंहं तम् अनुजग्मुः कुरूद्वहाः ॥ ५१॥

प्रहृष्टमनसस्सर्वे दुर्योधनपुरोगमाः ।
कालेनाल्पेन ते राजन् विविशुस्स्वपुरं तदा ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

॥ ४० ॥ प्रायोपवेशनपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ५२॥ श्लोकाः]

---

1. च—अर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति
3. अ-च—अर्धद्वयं नास्ति

## ॥ दशाधिकद्विशततमोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति पाण्डवप्रशंसनपूर्वकं तैःसह सन्धिविधानम् ॥ १ ॥ तथा कर्णस्य गर्हणम् ॥ २ ॥ दुर्योधनानुमत्या कर्णेन दिग्विजयाय निर्गमनम् ॥ ३ ॥ दिग्विजयार्थं गतेन कर्णेन सकलराजवशीकरणपूर्वकं पुनर्हास्तिनपुरं प्रत्यागमनम् ॥४॥ दुर्योधनेन राजसूययाजनं प्रार्थितैर्ब्राह्मणैर्हेतूक्त्या तन्निषेधनपूर्वकं तं प्रति यज्ञान्तकरणनियोजनम् ॥ ५ ॥

जनमेजयः

वर्तमानेषु पार्थेषु पाण्डवेषु महात्मसु ।
धार्तराष्ट्रा महेष्वासाः किमकुर्वत सत्तम ॥ १

कर्णो वैकर्तनश्चैव शकुनिश्चापि सौबलः ।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ २

वैशम्पायनः—

एवं गतेषु पार्थेषु विसृष्टे च सुयोधने ।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः ॥ ३
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ॥ ३॥

भीष्मः—

उक्तं तात मया पूर्वं गच्छतस्ते सुयोधनम् ।
गमनं ते न रुचितं तथा च न कृतं त्वया ॥ ४॥

ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ।
मोक्षितश्चापि धर्मज्ञैः पाण्डवैश्च न लज्जसे ॥ ५॥

प्रत्यक्षं तव गान्धारे ससैन्यस्य विशां पते ।
सूतपुत्रोऽपयाक्रीतो गन्धर्वाणां तदा रणात् ॥ ६॥
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ।
[1]दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम् ॥ ७॥
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ॥ ८
न चापि पादभाक् कर्णः पाण्डवानां महात्मनाम् ।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ९
तस्य तेऽहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः ।
सन्धिं सन्धिविदां श्रेष्ठ कुलस्यास्य विवृद्धये ॥ १०

वैशम्पायनः—
एवमुक्तस्तु भीष्मेण धार्तराष्ट्रो जनेश्वरः ।
प्रहस्य सहसा राजन् विप्रतस्थे ससौबलः ॥ ११
तं तु प्रस्थितमाज्ञाय कर्णदुश्शासनादयः ।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं जनेश्वरम् ॥ १२
तांस्तु सम्प्रस्थितान् दृष्ट्वा भीष्मः कुरुपितामहः ।
लज्जया च ततो राजा जगाम स्वं निवेशनम् ॥ १३
गते भीष्मे महाराज धार्तराष्ट्रो महाबलः ।
पुनरागम्य तं देशम् अमन्त्रयत मन्त्रिभिः ॥ १४
सहास्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।

---

1. ख—व्यपायात्पृष्ठतस्तस्मात्प्रेक्षमाणः पुनः पुनः । [अधिकः पाठः]

कथं नु सुकृतं तत् स्यान्मन्त्रयामास भारत ॥ १५

कर्णः—

दुर्योधन निबोधेदं यत् त्वां वक्ष्यामि कौरव ।
श्रुत्वा च तत् तथा सर्वं कर्तुमर्हस्य[1]रिन्दम ॥ १६

तवाद्य पृथिवी वीर निस्सपत्ना नृपोत्तम ।
तां पालय महाबाहो हतशत्रुर्महामनाः ॥ १७

वैशम्पायनः—

[2]एवमुक्तस्तु कर्णेन राजा कर्णमथाब्रवीत् । १७॥

दुर्योधनः—

न किञ्चिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ।
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ॥ १८॥
अभिप्रायस्तु मे कश्चित् तं मे शृणु यथातथम् ॥ १९
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
मम स्पृहा समुत्पन्ना तां सम्पादय सूतज ॥ २०

वैशम्पायनः—

एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ॥ २०॥

कर्णः—

तवाद्य पृथिवीपालास् सर्वे वश्या नृपोत्तम ।
[3]आहूयन्तां द्विजवरास् सम्भाराश्च यथाविधि ॥ २१॥
सम्भ्रियन्तां कुरुश्रेष्ठ [4]यज्ञोपकरणानि च ।

---

1. क-च—स्यनिन्दित
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. अ-च—जीवमाने युधिष्ठिरे

[1]ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ॥ २२॥
क्रियां कुर्वन्तु ते राजन् यथाशास्त्रमरिन्दम ॥ २३
बह्वन्नपानसंयुक्तस् सुसमृद्धगुणान्वितः ।
प्रवर्ततां महायज्ञस् तवापि भरतर्षभ ॥ २४

वैशम्पायनः—

एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशां पते ।
पुरोहितं समानाय्य वचनं चेदमब्रवीत् ॥ २५

दुर्योधनः—

राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहरस्व यथाशास्त्रं यथान्यायं यथाक्रमम् ॥ २६

वैशम्पायनः—

स एवमुक्तो नृपतिम् उवाच द्विजसत्तमः ॥ २६॥

पुरोहितः—

[2]ब्राह्मणैस्सहितो राजन् ये तत्रासन् समागताः ।
[3]न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ॥ २७॥
आहर्तुं कौरवश्रेष्ठ कुले तव नरोत्तम ।
[4-5]दीर्घायुर्जीवति च वै धृतराष्ट्रः पिता नृप ॥ २८॥
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम ॥ २९
[6]अस्ति त्वन्यन्महत् सत्रं राजसूयसमं प्रभो ।

---

1. अ-ब—नवार्धानि न सन्ति
2. अ-ख-ब—नास्तीदमर्धम्
3. अ-ब—नास्तीदमर्धम्
4. अ-ब—अर्धद्वयं नास्ति
5. क—सदीर्घमायुर्जीवति
6. अ-ख-ब—अर्धद्वयं नास्ति

तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ ३०
[1]ये चेमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करं सम्प्रयच्छन्तु सुवर्णमकृतं कृतम् ॥ ३१
तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ॥ ३२
यत्र यज्ञो नरश्रेष्ठ प्रभूतान्नस्सुसंस्कृतः ।
प्रवर्ततां यथान्यायं संशयोऽपि निवारितः ॥ ३३
एष वै वैष्णवो नाम यज्ञस्सत्पुरुषोचितः ।
एतेन नेष्टवान् कश्चिद् ऋते विष्णुं सनातनम् ॥ ३४
राजसूयं क्रतुश्रेष्ठं स्पर्धतेऽयं महाक्रतुः ।
अस्माकं रोचते चैष श्रेयश्च तव भारत ॥ ३५
अभग्नश्च भवेदेष सफला च स्पृहा च सा ।
तस्मादेष महाबाहो तव यज्ञः प्रवर्तताम् ॥ ३६
एवमुक्तस्तु [2]तैर्विप्रैर् धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातॄंश्चैवेदमब्रवीत् ॥ ३७

दुर्योधनः—

रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तं मां प्रब्रूत माचिरम् ॥ ३८

वैशम्पायनः—

एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।

---

1. ख—अर्धपञ्चकं नास्ति 2. अ—कर्णेन ; क-ब—धर्मेण

सन्दिदेश ततो राजा व्यापारान् स्वान् यथाक्रमम् ॥ ३९

हलस्य करणे चापि व्यादिष्टास्सर्वशिल्पिनः ।
यथोक्तं तन्नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

॥ ४० ॥ प्रायोपवेशनपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ४० श्लोकाः]

---

## ॥ एकादशाधिकद्विशततमोऽध्यायः ॥

दुर्योधनेन यज्ञसमापनानन्तरं सबहुमानं प्राहुणिकविप्रनृपप्रेषण-पूर्वकं निजनगरप्रवेशनम् ॥

---

वैशम्पायनः—

ततस्तु शिल्पिनस्सर्वं कृतमूचुर्यथाक्रमम् ।
[1]विदुरश्च महाप्राज्ञो धृतराष्ट्रे न्यवेदयत् ॥ १

विदुरशिल्पिनः—

सज्जं कृतं महाराज कालप्राप्तं च भारत ।
सौवर्णं च कृतं दिव्यं लाङ्गलं सुमहाधनम् ॥ २

वैशम्पायनः—

एतच्छ्रुत्वा नृपश्रेष्ठो धृतराष्ट्रो महीपतिः ।

---

1. क—अर्धचतुष्टयं नास्ति

[1]भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ३
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ॥ ४
ते प्रयाता यथोद्दिष्टा दूतास्त्वरितवाहनाः ।
तत्र कश्चित् प्रयातं तु दूतं दुश्शासनोऽब्रवीत् ॥ ५

दुश्शासनः—

गच्छ द्वैतवनं शीघ्रं पाण्डवान् पुरुषर्षभान् ।
निमन्त्रय यथान्यायं विप्रांस्तस्मिन् वने तथा ॥ ६

वैशम्पायनः—

स गत्वा पाण्डवान् सर्वान् उवाचाथ प्रणम्य च । ६॥

दूतः—

दुर्योधनो महाराजा यजते नृपसत्तमः ।
स्ववीर्यार्जितमर्थौघम् अवाप्य कुलनन्दनः ॥ ७॥
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ ८
अहं तु प्रेषितो राजन् कौरवेण महात्मना ।
आमन्त्रयति वो राजा धृतराष्ट्रो महीपतिः ॥ ९
मनोभिलषितं राज्ञस् तं क्रतुं द्रष्टुमर्हथ ॥ ९॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।

---

1. ख—आज्ञापयामास नृप क्रतुराजः प्रवर्ततताम् ।
ततः प्रववृते यज्ञः प्रभूतान्नसुसत्कृतः ॥
दीक्षितश्चापि गान्धारिः यथाशास्त्रं यथाक्रमम् ।
प्रहृष्टो धृतराष्ट्रोऽभूद्विदुरश्च महामनाः ॥ [अधिकः पाठः]

अब्रवीन्नृपशार्दूलो दिष्ट्या यज्ञं सुयोधनः ॥ १०॥

युधिष्ठिरः—

यजते क्रतुमुख्यानां सर्वेषां कीर्तिवर्धनः ।

वयमप्युपयास्यामो न त्विदानीं कथञ्चन ॥ ११॥

समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ १२

वैशम्पायनः—

श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ॥ १२॥

भीमः—

स तदा नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ।

अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ॥ १३॥

वर्षात् त्रयोदशादूर्ध्वं नरसत्रे नराधिपः ।

यथा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ॥ १४॥

आगन्तारस्तदा स्मेति वाच्य एव सुयोधनः ॥ १५

वैशम्पायनः—

शेषास्तु पाण्डवा राजन् नैवोचुः किञ्चिदप्रियम् ।

दूतश्च तद् यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ १६

अथाजग्मुर्द्विजश्रेष्ठा नानाजनपदेश्वराः ।

ब्राह्मणाश्च महाभागा धार्तराष्ट्रपुरं प्रति ॥ १७

ते त्वर्चिता यथाशास्त्रं यथावर्णं यथाक्रमम् ।

[1]मुदा परमया युक्ताः प्रीत्या चापि नरेश्वराः ॥ १८

---

1. ख—इदमर्धं नास्ति

धृतराष्ट्रोऽपि राजेन्द्र संवृतस्सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ १९

धृतराष्ट्रः—

यथा सुखं जनस्सर्वः क्षत्तस्स्यादन्नसंयुतः ।
हृष्येच्च यज्ञसदने तथा नीतिर्विधीयताम् ॥ २०

वैशम्पायनः—

विदुरस्त्वेवमाज्ञप्तस् सर्ववर्णानरिन्दमः ।
यथा प्रमाणतो विद्वान् पूजयामास धर्मवित् ॥ २१

भक्ष्यभोज्यान्नपानेन माल्यैश्चापि सुगन्धिभिः ।
वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ २२

कृत्वाऽप्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ॥ २३

विसर्जयामास नृपान् ब्राह्मणांश्च सहस्रशः ॥ २३॥

विसर्जयित्वा स नृपान् भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

॥ ४० ॥ प्रायोपवेशनपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये २४॥ श्लोकाः ]

---

## ॥ द्वादशाधिकद्विशततमोऽध्यायः ॥

दुर्योधनसभायां कर्णेनार्जुनवधप्रतिज्ञानम् ॥ १ ॥ चारमुखात्पाण्डवै-स्सच्छ्रवणम् ॥ २ ॥

वैशम्पायनः—

प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
[1]मागधाश्च महेष्वासं नागराश्च सहस्रशः ॥ १

लाजैश्चन्दनपुष्पैश्च व्यकीर्यन्त जनास्तदा ।
ऊचुर्दृष्ट्वा नृपाविघ्नस् समाप्तोऽयं क्रतुस्तव ॥ २

अपरे अब्रुवंस्तत्र वादिकास्तं महीपतिम् ।

वादिकाः—

युधिष्ठिरस्य यज्ञस्य न समो ह्येष ते क्रतुः ॥ ३

[2]न वै तस्य क्रतोरेष कलामर्हति षोडशीम् ।

वैशम्पायनः—

एवं तदाब्रुवन् केचिद् वादिनस्तं नरेश्वरम् ॥ ४

सुहृदस्त्वब्रुवंस्तत्र क्रतून् सर्वानयं ह्यति ।
[3]ययातिर्नहुषश्चैव मान्धाता भरतस्तथा ॥ ५

क्रतुमेतं समाहृत्य पूतास्सर्वे दिवं गताः ॥ ५॥

एता वाचश्शुभाश्शृण्वन् सुहृदां भरतर्षभ ।

---

1. ख—इदमर्धं नास्ति  2. ख—इदमर्धं नास्ति
3. ख—प्रवर्तितोह्ययं राज्ञा धार्तराष्ट्रेण धीमता । [अधिकः पाठः]

प्रविवेश पुरं हृष्टम् स्वयमेव नराधिपः ॥ ६॥
अभिवाद्य ततः पादौ मातापित्रोर्विशां पते ।
भीष्मद्रोणकृपाणां च विदुरस्य च भारत ॥ ७॥
[1]तमुत्थाय महाराजं सूतपुत्रोऽब्रवीद्वचः ॥ ८

सूतपुत्रः—

दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं क्रतूत्तमः ।
हतेषु युधि पार्थेषु राजसूयस्तथा त्वया ॥ ९
आहृतोऽयं नरश्रेष्ठ त्वां सभाजयते जनः ॥ ९॥

वैशम्पायनः—

तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः ॥ १०

दुर्योधनः—

सत्यमेतत् त्वया वीर पाण्डवेषु महात्मसु ।
निहतेषु रणे वीर्यात् प्राप्ते चापि महाक्रतौ ॥ ११
[2]राजसूये महाराज त्वं मांसं वर्धयिष्यसि ॥ ११॥

वैशम्पायनः—

एवमुक्त्वा महाराज कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः ॥ १२॥
[3]सोऽब्रवीत् सुहृदश्चापि पार्श्वस्थान् नृपसत्तमः ।
राधेयसौबलान् वीक्ष्य धार्तराष्ट्रो महीपतिः ॥ १३॥

---

1. ख—अभिवादितः कनीयोभिर् भ्रातृभिर्भ्रातृवत्सलः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः ॥ [अधिकः पाठः]
2. क—अर्धपद्यकं नास्ति
3. ख—अब्रवीत् सुहृदस्सर्वान् धार्तराष्ट्रो महीपतिः । मध्ये अर्धं नास्ति

दुर्योधनः—

कदा तु तं क्रतुवरं राजसूयं महाधनम् ।
निहत्य पाण्डवान् सर्वान् आहरिष्यामि कौरवाः ॥ १४॥

वैशम्पायनः—

तमब्रवीत् तदा कर्णश् शृणु मे राजकुञ्जर ॥ १५

कर्णः—

पादौ न धावये तावद् यावन्न निहतोऽर्जुनः ।
यथोत्कृष्टं महाराज धार्तराष्ट्रैर्महारथैः ॥ १६

वैशम्पायनः—

फल्गुनस्य प्रतिज्ञाते वधे कर्णेन संयुगे ।
पातितांश्चाप्यमन्यन्त पाण्डवान् धृतराष्ट्रजाः ॥ १७

[1]तत्र प्रतिज्ञामारुह्य सूतपुत्रेण भाषिते ।
दुर्योधनोऽथ राजेन्द्र विसृज्य नरपुङ्गवान् ॥ १८

प्रविवेश गृहं राजन् यथा चैत्ररथं तथा ।
तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ॥ १९

स्वानि स्वानि महाराज भीष्मद्रोणादयो नृप ।
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ॥ २०
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ २०॥

भूयश्चारैर्नृपश्रेष्ठ प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ २१॥

---

1. ख—इदमर्धं नास्ति

एतच्छ्रुत्वा धर्मराजस्स समुद्विग्नो नराधिपः ।
अधोमुखश्चिरं तस्थौ किं कार्यमिति चिन्तयन् ॥ २२॥

अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ।
अनुस्मरन् सुसङ्क्लेशान् न शान्तिमुपजग्मिवान् ॥ २३॥

तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं सरः ॥ २४॥

धार्तराष्ट्रो नरपतिः प्रशशास वसुन्धराम् ।
भ्रातृभिस्सहितो वीरैर् भीष्मद्रोणकृपैस्तथा ॥ २५॥

सङ्गम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
सततं प्रीयमाणो वै देविना सौबलेन च ॥ २६॥

दुर्योधनः प्रिये नित्यं वर्तमानो महीपतेः ।
पूजयामास विप्रेन्द्रान् क्रतुभिर्भूरिदक्षिणैः ॥ २७॥

भ्रातृणां च प्रियं राजन् स चकार परन्तपः ।
निश्चित्य मनसा राजन् दत्तभुक्तफलं धनम् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

॥ ४० ॥ प्रायोपवेशनपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये २८॥ श्लोकाः ]

---

## ॥ त्रयोदशाधिकद्विशततमोऽध्यायः ॥

पाण्डवनिहतभूयिष्ठैर्मृगैर्युधिष्ठिरं प्रति स्वप्ने स्थानान्तरगमनेन स्वकुशलशेषीकरणप्रार्थना ॥ १ ॥ युधिष्ठिरेण भ्रातृषु स्वीयस्वप्नदर्शनकथनपूर्वकं पुनः काम्यकवनं प्रति गमनम् ॥ २ ॥

जनमेजयः—

दुर्योधनं मोचयित्वा पाण्डुपुत्रा महारथाः ।
किमकार्षुर्वने तस्मिंस् तन्ममाख्यातुमर्हसि ॥ १

वैशम्पायनः—

ततश्शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।
[1]सुप्तं ते दर्शयामासुर् बाष्पकण्ठा युधिष्ठिरम् ॥ २
तानब्रवीत् स राजेन्द्रो वेपमानान् कृताञ्जलीन् ॥ २॥

युधिष्ठिरः—

ब्रूत यद्वक्तुकामास्थ तत् करिष्याम्यशेषतः ॥ ३

वैशम्पायनः—

एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन् मृगास्तत्र हतशेषा युधिष्ठिरम् ॥ ४

मृगाः—

वयं मृगा द्वैतवने हतशेषास्स्म भारत ।
नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ५

1. क—सुप्तान्ते ; ख—स्वप्नान्ते

भवन्तो भ्रातरश्शूरास् सर्वे एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ६
बीजभूता वयं केचिद् अवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात् ते युधिष्ठिर ॥ ७

वैशम्पायनः—

तान् वेपमानान् वित्रस्तान् बीजमात्रावशेषितान् ।
मृगान् दृष्ट्वा सुदुःखार्तान् हृतराष्ट्रो युधिष्ठिरः ॥ ८
[1]स तथैवाब्रवीद्राजा सर्वभूतहिते रतः ॥ ८॥

युधिष्ठिरः—

तथ्यं भवन्तो ब्रुवते तत् करिष्यामि वो वचः ॥ ९

वैशम्पायनः—

इत्येवं प्रतिबुद्धस्सन् शिष्टायां निशि पार्थिवः ।
अब्रवीत् सहितान् भ्रातॄन् दयापन्नो मृगान् प्रति ॥ १०

युधिष्ठिरः—

उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हृतशेषितैः ।
[2]तत्र श्रान्तास्स्म भद्रं ते दया नः क्रियतामिति ॥ ११
ते सत्यमाहुः कर्तव्यं दयाऽस्माभिर्वनौकसाम् ।
[3]हृष्टं मांसं वने हर्षाद् यदेतद्वै सरः प्रति ॥ १२

---

1. ब—अर्धचतुष्टयं नास्ति
2. क-ख—भूतास्स्म  ब—स्यत्यजास्स्म
3. क—हृतमांसं × यदेतदुपययुक्षाहि  ख—इदमर्धं नास्ति
   घ—हृष्ट। मांसवने वर्षः

अर्जुनः—

[1]त्वदधीना वयं राजन् मा त्वमस्मान् विचारय ।
यत्रैव मन्यसे पार्थ तत्र गच्छामहेवयम् ॥ १३

युधिष्ठिरः—

पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम् ।
मरुभूश्शिखरं ख्यातं तृणबिन्दुसरः प्रति ॥ १४
तत्र मांसान् वने शिष्टान् विचिन्वन्तो रमेमहि ॥ १४॥

वैशम्पायनः—

इत्युक्तास्ते महात्मानः पाण्डवेन महात्मना ।
ब्राह्मणैस्सहिता राजन् जग्मुस्तत्र सहोषितैः ॥ १५॥
इन्द्रसेनादिभिश्चैव भृत्यैरनुगताश्च ते ॥ १६
ते यात्वा तु रथैर्मार्गैश् शनैश्शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यम् आश्रमं तापसान्वितम् ॥ १७
ददृशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तथा ।
तद्वनं भरतश्रेष्ठास् स्वर्गं सुकृतिनो यथा ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥
॥ ४० ॥ प्रायोपवेशनपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये १८ श्लोकाः]

[प्रायोपवेशनपर्व समाप्तम्]

---

1. अ-ब—अर्धचतुष्टयं नास्ति

## ॥ चतुर्दशाधिकद्विशततमोऽध्यायः ॥

( व्रीहिद्रौणिकपर्व )

कदाचन काम्यकवनवासिनः पाण्डवानुपागतेन व्यासेन युधिष्ठिरं प्रति दानप्रशंसनम् ॥

वैशम्पायनः—

वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ १

फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।
प्राप्तकालमनु[1]प्राप्तास् तेरुस्तत् पुरुषर्षभाः ॥ २

युधिष्ठिरस्तु राजर्षिर् आत्मकर्मापराधजम् ।
अचिन्तयन् महाबाहुर् भ्रातॄणां दुःखमुत्तमम् ॥ ३

न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितः ।
दौरात्म्यमनुपश्यंस्तत् काले द्यूतोद्भवस्य हि ॥ ४

संस्मरन् परुषा वाचस् सूतपुत्रस्य पाण्डवः ।
निश्श्वासपरमो दीनो दध्रे कोपविषं महत् ॥ ५

अर्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी ।
स च भीमो महातेजास् सर्वेषामुत्तमो बले ॥ ६

1. ख—व्याप्तः सेहुरुत्तमपूरुषाः ।

चिरस्य जातं धर्मज्ञं सासूयमिव ते तदा ।
युधिष्ठिरमुदीक्षन्तस् सेहुर्दुःखमनुत्तमम् ॥ ७
अवशिष्टम् अल्पकालं मन्वानाः पुरुषर्षभाः ॥ ७॥
[1]कस्यचित्त्वथ कालस्य व्यासस्सत्यवतीसुतः ।
आजगाम महायोगी पाण्डवानवलोककः ॥ ८॥
तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ॥ ९॥
तमासीनमुपासीनश् शुश्रूषुर्नियतेन्द्रियः ।
तोषयन् प्रणिपातेन व्यासं पाण्डवनन्दनः ॥ १०॥
तान् प्रेक्ष्य च कृशान् पौत्रान् वने वन्येन जीवतः ।
महर्षिरनुकम्पार्थम् अब्रवीद्बाष्पगद्गदम् ॥* ११॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥
॥ ४१ ॥ श्रीह्रिद्रौणिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ११॥ श्लोकाः]

---

1. ख—वपुरम्यदिवाकार्षुंल्लसाह्वामर्षचेष्टितैः । [अधिकः पाठः]
* सर्वेषु कोशेषु नास्त्याध्यायसमाप्तिर्दृश्यते

## ॥ पञ्चदशाधिकद्विशततमोऽध्यायः ॥

युधिष्ठिरं प्रति दानप्रशंसनम् ॥

व्यासः—

युधिष्ठिर महाबाहो शृणु धर्मभृतां वर ।
नातप्ततपसो लोके प्राप्नुवन्ति महत् फलम् ॥ १
सुखदुःखे हि पुरुषः पर्यायेण हि सेवते ।
नात्यन्तमसुखं कश्चित् प्राप्नोति भरतर्षभ ॥ २
[1]प्रज्ञावांस्त्वेव पुरुषस् संयुक्तः परया धिया ।
उदयास्तमयज्ञो हि न शोचति न हृष्यति ॥ ३
सुखमापतितं स्नेहाद् दुःखमापतितं सहेत् ।
कालं प्राप्तमुपासीत सस्यानामिव कर्षकः ॥ ४
तपसो हि परं नास्ति तपसा विन्दते महत् ।
नासाध्यं तपसः किञ्चिद् इति बुध्यस्व भारत ॥ ५
सत्यमार्जवमक्रोधस् संविभागो दमश्शमः ।
अनसूयाऽप्यहिंसा च शौचमिन्द्रियनिग्रहः ॥ ६
साधनानि महाराज नराणां पुण्यकर्मणाम् ॥ ६॥
अधर्मरुचयो मूढास् तिर्यग्गतिपरायणाः ।

1. ख—श्लोकार्धं नास्ति

कृच्छ्रां योनिमनुप्राप्य सुखं विन्दन्ति नो जनाः ॥ ७॥
इह यत् क्रियते कर्म तत् परत्रोपभुज्यते ॥ ८
तस्माच्छरीरं युञ्जीत तपसा नियमेन च ।
यथाशक्ति प्रयच्छेच्च सम्पूज्याभिप्रणम्य च ॥ ९
काले प्राप्ते च हृष्टात्मा राजा विगतमत्सरः ।
सत्यवादी लभेतायुर् अनायासमथार्जवम् ॥ १०
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् ।
दान्तश्शमपरश्शश्वत् परिक्लेशं न विन्दति ॥ ११
न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम् ॥ ११॥
[1]संविभक्ता च दाता च भोगवांश्च सुखी नरः ।
भवत्यहिंसकश्चैव परमारोग्यसंयुतः ॥ १२॥
[2]मान्यान् मानयिता जन्म कुले महति विन्दति ।
व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः ॥ १३॥
[3]विन्दते सुखमत्यन्तम् इह लोके परत्र च ।
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा ॥ १४॥
प्रादुर्भवति तद्योगात् कल्याणमतिरे सति ॥ १५

युधिष्ठिरः—

भगवन् दानधर्माणां तपसो वा महामुने ।

---

1. ख—इदमर्धं नास्ति 2. अ—नास्तीदमर्धम्
3. ख—नास्तीदमर्धम्

किंस्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते ॥ १६

व्यासः—

दानान्न दुष्करतरं पृथिव्यामस्ति किञ्चन ।
अर्थेषु महती तृष्णा स च दुःखेन लभ्यते ॥ १७

परित्यज्य प्रियान् प्राणान् धनार्थे दुर्गमं स्थलम् ।
[1]प्रविशन्ति महावीराश् चार्थार्थे सकला भुवि ॥ १८

तथैव प्रतिपद्यन्ते समुद्रमटवीं तथा ॥ १८॥

कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः ।
पुरुषाः प्रेक्ष्य तानेके निर्गच्छन्ति धनार्थिनः ॥ १९॥

तस्य दुःखार्जितस्यैव परित्यागो हि दुष्करः ।
न दुष्करतरं दानात् तस्माद्दानं गतं मम ॥ २०॥

विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम् ।
पात्रे काले च देशे च प्रयतः प्रतिपादयेत् ॥ २१॥

अन्यायात् समुपात्तेन दानधर्मो धनेन यः ।
करोति न स कर्तारं त्रायते महतो भयात् ॥ २२॥

न्यायार्जितं स्वल्पमपि काले दत्तं युधिष्ठिर ।
मनसा सुविशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ २३॥

---

1. ख—इदमर्धं नास्ति

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
व्रीहिद्रोणपरित्यागाद् यत् फलं प्राप मुद्गलः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥
॥ ४१ ॥ व्रीहिद्रौणिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ षोडशाधिकद्विशततमोऽध्यायः ॥

---

मुद्गलचित्तपरीक्षणाय दुर्वाससा षट्कृत्वो याचनेऽप्यविकृतमनसा तेन तदा तदाऽन्नदानेन तत्तोषणम् ॥ १ ॥ तन्महिम्ना सविमानेन देवदूतेन सशरीरस्यैव मुद्गलस्य स्वर्गप्रत्याह्वानम् ॥ २ ॥ मुद्गलेन तं प्रति स्वर्गस्वरूप-निरूपणप्रार्थना ॥ ३ ॥

---

युधिष्ठिरः—

व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन् विधिना केन चात्थ मे ॥ १

प्रीत्या धर्मो हि भगवान् यस्य तुष्टो हि कर्मभिः ।
सफलं तस्य जन्मेति मन्ये सद्धर्मचारिणः ॥ २

व्यासः—

सिलोञ्छवृत्तिर्धर्मात्मा मुद्गलस्संयतेन्द्रियः ।
आसीद्राजन् कुरुक्षेत्रे सत्यवागनसूयकः ॥ ३

अतिथिव्रतः क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टकृतं नाम समुपास्ते महातपाः ॥ ४

सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ ५

दर्शं च पौर्णमासं च [1]कुरुते गतमत्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ६

तदेन्द्रस्सहितो देवैस् साक्षात् त्रिभुवनेश्वरः ।
प्रत्यगृह्णान्महाराज भागं पर्वणि पर्वणि ॥ ७

सर्वकालेषु भागं तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ८

व्रीहिद्रोणस्य तत्प्रीत्या ददतोऽन्नं महात्मनः ।
शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ॥ ९

[2]तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां महात्मनाम् ॥ ९॥

मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमिच्छति ॥ १०

तं तु शुद्धं स धर्मिष्ठं मुद्गलं संयतेन्द्रियम् ।
दुर्वासा नृप दिग्वासास् तमथाभ्याजगाम ह ॥ ११

बिभ्रच्चानियतं वेषम् उन्मत्त इव पाण्डव ।

---

1. क—कुर्वीत कृत ; ख—कुर्वन् विगत ; घ—कुर्वीत गत
2. ख—इदमर्धं नास्ति

विकचः परुषा वाचो व्याहरन् विविधा मुनिः ॥ १२

अभिगम्याथ तं देशम् उवाच मुनिसत्तमः ॥ १२॥

दुर्वासाः—

अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम ॥ १३

वैशम्पायनः—

स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत ।

पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् ॥ १४

प्रादात् स तपसोपात्तं क्षुधितायातिथिप्रियः ।

उन्मत्ताय परां श्रद्धाम् आस्थाय सुधृतव्रतः ॥ १५

ततस्तदन्नं रसवत् स एव क्षुधयार्दितः ।

[1]बुभुजे कृत्स्नमुन्मत्तः प्रादात् तस्मै स मुद्गलः ॥ १६

भुक्त्वाऽथान्नं ततस्सर्वम् उच्छिष्टेनात्मनस्ततः ।

[2]अथाङ्गं लिलिपेऽङ्गानि जगाम च यथागतम् ॥ १७

एवं द्वितीये सम्प्राप्ते पर्वकाले मनीषिणः ।

आगम्य बुभुजे सर्वम् अन्नमुञ्छोपजीविनः ॥ १८

निराहारस्तु स मुनिर् उञ्छमार्जयते पुनः ।

न चैनं विक्रियां नेतुम् अशकन्मुद्गलं क्षुधा ॥ १९

न क्रोधो न च मात्सर्यं नावमानो न सम्भ्रमः ।

1. ख—इदमर्धं नास्ति 2. क-ख-ग—अथातु

सपुत्रदारमुञ्छन्तम् आविवेश द्विजोत्तमम् ॥ २०
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः ॥ २१
न चास्य मनसः कश्चिद् विकारो दृश्यते मुनेः ।
[1]शुद्धसत्त्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ २२
तमुवाच ततः प्रीतस् स मुनिर्मुद्गलं तदा ॥ २२॥

दुर्वासाः—

त्वत्समो नास्ति लोकेऽस्मिन् दाता मात्सर्यवर्जितः ॥ २३
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
विषयानुसारिणी जिह्वा क्षीरत्वेव रसं प्रति ॥ २४
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।
मनसश्चेन्द्रियाणां च ऐकाग्र्यं निश्चितं तपः ॥ २५
श्रमेणोपार्जितं दुःखं न च दुःखेन चेतसा ।
तत् सर्वं भवता साधो यथावदुपपादितम् ॥ २६
प्रीतोऽस्म्यनुगृहीतोऽस्मि समेत्य भवता सह ।
पावनं परमं मन्ये दर्शनं ते महामुने ॥ २७
इन्द्रियाभिजयो धैर्यं संविभागो दमश्शमः ।
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ २८

---

1. अ-ध—पञ्चदशार्धानि न सन्ति

विशुद्धसत्त्वसम्पन्नो न त्वदन्योऽस्ति कश्चन ।
जितास्ते कर्मभिर्लोकाः प्राप्तोऽसि परमां गतिम् ॥ २९

[1]अहोऽद्य दानं घुष्टं ते सुमहत् स्वर्गवासिभिः ।
सशरीरो भवान् गन्ता स्वर्गं सुचरितव्रतः ॥ ३०

वैशम्पायनः—

इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्यपद्यत ॥ ३१

[2]हंससारसयुक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धयुता तथा ॥ ३२

उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ॥ ३२॥

देवदूतः—

समुपारोह संसिद्धिं प्राप्तोऽसि परमां गतिम् ॥ ३३

वैशम्पायनः—

तमेवंवादिनमृषिर् देवदूतमुवाच ह ॥ ३३॥

मुद्गलः—

इच्छामि भवता प्रोक्तान् गुणान् स्वर्गनिवासिनाम् ॥ ३४

के गुणास्तत्र वसतां किं तपः कश्च निश्चयः ।
स्वर्गे तत्र सुखं किञ्चिद् दोषो वा देवदूतक ॥ ३५

1. घ—अर्धषट्कं नास्ति 2. अ-व—अर्धद्वयं नास्ति

सतां साप्तपदं मित्रम् आहुस्सन्तः कुलोचिताः ।
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं प्रभो ॥ ३६

यदत्र तथ्यं पथ्यं च तद्ब्रूहि त्वं विचारयन् ।
श्रुत्वा तदा करिष्यामि व्यवसायं गिरा तव ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥
॥ ४१ ॥ व्रीहिद्रौणिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ३७ श्लोकाः ]

---

## ॥ सप्तदशाधिकद्विशततमोऽध्यायः ॥

---

देवदूतात्स्वर्गसुखस्यास्थिरतां परिजानता मुद्गलेन स्वर्गानभिरोचनपूर्वकं देवदूतस्य स्वर्गं प्रति प्रस्थापनम् ॥ १ ॥ व्यासेन युधिष्ठिरं प्रति मुद्गलोपाख्यानकथनपूर्वकं स्वाश्रमं प्रति गमनम् ॥ २ ॥

---

देवदूतः—

महर्षेऽकार्यबुद्धिस्त्वं यत् स्वर्गसुखमुत्तमम् ।
सम्प्राप्तं प्रतिपत्तव्यं विमृशस्यबुधो यथा ॥ १

उपरिष्टादयं लोको योऽयं स्वरिति संज्ञितः ।
ऊर्ध्वगस्सत्पथश्शश्वद् देवयानचरो मुने ॥ २

नातप्ततपसः पुंसो नामहायज्ञयाजिनः ।
नानृता नास्तिकाश्चैव तत्र गच्छान्ति मुद्गल ॥ ३

धर्मात्मानो महात्मानश् शान्ता दान्ता विमत्सराः ।
दानधर्मरताः पुंसश् शूराश्च कृतलक्षणाः ॥ ४

तत्र गच्छन्ति धर्माग्र्यं कृत्वा शमदमात्मकम् ।
लोकान् पुण्यकृतां ब्रह्मन् सद्भिरासेवितान् नृभिः ॥ ५
देवास्साध्यादयो विश्वे मुनयश्च महर्षिभिः ॥
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ॥ ६
एषां देवनिकायानां पृथक् पृथगनेकशः ।
भास्वन्तः कामसम्पन्ना लोकास्तेजोमयाश्शुभाः ॥ ७
त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः ।
मेरुः पर्वतराड्यत्र देवोद्यानानि मुद्गल ॥ ८
नन्दनादीनि चत्वारि विहाराः पुण्यकर्मणाम् ।
न क्षुत्पिपासे न ग्लानिर् न शीतोष्णौ भयं तथा ॥ ९
बीभत्सं वा शुभं वाऽपि रोगो वा तत्र कश्चन ।
मनोज्ञास्सर्वशो गन्धास् सुखस्पर्शाश्च वायवः ॥ १०
शब्दश्श्रुतिमनोग्राह्यस् तत्र तत्रास वै मुने ।
[1]न शोको न जरा तत्र नायासपरिदेवने ॥ ११
ईदृशस्समुने लोकस् स्वकर्मफलहेतुकः ।
[2]सुकृतैस्तत्र पुरुषास् सम्भवन्त्यात्मकर्मभिः ॥ १२

---

1. अ-घ—सप्तार्धानि न सन्ति  2. ख—इदमर्धं नास्ति

तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम् ।
[1]कर्मजान्येव मौद्गल्य न मातृपितृजान्युत ॥ १३

न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ।
तेषां न च रजोवस्त्रं बाधते तत्र वै मुने ॥ १४

न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः ।
समूह्यन्ते विमानैश्च ब्रह्मन्नेवंविधाश्च ते ॥ १५

ईर्ष्याशोकसमापेता मोहमात्सर्यवर्जिताः ।
सुखं स्वर्गजितस्तत्र वर्तयन्ति महामुने ॥ १६

तेषां तथाविधानां तु लोकानां मुनिपुङ्गव ।
उपर्युपरि शक्रस्य लोको दिव्यगुणान्वितः ॥ १७

पुरस्ताद् ब्रह्मणस्तस्य लोकस्तेजोमयश्शुभः ।
यत्र यान्त्यृषयो ब्रह्मन् पूतास्स्वैः कर्मभिश्शुभैः ॥ १८

ऋभवो नाम तत्रान्ये देवानामपि देवताः ।
[2]तेषां लोकाः परतरे यान् यजन्तीह देवताः ॥ १९

स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे ।
न तेषां स्त्रीकृतस्तापो न भोगैश्वर्यमत्सरः ॥ २०

[3]न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजिनः ।

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः ॥ २१

नासुखास्सुखकामाश्च देवदेवास्सनातनाः ।
न कल्पे परिवर्तन्ते परिवर्तन्ति ते तथा ॥ २२

[1]जरा मृत्युकृतं तेषां हर्षः प्रीतिस्सुखं न च ।
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने ॥ २३

देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा ।
दुष्प्रापा परमा सिद्धिर् अगम्या कामगोचरैः ॥ २४

त्रयस्त्रिंशदिमे लोकाः येषां लोके मनीषिभिः ।
गम्यन्ते नियमैश्श्रेष्ठैर् दानैर्वा विधिपूर्वकैः ॥ २५

सेयं दानवतां व्युष्टिर् अनुप्राप्ता सुखावहा ।
तां भुङ्क्ष्व सुकृतैर्लब्ध्वा तपसा मोदितप्रभः ॥ २६

एतत् स्वर्गसुखं विप्र लोका नानाविधास्तथा ।
गुणास्स्वर्गस्य चोक्तास्ते दोषानपि निबोध मे ॥ २७

कृतस्य कर्मणश्चात्र भुज्यते यत् फलं दिवि ।
न चान्यत् क्रियते कर्म मूलच्छेदेन भुञ्जते ॥ २८

सोऽत्र दोषो मम मतस् तस्यान्ते पतनं च यत् ।
[2]सुखप्राप्तमनस्कानां पतनं यच्च मुद्गल ॥ २९

---

1. ख—रागद्वेषौ कुतो मुने मध्ये अर्धं नास्ति
2. ख—अर्धमयं नास्ति

असन्तोषः परीतापो दृष्ट्वा परगतां श्रियम् ।
यद्भवत्यतुले स्थाने स्थितानां तच्च दुष्कृतम् ॥ ३०
संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ।
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ॥ ३१
आब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ।
नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम् ॥ ३२
अयं त्वन्यो गुणश्श्रेष्ठश्च्युतानां स्वर्गतो मुने ।
शुभानुशययोगेन मनुष्येष्वेव जायते ॥ ३३
[1]तत्रापि स महाभागः कुले महति जायते ।
न चेत् सम्बुध्यते तत्र गच्छत्यधमतां ततः ॥ ३४
इह यत् क्रियते कर्म तत् परत्रोपभुज्यते ।
कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता ॥ ३५
एतत् ते सर्वमाख्यातं यन्मां पृच्छसि मुद्गल ।
तवानुकम्पया साधो साधु गच्छाम माचिरम् ॥ ३६

व्यासः—

एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं सर्वमशेषतः ।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह ॥ ३७

मौद्गल्यः—

देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम् ।

1. ख—इदमर्धद्वयं नास्ति

महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ॥ ३८

पतनान्तं महादुःखं परितापस्सुदारुणः ।
स्वर्गभाजः पतन्तीह तस्मात् स्वर्गं न कामये ॥ ३९

यत्र गत्वा न शोचन्ति न च्यवन्ति पतन्त्युत ।
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ॥ ४०

व्यासः—

इत्युक्त्वा स मुनिर्वाक्यैर् देवदूतं विसृज्य तम् ।
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ॥ ४१

तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः ।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ४२

ध्यानयोगबलं लब्ध्वा प्राप्य बुद्धिमनुत्तमाम् ।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥ ४३

तस्मात् त्वमपि कौन्तेय न शोकं कर्तुमर्हसि ।
[1]राज्यात् स्फीतात् परिभ्रष्टस् तपसा तदवाप्स्यसि ॥ ४४

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणावगच्छन्ति नरं नेमिमरा इव ॥ ४५

पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम ।
वर्षात् त्रयोदशादूर्ध्वं व्येतु ते मानसो ज्वरः ॥ ४६

1. ख—अर्धमिदं नास्ति

वैशम्पायनः—

एवमुक्त्वा तु भगवान् व्यासः पाण्डवनन्दनम् ।
जगाम तपसे धीमान् पुनरेवाश्रमं प्रति ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥
॥ ४१ ॥ व्रीहिद्रौणिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]
[समाप्तं व्रीहिद्रौणिकपर्वं]

---

## ॥ अष्टादशाधिकद्विशततमोऽध्यायः ॥

(द्रौपदीहरणपर्वं)

पञ्चस्वपि पाण्डवेषु मृगयार्थं गतेषु सपरिजनेन सैन्धवेन मार्गवशात्तदाश्रमाभिगमनम् ॥ १ ॥ तत्र द्रौपदीदर्शनक्षुभितहृदा जयद्रथेन तत्तत्त्वजिज्ञासया तन्निकटं प्रति कोटिकाश्यस्य प्रेषणम् ॥ २ ॥

---

वैशम्पायनः—

तस्मिन् बहुमृगेऽरण्ये रममाणा महारथाः ।
काम्यके भरतश्रेष्ठ महात्मानो महाबलाः ॥ १

प्रेक्षमाणा बहुविधान् वनोद्देशान् समन्ततः ।
यथर्तुकालरम्याश्च वनराजीस्सुपुष्पिताः ॥ २

पाण्डवा मृगयाशीलाश् चरन्तस्तन्महद्वनम् ।
विजह्रुरिन्द्रप्रतिमाः कालं [1]शिष्टमरिंदमाः ॥ ३

---

1. क—दस म—कालदस ख—कञ्चित्कालं

ततस्ते यौगपद्येन ययुस्सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ४
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ५
ततस्स राजा सिंधूनां वार्धक्षत्रिर्महायशाः ।
कर्तुं विवाहं साल्वेयान् प्रयातोऽथागमत् तदा ॥ ६
महता परिबर्हेण राजयोग्येन संवृतः ।
राजभिर्बहुभिस्सार्धम् उपायात् काम्यकं वनम् ॥ ७
तत्रापश्यत् प्रियां भार्यां पाण्डवानां यशस्विनीम् ।
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ८
विभ्राजमानां वपुषा बिभ्रन्तीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ९
अप्सरा देवकन्या वा माया वा देवनिर्मिता ।
इति कृत्वाञ्जलिं सर्वे ददृशुस्तामनिन्दिताम् ॥ १०
ततस्स राजा सिन्धूनां वार्धक्षत्रिर्जयद्रथः ।
विस्मितस्तामनिन्द्याङ्गीं दृष्ट्वाऽऽसीद् दुष्टमानसः ॥ ११
स कोटिकाश्यं राजानम् अब्रवीत् काममोहितः ॥ ११॥

जयद्रथः—

कस्य कैषाऽप्यनिन्द्याङ्गीं यदि वाऽपि न मानुषी ।

विवाहेच्छा न मे काचिद् इमां दृष्ट्वाऽतिसुन्दरीम् ॥ १२॥

[1]एतामेवाहमादाय गमिष्यामि स्वमालयम् ॥ १३

गच्छ जानीहि सौम्येमां कस्य का च कुतोऽपि वा ।

किमर्थमागता सुभ्रूर् इदं कण्टकितं वनम् ॥ १४

अपि नाम वरारोहा मामेषा लोकसुन्दरी ।

भजेदद्यायतापाङ्गी सुदती तनुमध्यमा ॥ १५

अप्यहं कृतकामस्स्याम् इमां प्राप्य वरस्त्रियम् ।

गच्छ जानीहि को वाऽस्या नाथस्सम्यग्विचारय ॥ १६

वैशम्पायनः—

स कोटिकाश्यस्तच्छ्रुत्वा मैत्र्या प्रस्कन्द्य तद्रथात् ।

उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ॥ १७

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ]

---

1. अ-क-व—पद्यार्धानि न सन्ति

## ॥ एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥

अथ जयद्रथचोदनया कोटिकाश्येन द्रौपदीं प्रति तत्पितृभर्तृकुलादिप्रश्नः॥

कोटिकाश्यः—

का त्वं कदम्बस्य विनम्य शाखां
किमाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाऽग्निशिखेव नक्तं
व्याधूयमाना पवनेन सुभ्रूः ॥ १
अतीव रूपेण समन्विता त्वं
न चाप्यरण्ये तु बिभेषि का नु ।
देवी नु यक्षी यदि मानुषी वा
वराप्सरा दैत्यवराङ्गना वा ॥ २
वपुष्मती चोरगराजकन्या
वनेचरा वा क्षणदाचरस्त्री ।
यद्येव राज्ञो वरुणस्य पत्नी
यमस्य सोमस्य धनेश्वरस्य ॥ ३
धातुर्विधातुस्सवितुर्विभोर्वा
शक्रस्य वा त्वं सदनात् प्रपन्ना ।
न ह्येव नः पृच्छसि ये वयं स्म
न चापि जानीम तवेह नाथम् ॥ ४

वयं हि मानं तव वर्धयन्तः
पृच्छाम भद्रे प्रभवं भुवं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च
यच्चेह किं वाऽद्य करोषि कार्यम् ॥ ५

अहं तु राज्ञस्सुबलस्य पुत्रो
यं कोटिकाश्येति विदुर्मनुष्याः ।
[1]वश्येन्द्रियस्सभ्यरुचिर्वरोरु
वृद्धोपसेवी गुरुपूजकश्च ॥ ६

अथो नु यस्तिष्ठति काञ्चनाङ्गे
यथा हुतोऽग्निश्चयने तथैव ।
त्रिगर्तराजः कमलायताक्षि
क्षेमङ्करो नाम क एष वीरः ॥ ७

अस्मात् परस्त्वेष महाधनुष्मान्
पुत्रः कुणिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायतांसो
भुवि स्थितः पर्वतवासनित्यः ॥ ८

असौ तु यः पुष्करिणीसमीपे
श्यामो युवा तिष्ठति दर्शनीयः ।

---

1. ख—इदमर्धं नास्ति

इक्ष्वाकुराजस्सुबलस्य पुत्रस्
स एव हन्ता द्विषतां सुगात्रः ॥ ९
यस्यानुचक्रं स्वजनाः प्रयान्ति
सौवीरका द्वादशराजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे
मखेषु दीप्ता इव हव्यवाहाः ॥ १०
अङ्गारकः कुञ्जरगुप्तकौ च
शत्रुञ्जयस्सञ्जयसुप्रवृद्धौ ।
भयङ्करोऽथ भ्रमरो रविश्च
शूरः प्रतापः कुहकश्च नाम्ना ॥ ११
यं षट्सहस्रा रथिनोऽनुयान्ति
नागा हयाश्चैव पदातयश्च ।
जयद्रथो नाम यदि श्रुतस्ते
सौवीरराजस्सुभगे स एषः ॥ १२
तस्यापरे भ्रातरोऽदीनसत्त्वा
बलाहकामित्रविदारणाद्याः ।
सौवीरवीराः प्रवरा युवानो
राजानमेते बलिनोऽनुयान्ति ॥ १३
एतैस्सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।

सा जानती ख्यापय नस्सुकेशि
　　कस्याथ भार्या दुहिता च कस्य ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये १४ श्लोकाः ]

---

## ॥ विंशत्यधिकद्विशततमोऽध्यायः ॥

कोटिकाश्यं प्रति द्रौपद्या जननादिस्वीयवृत्तान्तकथनम् ॥

---

वैशम्पायनः—

अथाब्रवीद् राजपुत्री तदानीं
　　पृष्टा शिबीनामृषभेण तेन ।
अवेक्ष्य मन्दं प्रतिमुच्य शाखां
　　[1]सङ्गृह्णती कौशिकमुत्तरीयम् ॥ १

द्रौपदी—

अद्याभिजानीहि नरेन्द्रपुत्र
　　न मादृशी त्वां प्रतिवक्तुमर्हसि ।
न त्वेह वक्ता हि न तेऽद्य वाक्यम्
　　अन्यो नरो वाऽप्यथवाऽपि नारी ॥ २

---

1. क-ब—सङ्गृह्य सा

एका ह्यहं सम्प्रति तेन चाहं
  ददानि ते भद्र निबोध चेदम् ।
अहं ह्यरण्ये कथमेवमेका
  त्वामालपन् निश्चयतस्त्वधर्मे ॥ ३
जानाम्यहं त्वां सुरथस्य पुत्रं
  यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्यम्
  आख्यामि बन्धुप्रतिमं निबोध ॥ ४
अपत्यमस्मि द्रुपदस्य राज्ञः
  कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साऽहं वृणे पञ्च जनान् पतित्वे
  ये खाण्डवप्रस्थगताश्श्रुतास्ते ॥ ५
युधिष्ठिरो भीमसेनार्जुनौ च
  माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्येह दिशश्चतस्रो
  विभज्य पार्था मृगयां प्रयाताः ॥ ६
प्राचीं राजा दक्षिणां भीमसेनो
  जयः प्रतीचीं च यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां
  कालोऽतीतः प्राप्त इहोपयातुम् ॥ ७

सम्मानिता यास्यथ तैर्यथेष्टं
विमुच्य वाहानवगाहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा
प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ८

वैशम्पायनः—
एतावदुक्त्वा द्रुपदात्मजा तु
शैब्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णकुटीं प्रशस्तां
सञ्चिन्त्य तेषामतिथिस्वधर्मम् ॥ ९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ९ श्लोकाः ]

## ॥ एकविंशत्यधिकद्विशततमोऽध्यायः ॥

कोटिकाख्याद्द्रौपदीतत्त्वं विदितवता जयद्रथेन द्रौपदीमेत्य स्वभार्यात्वयाचना ॥

वैशम्पायनः—
तथा वनेषु सर्वेषु तेषु राजसु भारत ।
[1]कोटिकाश्यवचश्श्रोतुं शैब्यं सौवीरकोऽब्रवीत् ॥ १

1. ख—कोटिकाख्यो जगामाशु सिन्धुराजनिवेशनम् । [अधिकः पाठः]

सौवीरकः—

यदि वाचं व्याहरन्त्याम् अस्यां मे रमते मनः ।
सीमन्तिनीनां मुख्यायां विनिवृत्तः कुतो भवान् ॥ २

एतां दृष्ट्वा स्त्रियं मन्ये यथा शाखामृगस्त्रियम् ।
प्रतिभाति महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ३

दर्शनादेव हि मनस् तया मेऽपहृतं भृशम् ।
तां ममाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ॥ ४

कोटिकाख्यः—

एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां सम्मता महिषी भृशम् ॥ ५

[1]सर्वेषां चैव पार्थानां या वै प्रियतमा सती ।
तया समेत्य सौवीर सुवीरान् सुसुखं व्रज ॥ ६

वैशम्पायनः—

एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
नृपस्सौवीरसिन्धूनां दुष्टभावो जयद्रथः ॥ ७

सम्प्रविश्याश्रमं पुण्यं सिंहः क्षुद्रमृगो यथा ।
आत्मना सप्तदशमः कृष्णां वचनमब्रवीत् ॥ ८

जयद्रथः—

कुशलास्ते वरारोहे भर्तारस्तेऽप्यनामयाः ।

---

1. ख—इदमर्धं नास्ति

येषां कुशलकामाऽसि तेषां कच्चिदनामयम् ॥ ९

द्रौपदी—

कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।
अहं च भ्रातरश्चास्य यांश्चान्यान् परिपृच्छसि ॥ १०

अपि त्वं कुशली राजन् सहामात्यस्सहप्रजः ।
अपि ते कुशलं राष्ट्रे तथा कोशे च सैन्धव ॥ ११

कच्चिदेव शिबीन् सर्वान् सौवीरांश्चाप्यकण्टकान्।
अनुतिष्ठसि धर्मेण ये चान्ये विजितास्त्वया ॥ १२

पाद्यं प्रतिगृहाण त्वम् आसनं च नृपात्मज ।
मृगान् हत्वा नृपश्रेष्ठ प्रातराशं ददानि ते ॥ १३

ऐणेयान् पृषतान् न्यङ्कून् हरिणान् शरभान् शशान् ।
ऋक्षान् रुरूंश्च चमरान् गवयांश्च मृगान् बहून् ॥ १४

वराहान् महिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः ॥ १५

जयद्रथः—

कुशलं प्रातराशाय सर्वो मेऽपचितिः कृता ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ १६

हृतश्रीकांश्च्युतान् राज्यात् कृपणान् गतचेतसः ।
अरण्यवासिनः पार्थान् नानुरोद्धुं त्वमर्हसि ॥ १७

नैव प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न श्रियस्सङ्क्षये वसेत् ॥ १८

श्रिया विहीना राज्याच्च च्युतास्ते शाश्वतीस्समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ १९

भार्या मे भव सुश्रोणि त्यजैनान् सुखमाप्नुहि ।
अखिलान् सिन्धुसौवीरान् प्राप्नुहि त्वं मया सह ॥ २०

वैशम्पायनः—

इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।
कृष्णा तस्मादपाक्रामद् देशात् सा भ्रुकुटीमुखी ॥ २१

अवमत्यास्य तद्वाक्यम् आक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत् कृष्णा त्यजस्वेति च सैन्धवम् ॥ २२

सा काङ्क्षमाणा भर्तॄणाम् उपयानमनिन्दिता ।
विलोभयामास परं वाक्यैर्वाक्यान्ययोजयत् ॥ २३

द्रौपदी—

नैवं वद महाबाहो न्याय्यं त्वं न च बुध्यसे ॥ २३॥

पाण्डूनां धार्तराष्ट्राणां स्वसा चैव कनीयसी ।
दुश्शला नाम तस्यास्त्वं भर्ता राजकुलोद्वह ॥ २४॥

मम भ्राता च न्याय्येन त्वया रक्ष्या महारथ ।
धर्मिष्ठानां कुले जातो न धर्मं त्वमवेक्षसे ॥ २५॥

वैशम्पायनः—

इत्युक्तस्सिन्धुराजोऽथ वाक्यमुत्तरमब्रवीत् ॥ २६

जयद्रथः—

राज्ञां धर्मं न जानीषे स्त्रियो रत्नानि चैव हि ।
साधारणानि लोकेऽस्मिन् प्रवदन्ति मनीषिणः ॥ २७

स्वसा च स्वस्रिया चैव भ्रातृभार्या तथैव च ।
न सङ्क्रुह्यन्ति राजानस् ताश्च तत्र नृपोद्भवाः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥

द्रौपद्या स्वाभिलाषिणो जयद्रथस्य गर्हणम् ॥ १ ॥ तथा बलात्स्वव-स्त्रान्तकर्षिणस्तस्याक्षेपादधः पातनपूर्वकं स्वयमेव तद्रथारोहणम् ॥ २ ॥

---

वैशम्पायनः—

सरोषवाचोपहितेन वल्गुना
सरागनेत्रेण नतोन्नतभ्रुवा ।
मुखेन विष्फूर्य सुवीरराष्ट्रपं
ततोऽब्रवीत् तं द्रुपदात्मजा पुनः ॥ १

द्रौपदी—

यशस्विनस्तीक्ष्णविषान् महारथान्
अधिक्षिपन् मूढ न लज्जसे कथम् ।
[1]यमेन कल्पान् निरतान् स्वधर्मे
स्थितान् समूहेष्वपि यक्षरक्षसाम् ॥ २

न किञ्चिदार्याः प्रवदन्ति पापं
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं सम्परिपूर्णविद्यं
वदन्ति चैवं सुनरास्सुवीर ॥ ३

अहं तु मन्ये तव नास्ति कश्चिद्
एतादृशे क्षत्रियसंनिवेशे ।
यस्त्वां हि पातालमुखे पतन्तं
पाणौ गृहीत्वा प्रतिसंहरेत ॥ ४

नागं प्रभिन्नं गिरिकूटकायम्
उपेत्य गां हैमवतं चरन्तम् ।
दण्डीव दण्डेन हि धावसे त्वं
नैनं ममाशंससि धर्मराजम् ॥ ५

बाल्यात् प्रसुप्तस्य महाबलस्य
सिंहस्य पक्ष्माणि मुखाल्लुनासि ।

1. क-ख-ग—यमेन्द्र

पदा समाहत्य पलायमानः
　　क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ॥ ६
महाबलं घोरतरं प्रवृद्धं
　　जातं हरिं पर्वतकन्दरस्थम् ।
प्रसुप्तमुग्रं प्रपदेन हंसि
　　यः क्रुद्धमासेत्स्यसि जिष्णुमुग्रम् ॥ ७
तीक्ष्णोरगौ तीक्ष्णविषौ द्विजिह्वौ
　　मत्तौ पदा क्रामसि पुच्छदेशे ।
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां
　　जघन्यजाभ्यां प्रयुयुत्ससे त्वम् ॥ ८
यथा च वेणुः कदली नलो वा
　　पराभवायैव फलं बिभर्ति ।
तथैव मां तैः परिरक्ष्यमाणाम्
　　आदास्यसे कर्कटकीव गर्भम् ॥ ९

जयद्रथः—
जानामि कृष्णे विदितात्ममैत्रे
　　यथागता द्रौपदि पाण्डुपुत्रान् ।
[1]न त्वेवमेतेन विभीषणेन
　　शक्या वयं त्रासयितुं त्वयाऽद्य ॥ १०

1. अ-स-व—अर्धैतद्यं नास्ति

वयं पुनस्सप्तदशेषु कृष्णे
कुलेषु सर्वेऽनवमेषु जाताः ।
षड्भ्यो गुणेभ्योऽपि हितान् विहीनान्
जन्यामहे द्रौपदि पाण्डुपुत्रान् ॥ ११

सा क्षिप्रमातिष्ठ रथं गजं वा
न वाक्यमात्रेण वयं स्म शक्याः ।
आशंस वाक्यं कृपणं वदन्ती
सौवीरराजस्य पुनः प्रसादम् ॥ १२

द्रौपदी—

महाबला किं त्विह दुर्बला वा
[1]सौवीरराजस्य सुताऽहमस्मि ।
साऽहं प्रसादादिह सम्प्रहीणा
सौवीरराजं कृपणं वदेयम् ॥ १३

यस्या हि कृष्णौ पदवीं चरेतां
समास्थितावेकरथे सहायौ ।
इन्द्रोऽपि तां नापहरेत् कथञ्चित्
मनुष्यमात्रः कृपणः कुतोऽन्यः ॥ १४

सदा किरीटी परवीरघाती
निघ्नन् रथस्थो द्विषतां मनांसि ।

1. क-ख-ग—पाञ्चालराजस्य

मवन्तरे त्वङ्घ्रिजिनीं प्रविष्टः
　　कक्षं दहन्नग्निरिवोष्णगेषु ॥ १५

जनार्दनस्यानुगवृष्णिवीराः
　　महेष्वासाः केकयाश्चैव पञ्च ।
एते हि सर्वे मम राजपुत्राः
　　प्रहृष्टरूपाः पदवीं चरेयुः ॥ १६

मौर्वीविसृष्टास्स्तनयित्नुघोषा
　　गाण्डीवमुक्ता ह्यतिवेलमुग्राः ।
हस्तं समाहत्य धनञ्जयस्य
　　भीमाश्शरा घोरतरा नदन्ति ॥ १७

गाण्डीवमुक्तांश्च महाशरौघान्
　　पतङ्गसङ्घानिव शीघ्रवेगान् ।
[1]सशङ्खघोषांश्च तलत्रघोषान्
　　गाण्डीवधन्वा मुहुरुद्वमंश्च ॥ १८
यदा शरानर्पयिता तवोरसि
　　तदा मनस्ते किमिवाभविष्यत् ॥ १८॥
गदाहस्तं भीममभिद्रवन्तं
　　माद्रीपुत्रौ सम्पतन्तौ हि दृष्ट्वा ।

1. स—द्वयमर्धं नास्ति

अमर्षजं क्रोधविषं वमन्तौ
दृष्ट्वा समन्तादुपवेक्ष्यसेऽथ ॥ १९॥

यथा चाऽहं नातिचरे कदाचित्
पतीन् महार्हान् मनसाऽपि चास्मि ।
तेनाद्य सत्येन वशीकृतं त्वां
द्रक्ष्यामि पार्थैः परिकृष्यमाणम् ॥ २०॥

न सम्भ्रमं गन्तुमहं हि शक्ये
त्वया नृशंसेन च वीक्ष्यमाणा ।
समागताऽहं हि कुरुप्रवीरैः
पुनर्वनं काम्यकमागता च ॥ २१॥

वैशम्पायनः—

सा तं समुत्प्रेक्ष्य विशालनेत्रा
जिघृक्षमाणं परिभर्त्सयन्ती ।
पुरा ह्ययं मां स्पृशतीति मत्वा
धौम्यं प्रचुक्रोश पुरोहितं वै ॥ २२॥

जग्राह तामुत्तरवस्त्रदेशे
जयद्रथस्तां स समाक्षिपच्च ।
तथा समाक्षिप्ततनुस्त्वपापा
पपात शाखीव निकृत्तमूला ॥ २३॥

प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिश्वस्य च राजपुत्री ।
सा मृष्यमाणा रथमारुरोह
धौम्यस्य पादावभिवाद्य कृष्णा ॥ २४॥

धौम्यः—

नेयं शक्या त्वया नेतुम् अवमत्य महारथान् ।
धर्मं क्षत्रस्य पौराणम् अवेक्षस्व जयद्रथ ॥ २५॥

क्षुद्रं खलु नृशंसात्मन् प्राप्स्यसि त्वमसंशयम् ।
आसाद्य पाण्डवान् वीरान् धर्मराजपुरोगमान् ॥ २६॥

वैशम्पायनः—

इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम् ।
अन्वगच्छत् तदा धौम्यः पदातिगणमध्यगः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥

मृगयागतैः पाण्डवैर्दुर्निमित्तदर्शनाद्विपदाशङ्कया सत्वरं स्वाश्रमाभिगमनम् ॥ १ ॥ तदा दास्या द्रौपदीवृत्तान्तावगमेन जयद्रथपथानुगतैस्तदवलोकनेन कोपात्समुत्क्रोशनम् ॥ २ ॥

वैशम्पायनः—

ततो दिशस्सम्परिवृत्य पार्थो
मृगान् वराहान् महिषांश्च हत्वा ।
धनुर्धराश्श्रेष्ठतमाः पृथिव्यां
पृथक् चरन्तस्सहिता बभूवुः ॥ १

ततो मृगव्यालजनानुकीर्णं
महावनं तद्विहगोपजुष्टम् ।
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरश्
श्रुत्वा गिरो व्याहरतां मृगाणाम् ॥ २

युधिष्ठिरः—

आदित्यदीप्तां दिशमभ्युपेत्य
मृगा द्विजाः क्रूरमिमे वदन्ति ।
आयासमुग्रं प्रतिवेदयन्तो
महाभयं शत्रुभिर्वाऽवमानम् ॥ ३

क्षिप्रं निवर्तध्वमलं मृगैर्नो
मनो हि मे दूयति दह्यते च ।

बुद्धिं समाच्छाद्य च मे समन्युर्
उद्धूयते प्राणपतिश्शरीरे ॥ ४
सरस्सुपर्णेन हृतोरगं यथा
अराजकं राष्ट्रमिवेह शान्तम् ।
एवंविधं मे प्रतिभाति काम्यकं
शौण्डैर्यथा पीतसुरश्च कुम्भः ॥ ५

वैशम्पायनः—
ते सैन्धवैर्यैरनिलोद्धवेगैर्
महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिस्सुरथैर्नृवीरास्
तदाश्रमायाभिमुखा बभूवुः ॥ ६
तेषां तु गोमायुरनल्पघोषो
निवर्ततां वाममुपेत्य पार्श्वम् ।
प्रव्याहरत् तत् प्रविमृश्य राजा
प्रोवाच भीमं च धनञ्जयं च ॥ ७

युधिष्ठिरः—
यथा वदत्येष [1]हि हीनयोनिस्
सालावृको वाममुपेत्य पार्श्वम् ।
सुव्यक्तमस्मान् परिभूय पापैः
कृतोऽवमर्दः कुरुभिः प्रसह्य ॥ ८

1. ख—वि; घ—नि

वैशम्पायनः—

ते न्यायतस्तद्वनमाविशन्तो
महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यन्त तदा रुदन्तीं
धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ९

तामिन्द्रसेनस्त्वरितोऽभिसृत्य
रथादवप्लुत्य ततोऽभ्यधावत् ।
प्रोवाच चैनां वचनं नरेन्द्र
धात्रेयिकामार्ततरस्तदानीम् ॥ १०

इन्द्रसेनः—

किं रोदिषि त्वं पतिता धरण्यां
किं ते मुखं शुष्यति दीनवर्णम् ।
गतेष्वरण्यं हि सुतेषु पाण्डोः
कच्चित् परैर्नापकृतं वनेऽस्मिन् ॥ ११

वैशम्पायनः—

पर्याकुला साधु समीक्ष्य सूतम्
अभ्यापतन्तं द्रुतमिन्द्रसेनम् ।
उरो घ्नती कष्टतरं तदानीम्
उच्चैः प्रचुक्रोश हृतेति देवी ॥ १२

इन्द्रसेनः—

अनिन्द्यरूपा तु विशालनेत्रा
शरीरतुल्या कुरुपुङ्गवानाम् ।

केनात्मनाशाय यदा परीता
[1]वनं समासाद्य नरेन्द्रपत्नीम् ॥ १३

यथेह देवीं पृथिवीं प्रविष्टा
दिवं प्रपन्ना ह्यथवा समुद्रम् ।
पदं गमिष्यन्ति हि तस्य पार्थास्
तथा हि सन्तप्यति धर्मराजः ॥ १४

को हीदृशानामरिमर्दनानां
क्लेशक्षमाणामपराजितानाम् ।
प्राणैस्समामिष्टतमां जिहीर्षुर्
अनुत्तमं रत्नमिव प्रमुष्णन् ॥ १५

न बुध्यते नाथवतीमिहाद्य
बहिश्चरं हृदयं पाण्डवानाम् ।
अस्याद्य कायं प्रविभिद्य घोरा
महीं प्रवेक्ष्यन्ति शिताश्शराग्र्याः ॥ १६

1. क—इन्द्रस्समासाद्य नरेन्द्रपत्नी ; ख—छिद्रं समासाद्य नरेन्द्रपत्नी
घ—मितस्समासाद्य नरेन्द्रपत्नी

2. क-ख-घ—मा त्वं शुचस्तां प्रति भीरु विद्धि
यथाऽद्य कृष्णा पुनरेष्यतीति ॥* [अधिकःपाठः]

* ख—निहत्य सर्वान् द्विषतः समग्रान्
पार्थाः समेष्यन्ति च याज्ञसेन्या ॥
अथाब्रवीत् सा तु मुखं प्रमृज्य
धात्रेयिका सारथिमिन्द्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य
पञ्चेन्द्रकल्पान् परिभूय कृष्णा ॥ [अधिकः पाठः]

[a]तिष्ठन्ति पद्मानि नवान्यमूनि
द्रुमाश्च न ग्लान्ति तथैव भग्नाः ।
आवर्तयध्वं ह्यनुयान्तु शीघ्रं
न दूरयातेव हि राजपुत्री ॥ १७
सन्नह्यध्वं सर्व एवेन्द्रकल्पा
महान्ति चारूणि च दंसनानि ।
गृह्णीत चापानि महाधनानि
शरांश्च शीघ्रं पदवीं व्रजध्वम् ॥ १८
पुरा हि निर्भर्त्सनदण्डमोहिता
प्रमूढचित्ता वदनेन शुष्यति ।
ददाति कस्मैचिदनर्हते तनुं
वराज्यपूर्णामिव भस्मनि ध्रुवाम् ॥ १९
पुरा तुषाग्नाविव हूयते हविः
पुरा श्मशाने स्रगिवापविद्ध्यते ।
पुरा च सोमोऽध्वरजो विलुप्यते
शुना यथा विप्रजने हि मोहिते ॥ २०
यथा हि नो वै मृगयां चरित्वा
पुरा सृगालो नलिनीं विगाहते ।
पुरा हि मन्त्राहुतिपूजितायां
हुताग्निवेद्यां बलिभुङ्निलीयते ॥ २१

मा वः प्रियायास्सुनसं सुलोचनं
चन्द्रप्रभाच्छं वदनं पुरस्तात् ।
रागान्वितः कश्चिदकृत्यकारी
श्वा वै पुरोडाशमिवोपयोक्ष्यत् ॥ २२

एतानि वर्त्मान्यनुयात वासः
कालं प्रति क्षिप्रमिहात्यगाद्वै ।
प्रत्याहरध्वं द्विषतां सकाशा-
ल्लक्ष्मीमिव स्वां दयितां नृसिंहाः ॥ २३

युधिष्ठिरः—

भद्रे तूष्णीमास्स्व नियच्छ वाचं
माऽस्मत्सकाशे परुषाण्यवोचः ।
राजानो वा यदि वा राजपुत्रा
बलेन मत्ताः पञ्चतां प्राप्नुवन्ति ॥ २४

वैशम्पायनः—

एतावदुक्त्वा प्रययुर्हि शीघ्रं
तान्येव वर्त्मान्यनुवर्तमानाः ।
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो
ज्यां विक्षिपन्तश्च महाधनुर्भ्यः ॥ २५

ततोऽपश्यंस्तस्य सैन्यस्य रेणुम्
उद्धूयन्तं वाजिखुरप्रणुन्नम् ।

[1]द्विजातिमध्ये विचरन्तं च धौम्यं
विक्रोशन्तं भीममभ्यद्रवेति ॥ २६

त्वं ते सतां धौम्यमदीनसत्त्वाः
दृष्ट्वा तु सर्वे क्षितिं राजपुत्राः ।
श्येना यथैवामिषसम्प्रयुक्ता
जवेन तत् सैन्यमथाभ्यधावन् ॥ २७

तेषां महेन्द्रोपमविक्रमाणां
संरब्धानां धर्षणाद्याज्ञसेन्याः ।
कोपः प्रजज्वाल जयद्रथं च
दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ २८

प्रचुक्रुशुश्चाप्यथ सिन्धुराजं
वृकोदरश्चैव धनञ्जयश्च ।
यमौ च राजा च महाधनुर्धरास्
ततो दिशस्सम्मुमुहुः परेषाम् ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ अस्मिन्नध्याये २९ श्लोकाः ]

---

1. क-ख-घ—पदाति

## ॥ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥



द्रौपद्या जयद्रथं प्रति तत्तल्लक्षणप्रदर्शनपूर्वकं युधिष्ठिरादिनिर्देशः ॥

वैशम्पायनः—

ततो घोरतरश्शब्दो वने समभवत् तदा ।
भीमसेनार्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणाम् ॥ १

तेषां ध्वजाग्राण्यभिवीक्ष्य राजा
स्वयं दुरात्मा कुरुपुङ्गवानाम् ।
जयद्रथो याज्ञसेनीमुवाच
रथे स्थितां भानुमतीं हतौजाः ॥ २

जयद्रथः—

आयान्ति ते पञ्च रथा महान्तो
मन्ये च कृष्णे पतयस्तवेमे ।
सा मामति ख्यापय नस्सुकेशि
परं परं पाण्डवानां रथस्थम् ॥ ३

द्रौपदी—

किं ते ज्ञातैर्मूढ महाधनुर्धरैर्
अनायुष्यं कर्म कृत्वाऽतिघोरम् ।
एते वीराः पतयो मे समेता
न वश्शेषः कश्चिदिहास्ति युद्धे ॥ ४

आख्यातव्यं तव सर्वं मुमूर्षोर्
मया तुभ्यं पृष्टया धर्म एषः ।
न मे [1]यथा त्वद्भयं विद्यते वा
सम्पश्यन्त्यास्सानुजं धर्मराजम् ॥ ५

यस्य ध्वजाग्रे नदतो मृदङ्गौ
नन्दोपनन्दौ मधुरौ सुयुक्तौ ।
[2]एनं स्वधर्मार्थविनिश्चयज्ञं
सदा जनाः कृत्यवन्तोऽनुयान्ति ॥ ६

स एष जाम्बूनदशुद्धगौरः
प्रचण्डघोरस्तनुरायताक्षः ।
एतं कुरुश्रेष्ठतमं वदन्ति
युधिष्ठिरं धर्मसुतं पतिं मे ॥ ७

अप्येष शत्रोश्शरणागतस्य
दद्यात् प्राणान् धर्मचारी नृवीरः ।
[3]परैह्येनं मूढ जवेन भूतये
न त्वात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ॥ ८

---

क—व्यथा ; ख—नमे व्यथात्वद्भयं विद्यते वा ।
घ—व्यथा त्वद्भयाद्
ख—अर्धद्वयमिदं नास्ति
क—यस्त्वात्मनः प्राञ्जलिं न्यस्तशस्त्र-
मथाप्येनं पश्यसियं रथे स्थितम् ॥ [पाठान्तरम्]
ख—इदमर्धं नास्ति
घ—त्वय्यात्मनि प्राञ्जलि न्यस्तशस्त्रे
दद्यादेव प्राणमसौ तवापि । [पाठान्तरम्]

अथाप्येनं पश्यसि यं रथस्थं
महाभुजं सालमिव प्रवृद्धम् ।
सन्दष्टौष्ठं भ्रुकुटीसंहतभ्रुवं
वृकोदरो नाम पतिर्ममैषः ॥ ९

आजानेया बलिनस्साधुदान्ता
महाबलाश्शूरमुदावहन्ति ।
एतस्य कर्माण्यतिमानुषाणि
भीमेति शब्दोऽस्य ततः पृथिव्याम् ॥ १०

[1]नास्यापराधाच्छेषमिहाप्नुवन्ति
नाप्यस्य वैरं विस्मरते कदाचित् ।
वैरस्यान्तं सन्निधायोपयाति
पश्चाच्छान्तिं न च तत् तप्यतीव ॥ ११

मृदुर्वदान्यो मतिमान् यशस्वी
जितेन्द्रियो वृद्धसेवी नृवीरः ।
भ्राता च शिष्यश्च युधिष्ठिरस्य
धनञ्जयो नाम पतिर्ममैषः ॥ १२

[2]यो नैव कोपान्न भयान्न लोभात्
त्यजेद्धर्मं न नृशंसं च कुर्यात् ।

---

1. ख—अयं श्लोको नास्ति
2. क—कदाऽपि कोपान्न भयान्न कामात्;
ख—यो वै न कोपान्नभयान्नकामात्; घ—यौ नैव+नकामात्

स एष वैश्वानरतुल्यतेजाः
कुन्तीसुतश्शत्रुसहः प्रमाथी ॥ १३

यस्सर्वधर्मार्थविनिश्चयज्ञो
भयार्तानां भयहर्ता मनीषी ।
बन्धुप्रियश्शस्त्रभृतां वरिष्ठो
महाहवेष्वप्रतिवार्यवीर्यः ॥ १४

यस्योत्तमं रूपमाहुः पृथिव्यां
यं पाण्डवाः परिरक्षन्ति सर्वे ।
प्राणैर्गरीयान् समनुव्रतश्च
स एष वीरो नकुलः पतिर्मे ॥ १५

यः खड्गयोधी लघुचित्रहस्तो
महांश्च धीमान् सहदेवोऽद्वितीयः ।
[1]यस्मात् कर्म द्रक्ष्यसे मूढसत्त्व
शतक्रतोर्वा दैत्यसेनासु सङ्ख्ये ॥ १६

शूरः कृतास्त्रो मतिमान् मनीषी
प्रियङ्करो धर्मसुतस्य राज्ञः ।
हुताशचन्द्रार्कसमानतेजा
जघन्यजः पाण्डवानां प्रियश्च ॥ १७

1. ख—इदमर्धं नास्ति

बुद्ध्या समो यस्य नरो न विद्यते

वक्ता तथा सत्सु विनिश्चयज्ञः ।

स एष शूरो नित्यममर्षणश्च

श्रीमान् प्राज्ञस्सहदेवः पतिर्मे ॥ १८

त्यजेत् प्राणान् प्रविशेद्धव्यवाहं

न त्वेवैष व्याहरेद्धर्मबाह्यम् ।

सदा मनीषी क्षत्रधर्मे निविष्टः

कुन्त्याः प्राणैरिष्टतमो नृवीरः ॥ १९

विशीर्यन्तीं नावमिवार्णवान्ते

रत्नाभिपूर्णां मकरस्य पृष्ठे ।

सेनां तथेमां हतसर्वयोधां

विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रैः ॥ २०

इत्येवं ते कथिताः पाण्डुपुत्रा

यांस्त्वं मोहादवमत्य प्रवृत्तः ।

यद्येतैस्त्वं मुच्यसेऽरिष्टदेहः

पुनर्जन्म प्राप्स्यसे जीवनं च ॥ २१

वैशम्पायनः—

ततः पार्थाः पञ्च पञ्चेन्द्रकल्पास्

त्यक्त्वा त्रस्तान् प्राञ्जलींस्तान् पदातीन् ।

रथाऽनीकं शरवर्षान्धकारं
चक्रुः क्रुद्धास्सर्वतस्ते निगृह्य ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

## ॥ पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥

---

युधिष्ठिरादीनां जयद्रथादिभिरायोधनम् ॥ १ ॥ जयद्रथेन भीमादिभिः स्वसहायानां निधने द्रौपदीविमोचनपूर्वकं पलायनम् ॥ २ ॥ भीमार्जुनाभ्यां परुषोक्तिपूर्वकं तदनुधावनम् ॥ ३ ॥

---

सैन्धवः—

सन्तिष्ठध्वं प्रहरत तूर्णं विपरिधावत ॥ ॥

वैशम्पायनः—

इति स्म सैन्धवो राजा चोदयामास तान् नृपान् ॥ १

ततो घोरतरश्शब्दो रणे समभवत् तदा ।
भीमार्जुनयमान् दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ २

शिबिसिन्धुत्रिगर्तानां विषादस्समजायत ।
तान् दृष्ट्वा पुरुषव्याघ्रान् व्याघ्रानिव बलोत्कटान् ॥ ३

हैमबिन्दुं महोत्सेधां सर्वसैक्यायसीं गदाम् ।

प्रगृह्याभ्यद्रवद्भीमस् सैन्धवं कालचोदितम् ॥ ४
तदन्तरं समावृत्य कोटिकाश्योऽभ्यवारयत् ।
महता रथवंशेन परिवार्य वृकोदरम् ॥ ५
शक्तितोमरनाराचैर् वीरबाहुप्रचोदितैः ।
कीर्यमाणोऽपि बहुभिर् न स भीमो व्यकम्पत ॥ ६
गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमस् सैन्धवध्वजिनींमुखे ॥ ७
पार्थः पञ्चशतान् शूरान् पार्वतीयान् महारथान् ।
परीप्समानस्सौवीरं जघान ध्वजिनीमुखे ॥ ८
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ९
नकुलोऽथ [1]तथा युद्धे रथात् प्रस्कन्द्य खड्गधृक् ।
शिरांसि पादरक्षाणां बीजवत् प्रवपन् मुहुः ॥ १०
सहदेवस्तु संवार्य रथेन गजयोधिनः ।
पातयामास नाराचैर् द्रुमेभ्य इव बर्हिणः ॥ ११
तत्र त्रिगर्तस्सधनुर् अवतीर्य महारथात् ।
गदया चतुरो वाहान् राज्ञस्तस्य तदाऽवधीत् ॥ १२
तमथाभ्यागतं राजा पदातिं कुन्तिनन्दनः ।

---

1. क-ख-घ—तथा श्रद्धो

अर्धचन्द्रेण बाणेन विव्याधोरसि धर्मराट् ॥ १३
[1]स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन् ।
पपाताभिमुखं प्राप्तश् छिन्नमूल इव द्रुमः ॥ १४
इन्द्रसेनद्वितीयस्तु रथात् प्रस्कन्द्य धर्मराट् ।
हताश्वस्सहदेवस्य प्रतिपेदे महारथम् ॥ १५
नकुलं चापि संवार्य क्षेमङ्करमहामुखौ ।
उभावुभयतस्तीक्ष्णैश् शरवर्षैरवर्षताम् ॥ १६
तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ १७
त्रिगर्तराजस्सुरथस् तस्याथ गजधूर्गतः ।
रथमाक्षेपयामास गजेन गजयानवित् ॥ १८
नकुलस्त्वपभीस्तस्माद् रथाच्चर्मासिखड्गधृक् ।
उद्भ्राम्य स्थानमास्थाय तस्थौ गिरिरिवाचलः ॥ १९
सुरथस्तं गजवरं वधाय नकुलस्य तु ।
प्रेषयामास सक्रोधम् अत्युच्छ्रितकरं ततः ॥ २०
नकुलस्तस्य नागस्य समीपपरिवर्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥ २१
स विनद्य महानादं गजो घण्टाविभूषणः ।

1. अ-अर्धद्वयं नास्ति

पतन्नवाक्शिरा भूमौ [1]हस्त्यारोहमपोथयत् ॥ २२
स तत् कर्म महत् कृत्वा शूरो माद्रवतीसुतः ।
भीमसेनरथं प्राप्य शर्म लेभे महारथः ॥ २३
भीमस्त्वापततो राज्ञः कोटिकाश्यस्य संयुगे ।
सूतस्य तु तदा [2]वाहान् क्षुरेणापाहरच्छिरः ॥ २४
न बुबोध हतं सूतं स राजा बाहुशालिना ।
तस्याश्वा व्यद्रवन् सङ्ख्ये हतसूतास्ततस्ततः ॥ २५
विरथं हतसूतं तं भीमः प्रहरतां वरः ।
निजघानातियत्नेन प्रासेनाभ्येत्य पाण्डवः ॥ २६
द्वादशानां तु सर्वेषां सौवीराणां धनञ्जयः ।
चकर्त निशितैर्भल्लैर् धनूंषि च शिरांसि च ॥ २७
शिबीनिक्ष्वाकुवीरांश्च त्रिगर्तान् सैन्धवानपि ।
जघानातिरथस्सङ्ख्ये बाणगोचरमागतान् ॥ २८
सूदिताः प्रत्यदृश्यन्त बहुधा सव्यसाचिना ।
सपताकाश्च मातङ्गास् सध्वजाश्च महारथाः ॥ २९

---

1. क—दन्तौ मोहादपोथयत्  ख—हस्तान्मोहादपोथयत्
 घ—प्राणांस्त्यत्याज संयुगे
2. ख—सूतस्य तु ततो बाणं विससर्ज चमूमुखे ।
 स बाणस्तस्य तीक्ष्णाग्रो वेगेनापाहरच्छिरः ।
 न बुबोध हतं सूतं स राजा बाहुशालिना ।
 [अर्धत्रयस्थाने पाठान्तरम् ततो 'विरथं' इत्यादि ॥]

प्रच्छाद्य पृथिवीं तस्थुस् सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ३०

श्वकाकगृध्रकाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ॥ ३१

हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः ।
विमुच्य कृष्णां सन्त्रस्तः पलायनपरोऽभवत् ॥ ३२

स तस्मिन् सङ्कुले सैन्ये द्रौपदीमवतार्य च ।
प्राणप्रेप्सुरुपाधावद् वनं तत्र नराधिपः ॥ ३३

द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथेनारोहयत् तदा ॥ ३४

ततस्तद्विद्रुतं सैन्यम् अपयाते जयद्रथे ।
आदिश्यादिश्य नाराचैर् निर्जघान वृकोदरः ॥ ३५

सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम् ।
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ॥ ३६

अर्जुनः—

यस्यापराधात् प्राप्तोऽयम् अस्मान् क्लेशो दुरासदः ।
एतस्मिन् समरोद्देशे न पश्यामि जयद्रथम् ॥ ३७

तमेवान्विच्छ भद्रं ते किं ते योधैर्निपातितैः ।

[1]अनार्याणामिदं कर्म कथं वा मन्यते भवान् ॥ ३८

वैशम्पायनः—

इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ।
युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत् ॥ ३९

भीमसेनः—

हतप्रवीरा रिपवो भूयिष्ठं प्रद्रुतं बलम् ।
गृहीत्वा द्रौपदीं राजन् निवर्ततु भवानितः ॥ ४०

यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन् द्रौपदीं परिसान्त्वय ॥ ४१

न हि मे मोक्ष्यते जीवन् मूढस्सैन्धवको नृपः ।
[2]पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ४२

युधिष्ठिरः—

न हन्तव्यो महाबाहो दुरात्माऽपि स सैन्धवः ।
दुश्शलामपि सम्प्रेक्ष्य गान्धारीं च यशस्विनीम् ॥ ४३

वैशम्पायनः—

तच्छ्रुत्वा द्रौपदी साध्वी उवाच व्याकुलेन्द्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ४४

द्रौपदी—

कर्तव्यं चेत् प्रियं मह्यं वध्यस्स पुरुषाधमः ।

---

1. क—अनामिषमिदं　　2. क—नासीदमर्षम्

सैन्धवापशदः पापो दुर्मतिः कुलपांसनः ॥ ४५
भार्यावमन्ता निर्वैरो यश्च राज्यहरो रिपुः ।
याचमानोऽपि सङ्ग्रामे न सञ्जीवितुमर्हति ॥ ४६

वैशम्पायनः—

इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः ।
राजा निववृते कृष्णाम् आदाय सपुरोहितः ॥ ४७
स प्रविश्याश्रमपदम् अपविद्धबृसीकटम् ।
मार्कण्डेयादिभिर्विप्रैर् अनुकीर्णं ददर्श ह ॥ ४८
द्रौपदीमनुशोचद्भिर् ब्राह्मणैस्तैस्समागतैः ।
समेयाय महाप्राज्ञस् सभार्यो भ्रातृमध्यगः ॥ ४९
ते स्म तं मुदितं दृष्ट्वा पुनरभ्यागतं नृपम् ।
जित्वा च सिन्धुसौवीरान् द्रौपदीमाहृतां पुनः ॥ ५०
स तैः परिवृतो राजा तत्रैवोपविवेश ह ॥ ५०॥
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ॥ ५१
भीमसेनार्जुनावपि श्रुत्वा क्रोशगतं रिपुम् ।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ॥ ५२
इदमत्यद्भुतं चात्र चकारातिरथोऽर्जुनः ।
क्रोशमात्रगतानश्वान् सैन्धवस्य जघान यत् ॥ ५३
स हि दिव्यास्त्रसम्पन्नः कृच्छ्रकालेष्वसम्भ्रमः ।

अकरोद्दुष्करं कर्म शरैरसानुमन्त्रितैः ॥ ५४
ततोऽभ्यधावतां वीरावुभौ भीमधनञ्जयौ ।
हताश्वं सैन्धवं भीमम् एकं व्याकुलचेतसम् ॥ ५५
सैन्धवस्तु हतान् दृष्ट्वा तत्राऽश्वान् भृशदुःखितः ।
रथात् प्रस्कन्द्य पद्भ्यां वै पलायनपरोऽभवत् ॥ ५६
दृष्ट्वा विक्रमकर्माणि कुर्वाणं च धनञ्जयम् ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ५७
सैन्धवं त्वभिसम्प्रेक्ष्य पराक्रान्तं पलायने ।
अनुयात्वा महाबाहुः फल्गुनो वाक्यमब्रवीत् ॥ ५८

अर्जुनः—

अनेन वीर्येण कथं स्त्रियं प्रार्थयसे बलात् ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ॥ ५९
कथं चानुचरान् हित्वा शत्रुमध्ये प्रधावसि ॥ ५९॥

वैशम्पायनः—

इत्येवमुक्तः पार्थेन सैन्धवो न न्यवर्तत ॥ ६०
तिष्ठतिष्ठेति तं भीमस् सहसाऽभ्यद्रवद्बली ।
मा वधीरिति पार्थस्तु दयावानभ्यभाषत ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[ अस्मिन्नध्याये ६१ श्लोकाः ]

---

## ।। षड्विंशत्यधिकद्विशततमोऽध्यायः ।।

भीमेन केशग्रहणेन निपातितस्य जयद्रथस्य मूर्ध्नि पादप्रहारपूर्वकं क्षुरप्रेण पञ्चचूडीनिर्माणम् ॥ १ ॥ भीमेन बन्धनपूर्वकमानीतस्य तस्य युधिष्ठिरेण मोचनम् ॥ २ ॥ जयद्रथेन तपःप्रसादितान्महादेवादर्जुनवर्जमेकस्मिन्दिने पाण्डवजयरूपवराऽऽदानम् ॥ ३ ॥

वैशम्पायनः—

जयद्रथस्तु सम्प्रेक्ष्य भ्रातरावुद्यतायुधौ ।
प्राधावत् तूर्णमव्यग्रो जीवितेप्सुस्सुदुःखितः ॥ १
तं भीमसेनो [1]धावत् तम् अवतीर्य रथाद्बली ।
अभिद्रुतं निजग्राह केशपक्षेऽत्यमर्षणः ॥ २
समुद्यम्य च तं रोषान्निष्पिपेष महीतले ।
गले गृहीत्वा राजानं पातयामास चैव हि ॥ ३
पुनस्स जीवमानस्य सद्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ४
तस्य जानू ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजन् प्रहारवरपीडितः ॥ ५
सरोषं भीमसेनं तु वारयामास फल्गुनः ।
दुश्शलायाः कृते राजा यत् त्वामाहेति कौरवः ॥ ६

1. क-ख-ग—धावन्तं

भीमः—

नायं पापसमाचारो मत्तो जीवितुमर्हति ।
द्रौपद्यास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ ७

किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
त्वं तु बालिशया बुद्ध्या यततोऽस्मान् प्रबाधसे ॥ ८

वैशम्पायनः—

एवमुक्त्वा जटास्तस्य पञ्च चक्रे वृकोदरः ।
अर्धचन्द्रेण बाणेन किञ्चिदब्रुवतस्तदा ॥ ९

विकल्पयित्वा राजानं ततः प्राह वृकोदरः ॥ ९॥

भीमः—

जीवितं चेच्छसे मूढ हेतुं मे गदतश्शृणु ॥ १०

दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं चेज्जीवितं दद्याम् एष युद्धजितो विधिः ॥ ११

वैशम्पायनः—

एवमस्त्विति तं राजा कृच्छ्रप्राणो जयद्रथः ।
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ १२

तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुकुण्ठितम् ॥ १३

ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्यमाश्रममध्यस्थम् अभ्यगच्छद्युधिष्ठिरम् ॥ १४

दर्शयामास बीभत्सुस् तदवस्थं जयद्रथम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ॥ १५
राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै ।
दासभावं गतो ह्येष पाण्डूनां पापचेतनः ॥ १६
तमुवाच ततो ज्येष्ठो राजा सप्रणयं वचः ॥ १६॥

युधिष्ठिरः—

मुञ्चेममधमाचारं प्रमाणा यदि ते वयम् ॥ १७

वैशम्पायनः—

द्रौपदी चाब्रवीद्भीमम् अभिप्रेक्ष्य युधिष्ठिरम् ॥ १७॥

द्रौपदी—

दासोऽयं मुच्यतां राज्ञस् त्वया पञ्चशिखः कृतः ॥ १८

वैशम्पायनः—

स मुक्तोऽभ्येत्य राजानम् अभिवाद्य युधिष्ठिरम् ।
ववन्दे विह्वलो राजा तांश्च वृद्धान् मुनींस्तदा ॥ १९
तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः ।
तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ॥ २०

युधिष्ठिरः—

अभीतो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित् ।
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान् ॥ २१
एवंविधं हि कः कुर्यात् त्वदन्यः पुरुषाधमः ।
कर्म धर्मविरुद्धं वै लोकदुष्टं च कर्म ते ॥ २२

वैशम्पायनः—

गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम् ।
सम्प्रेक्ष्य भरतश्रेष्ठः कृपां चक्रे नराधिपः ॥ २३

युधिष्ठिरः—

धर्मे ते वर्धतां बुद्धिर् मा चाधर्मे मनः कृथाः ।
साश्वस्सरथपादातस् स्वस्ति गच्छ जयद्रथ ॥ २४

वैशम्पायनः—

एवमुक्तस्स सव्रीलस् तूष्णीं किञ्चिदवाङ्मुखः ।
जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत ॥ २५

स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतोऽभवत् तदा ॥ २६

बलिं स्वयं प्रत्यगृह्णात् प्रीयमाणस्त्रिलोचनः ।
वरं चास्मै ददौ देवस् स च जग्राह तं शृणु ॥ २७

जयद्रथः—

समस्तान् सरथान् पञ्च जयेयं युधि पाण्डवान् ॥ २७॥

वैशम्पायनः—

इति राजाऽब्रवीद्देवं नेति देवस्ततोऽब्रवीत् ॥ २८

श्रीभगवान्—

अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान् युधि ।
ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ २९

यमाहुरजितं देवं शङ्खचक्रगदाधरम् ।
प्रधानस्सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥ ३०

वैशम्पायनः—

एवमुक्तस्तु नृपतिस् स्वमेव भवनं ययौ ।
पाण्डवा विपिने तस्मिन् काम्यके न्यवसंस्तदा ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

---

## ॥ सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥



युधिष्ठिरेण मार्कण्डेयं प्रति स्वसमानदुःखिसत्ताप्रश्नः ॥

---

जनमेजयः—

एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १

वैशम्पायनः—

एवं कृष्णां मोक्षयित्वा विसृज्य स जयद्रथम् ।
आसांचक्रे मुनिगणैर् धर्मराजो युधिष्ठिरः ॥ २

तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम् ।
मार्कण्डेयमिदं वाक्यम् अब्रवीत् पाण्डुनन्दनः ॥ ३

युधिष्ठिरः—

मन्ये कालश्च बलवान् दैवं च दुरतिक्रमम् ।
भवितव्यं च भूतानां यस्य नास्ति व्यतिक्रमः ॥ ४
कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।
संस्पृशेदीदृशो भावश् शुचिं स्तैन्यमिवानृतम् ॥ ५
न हि पापं कृतं किञ्चित् कर्म वा निन्दितं क्वचित् ।
द्रौपद्या ब्राह्मणेष्वेव धर्मस्सुचरितो महान् ॥ ६
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।
तस्यास्संहरणात् प्राप्तश् शिरसः केशवापनम् ॥ ७
पराजयं च सङ्ग्रामे सहसा यैस्समाप्तवान् ।
प्रत्याहृता तथाऽस्माभिर् हत्वा तत् सैन्धवं बलम् ॥ ८
तद्दारहरणं प्राप्तम् अस्माभिरवितर्कितम् ।
दुःखश्चायं वने वासो मृगयायां च जीविका ॥ ९
हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम् ।
ज्ञातिभिर्विप्रवासश्च मिथ्याव्यवसितैरियम् ॥ १०
अस्ति लोके मया कश्चिद् अल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये ११ श्लोकाः ]

---

## ।। अष्टाविंशत्यधिकद्विशततमोऽध्यायः ।।

मार्कण्डेयेन युधिष्ठिरं प्रति रामोपाख्यानकथनारम्भः ॥ १ ॥ तत्र रामाद्युत्पत्तिकथनपूर्वकं रावणोत्पत्त्युपोद्घाततया कुबेरोत्पत्तिकथनम् ॥ २ ॥

मार्कण्डेयः—

प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा ।। १

आश्रमाद्राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम् ।। २

प्रत्याजहार तां रामस् सुग्रीवबलमाश्रितः ।
बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैश्शरैः ।। ३

युधिष्ठिरः—

कस्मिन् रामः कुले जातः किंवीर्यः किंपराक्रमः ।
रावणः कस्य वा पुत्रः किं वैरं तस्य तेन वै ।। ४

एतन्मे भगवन् सर्वं सम्यगाख्यातुमर्हसि ।
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ।। ५

मार्कण्डेयः—

अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः ।
तस्य पुत्रो दशरथश् शश्वत् स्वाध्यायवान् शुचिः ।। ६

अभवंस्तस्य चत्वारः पुत्रा धर्मार्थचारिणः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ७

रामस्य माता कौसल्या कैकेयी भरतस्य तु ।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परन्तपौ ॥ ८

[1]विदेहराजो जनकस् सीता तस्यात्मजा विभो ।
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ ९

एतद्रामस्य ते जन्म सीतायाश्चापि कीर्तितम् ।
रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ॥ १०

पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।
स्वयम्भूस्सर्वलोकानां प्रभुस्स्रष्टा महातपाः ॥ ११

पुलस्त्यो नाम तस्यासीन्मानसो दयितस्सुतः ।
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः ॥ १२

पितरं स समुत्सृज्य पितामहमुपस्थितः ।
तस्य कोपात् पिता राजन् ससर्जात्मानमात्मना ॥ १३
स जज्ञे विश्रवा नाम तस्यार्धेन च वै द्विजः ॥ १३॥

पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह ।
अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ १४॥

---

1. क—नास्तीदमर्धम्

ईशानेन तथा सख्यं पुत्रं च नलकूबरम् ।
राजधानीनिवेशं च लङ्कां रक्षोगणान्विताम् ॥ १५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये १५॥ श्लोकाः ]

## ॥ एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥

मुनिवरेण विश्रवसा भार्यात्रये रावणादीनामुत्पादनम् ॥ १ ॥ सानुजेन रावणेन तपस्तोषितस्य ब्रह्मणो वरात्पुष्पकापहरणपूर्वकं कुबेरस्य निष्कासनेन लङ्कायां निवासः ॥ २ ॥

मार्कण्डेयः—

पुलस्त्यस्य तु यः क्रोधाद् अर्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधस् स वैश्रवणमैक्षत ॥ १

बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।
कुबेरस्तत् प्रसादार्थं यतते स्म सदा नृप ॥ २

स राजराजो लङ्कायां निवसन् नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥ ३

तास्तथा वै महात्मानं सन्तोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल नृत्यगीतविशारदाः ॥ ४

पुष्पोत्कटा बका चेति मालिनीति विशां पते ।
अन्योन्यस्पर्धया राजन् श्रेयस्कामास्सुमध्यमाः ॥ ५
तासां स भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान् पुत्रान् एकैकस्या यथेप्सितान् ॥ ६
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥ ७
मालिनी जनयामास पुत्रमेकं विभीषणम् ।
बकायां मिथुनं जज्ञे खरश्शूर्पणखा तथा ॥ ८
विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकस्तदा ।
स बभूव महाभागो धर्मगोप्ता क्रियारतः ॥ ९
दशग्रीवस्तु सर्वेषां ज्येष्ठो राक्षसपुङ्गवः ।
महोत्साहो महावीर्यो महासत्त्वपराक्रमः ॥ १०
कुम्भकर्णो महानासीत् सर्वेभ्योऽभ्यधिकस्तदा ।
मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ॥ ११
खरो धनुषि विक्रान्तो ब्रह्मवित् पिशिताशनः ।
सिद्धविघ्नकरी चापि रौद्री शूर्पणखी तदा ॥ १२
सर्वे वेदविदश्शूरास् सर्वे सुचरितव्रताः ।
ऊषुः पित्रा सह रता गन्धमादनपर्वते ॥ १३
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम् ।

पित्रा सार्धं समासीनम् ऋद्ध्या परमया युतम् ॥ १४

जातस्पर्धान्वितास्ते तु तपसे कृतनिश्चयाः ।
ब्रह्माणं तोषयामास घोरेण तपसा तदा ॥ १५

अतिष्ठदेकपादेन सहस्रं परिवत्सरान् ।
वायुभक्षो दशग्रीवः पञ्चाग्निस्सुसमाहितः ॥ १६

अधश्शायी कुम्भकर्णो यताहारो यतव्रतः ।
विभीषणश्शीर्णपर्णम् एकमभ्यवहारयन् ॥ १७

उपवासरतिश्श्रीमान् सदा जप्यपरायणः ।
तमेव कालमातिष्ठत् तीव्रं तप उदारधीः ॥ १८

खरश्शूर्पणखी चापि तेषां वै तप्यतां तपः ।
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ ॥ १९

पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः ।
जुहोत्यग्नौ दुराधर्षस् तेनातुष्यत् पितामहः ॥ २०

ततो ब्रह्मा स्वयं गत्वा तपसस्तान् न्यवारयत् ।
प्रलोभ्य वरदानेन सर्वानेव पृथक् पृथक् ॥ २१

ब्रह्मा—

प्रीतोऽस्मि वो निवर्तध्वं वरान् वृणुत पुत्रकाः ।
यद्यदिष्टमृते त्वेकम् अमरत्वं तथाऽस्तु तत् ॥ २२

यद्यदग्नौ हुतं सम्यक् शिरस्ते महदीप्सितम् ।

तथैव तानि ते देहे भविष्यन्ति यथेप्सितम् ॥ २३

वैरूप्यं च न ते देहे कामरूपधरस्तथा ।

भविष्यसि रणेऽरीणां विजेता हि न संशयः ॥ २४

रावणः—

गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा ।

सर्पकिन्नरभूतेभ्यो न मे भूयात् पराभवः ॥ २५

ब्रह्मा—

य एते कीर्तितास्सर्वे न तेभ्योऽस्ति भयं तव ।

ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥ २६

मार्कण्डेयः—

एवमुक्तो दशग्रीवस् तुष्टस्समभवत् तदा ।

अवमेने हि दुर्बुद्धिर् मनुष्यान् पुरुषादकः ॥ २७

कुम्भकर्णमथोवाच तथैव प्रपितामहः ।

वरं वृणीष्व भद्रं ते प्रीतोऽस्मीति पुनःपुनः ॥ २८

स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ।

तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह ॥ २९

ब्रह्मा—

वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मि पुनरेव च ॥ २९॥

विभीषणः—

परमापद्गतस्यापि नाधर्मे मे रतिर्भवेत् ।

अशिक्षितं च भगवन् ब्रह्मास्त्रं प्रतिभातु मे ॥ ३०॥

ब्रह्मा—

यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।
नाधर्मे धीयते बुद्धिर् अमरत्वं ददानि ते ॥ ३१॥

मार्कण्डेयः—

राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशां पते ।
लङ्कायां वासयामास युधि जित्वा धनेश्वरम् ॥ ३२॥
हित्वा स भगवाँल्लङ्काम् आविशद्गन्धमादनम् ।
गन्धर्वयक्षानुगतो रक्षः किम्पुरुषैस्सह ॥ ३३॥
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ।
शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ॥ ३४॥
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति ।
अवमत्य गुरुं मान्यं क्षिप्रं त्वं न भविष्यसि ॥ ३५॥
विभीषणस्तु धर्मात्मा सतां धर्ममनुस्मरन् ।
अन्वगच्छन्महाराज श्रिया परमया युतः ॥ ३६॥
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ।
सैनापत्यं ददौ धीमान् यक्षराक्षससेनयोः ॥ ३७॥
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः ।
सर्वे समेत्य राजानम् अभ्यषिञ्चन् दशाननम् ॥ ३८॥
दशग्रीवस्तु दैत्यानां दानवानां बलोत्कटः ।

आक्रम्य रत्नान्यहरत् कामरूपी विहङ्गमः ॥ ३९॥

रावयामास लोकान् यत् तस्माद्रावण उच्यते ।
दशग्रीवः कामबलो देवानां भयमादधत् ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

## ॥ त्रिंशदधिकद्विशततमोऽध्यायः ॥

रावणोपद्रुतदेवगणप्रार्थितेन ब्रह्मणा श्रीहरे रामत्वेन प्रादुर्भावान्-वेदनपूर्वकं तान्प्रति तत्साहाय्यार्थं वानरादिभावेन जननचोदना ॥

---

मार्कण्डेयः—

ततो ब्रह्मर्षयस्सिद्धाः देवाश्च मुनयस्तथा ।
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ १

अग्निः—

यस्स विश्रवसः पुत्रो दशग्रीवो महाबलः ।
अवध्यो वरदानेन कृतो भगवता पुरा ॥ २

स बाधते प्रजास्सर्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवान्नान्यस्त्राता न विद्यते ॥ ३

ब्रह्मा—

न स देवासुरैश्शक्यो युद्धे जेतुं विभावसो ।

विहितं तत्र यत् कार्यम् अभितस्तस्य निग्रहे ॥ ४

तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ।

विष्णुः प्रहरतां श्रेष्ठस् स तत् कर्म करिष्यति ॥ ५

मार्कण्डेयः—

पितामहस्ततस्तेषां सन्निधौ वाक्यमब्रवीत् ।

ब्रह्मा—

सर्वैर्देवगणैस्सार्धं सम्भवध्वं महीतले ॥ ६

विष्णोस्सहायानृक्षीषु वानरीषु च सर्वशः ।

जनयध्वं सुतान् वीरान् कामरूपबलान्वितान् ॥ ७

मार्कण्डेयः—

वानरान् [1]भाग भागेन देवगन्धर्वदानवाः ।

अवतर्तुं महीं सर्वे मन्त्रयामासुरञ्जसा ॥ ८

तेषां समक्षं गन्धर्वीं दुन्दुभिं नाम नामतः ।

शशास वरदो देवो देवकार्यार्थसिद्धये ॥ ९

पितामहवचश्श्रुत्वा गन्धर्वी दुन्दुभी तदा ।

मन्थरा मानुषीलोके कुब्जा समभवत् तदा ॥ १०

शक्रप्रभृतयस्सर्वे ते देवास्सुरसत्तमाः ।

ऋक्षवानरनारीषु जनयामासुरात्मजान् ॥ ११

---

1. क-ख—स्वै महाभागान्

ओजसा तेजसा युक्तान् यशसा च बलेन च ।
भेत्तारो गिरिशृङ्गाणां सालतालशिलायुधाः ॥ १२
वज्रसंहननास्सर्वे सर्वे घोरबलास्तथा ।
कामवीर्यधराश्चैव सर्वे बुद्धिविशारदाः ॥ १३
नागायुतसमप्राणा वायुवेगसमा जवे ।
यथेच्छविनिपाताश्च केचिदत्र वनौकसः ॥ १४
एवं विधाय तत् सर्वं भगवाँल्लोकभावनः ।
मन्थरां बोधयामास यद्यत् कार्यं त्वया तदा ॥ १५
सा तद्वचनमाज्ञाय तथा चक्रे मनोजवा ।
इतश्चेतश्च गच्छन्ती वैरसन्धुक्षणे रता ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ एकत्रिंदशदधिकद्विशततमोऽध्यायः ॥

रामेण स्वस्य यौवराज्याभिषेचनोद्युक्ते दशरथे मन्थराबोधितायाः कैकेय्या वचनात्सीतालक्ष्मणाभ्यां सह वनगमनम् ॥

---

युधिष्ठिरः—
उक्तं भगवता जन्म रामादीनां पृथक् पृथक् ।
प्रस्थानगमने ब्रह्मन् श्रोतुमिच्छामि कथ्यताम् ॥ १

कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रस्थापितौ वने ब्रह्मन् मैथिली च यशस्विनी ॥ २

मार्कण्डेयः—

जातपुत्रो दशरथः प्रीतिमानभवन्नृपः ।
क्रियारतिर्धर्मरतस् सततं वृद्धसेवकः ॥ ३

क्रमेणैवास्य ते पुत्रा व्यवर्धन्तामितौजसः ।
वेदेषु सरहस्येषु धनुर्वेदे च पारगाः ॥ ४

चरन्ति ब्रह्मचर्यं ते कृतदाराश्च पार्थिव ॥ ४॥

दृष्ट्वा रामं दशरथः प्रीतिमानभवत् सुखी ॥ ५

ज्येष्ठो रामोऽभवत् तेषां [1]रमयामास हि प्रजाः ।
मनोहरतया धीमान् पितुर्हृदयतोषणः ॥ ६

ततस्स राजा मतिमान् मत्वाऽऽत्मानं वयोधिकम् ।
मन्त्रयामास सचिवैर् मन्त्रज्ञैश्च पुरोहितैः ॥ ७

अभिषेकाय रामस्य यौवराज्याय भारत ।
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ८

लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम् ।
दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्धजम् ॥ ९

दीप्यमानं श्रिया वीरं शक्रादनवमं बले ।

---

1. ख-घ—रञ्जयामास

पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ १०
सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम् ।
जितेन्द्रियममित्राणाम् अपि दृष्टिमनोहरम् ॥ ११
नाशितारमसाधूनां गोप्तारं धर्मचारिणाम् ।
धृतिमन्तं च दान्तं च जेतारमपराजितम् ॥ १२
पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम् ।
संदृश्य परमां प्रीतिम् अगच्छत् कुलनन्दनम् ॥ १३
चिन्तयंश्च महातेजा गुणान् रामस्य वीर्यवान् ।
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् ॥ १४

दशरथः—

अद्य पुष्यो निशि ब्रह्मन् पुण्यं योगमुपैष्यति ।
सम्भारास्सम्भ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् ॥ १५

मार्कण्डेयः—

इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा ।
कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ १६

मन्थरा—

अद्य कैकेयि दौर्भाग्यं [1]राज्ञा ते ख्यापितं महत् ।
[2]आशीविषस्तु सङ्क्रुद्धश् छन्नो दशति दुर्भगे ॥ १७
सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
रुद्धं हि खलु सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥ १८

---

1. अ-ब—यस्याः पुत्रो न राज्यभाक्　　2. अ-ब—अर्धद्वयं नास्ति

मार्कण्डेयः—

सा तद्वचनमाज्ञाय सर्वाभरणभूषिता ।
वेदी विलग्नमध्येव बिभ्रती रूपमुत्तमम् ॥ १९
विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता ।
राजानं तर्जयन्तीव मधुरं वाक्यमब्रवीत् ॥ २०

कैकेयी—

सत्यप्रतिज्ञ यन्मे त्वं काममेकं विसृष्टवान् ।
तदद्य कुरु सत्यं मे वरं वरद भूपते ॥ २१

दशरथः—

वरं ददामि ते भद्रे त्वं गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यताम् ॥ २२
धनं ददामि कस्याद्य ह्रियतां कस्य वा पुनः ।
ब्राह्मणस्वादिहान्यत्र यत् किञ्चिद्वित्तमस्ति मे ॥ २३

मार्कण्डेयः—

सा तद्वचनमाज्ञाय परिगृह्य नराधिपम् ।
आत्मनो बलमास्थाय तत एनमुवाच ह ॥ २४

कैकेयी—

आभिषेचनिकं यत् ते रामार्थमुपकल्पितम् ।
भरतस्तदवाप्नोति वनं गच्छतु राघवः ॥ २५

मार्कण्डेयः—

स तद्राजा वचश्श्रुत्वा विप्रियं दारुणोदयम् ।
दुःखार्तो भरतश्रेष्ठ न किंचिद्व्याजहार ह ॥ २६

ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान् ।
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ॥ २७
तमन्वगच्छल्लक्ष्मीवान् धनुष्माँल्लक्ष्मणस्तदा ।
सीता च भार्या भद्रं ते वैदेही जनकात्मजा ॥ २८
ततो वनं गते रामे राजा दशरथस्तदा ।
समयुज्यत देहस्य कालपर्यायधर्मणा ॥ २९
रामं तु गतमाज्ञाय राजानं तु तथागतम् ।
अनार्या भरतं देवी कैकेयी वाक्यमब्रवीत् ॥ ३०

कैकेयी—

गतो दशरथस्स्वर्गं वनस्थौ रामलक्ष्मणौ ।
गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ॥ ३१

मार्कण्डेयः—

तामुवाचाथ धर्मात्मा नृशंसं बत ते कृतम् ।
पतिं हत्वा कुलं चेदम् उत्साद्य धनलुब्धया ॥ ३२
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसनि ।
सकामा भव मे मातर् इत्युक्त्वा प्ररुरोद ह ॥ ३३
स्वचारित्रं विशोध्याथ सर्वप्रकृतिसन्निधौ ।
अन्वयाद्भ्रातरं वीरं सन्निवर्तनलालसः ॥ ३४
कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखिताम् ।
अग्रे प्रस्थाप्य यानैस्स शत्रुघ्नसहितो ययौ ॥ ३५

वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैस्[1]समाहितः ।
पौरजानपदैस्सार्धं रामानयनकाङ्क्षया ॥ ३६
ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम् ।
तापसानामलङ्कारं धारयन्तं धनुर्धरम् ॥ ३७
स रामो भ्रातरं दृष्ट्वा श्रुत्वा स्वर्गगतिं पितुः ।
कृत्वा तस्योदकं सम्यग् उवाच भ्रातरं प्रियम् ॥ ३८

श्रीरामः—

गच्छ तात प्रजा रक्ष्यास् सत्यं रक्षाम्यहं पितुः ॥ ३८॥

मार्कण्डेयः—

विसर्जितस्स रामेण पितुर्वचनकारिणा ।
नन्दिग्रामेऽकरोद्राज्यं नमस्कृत्यास्य पादुके ॥ ३९॥
रामस्तु पुनराशङ्क्य पौरजानपदां गतिम् ।
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ॥ ४०॥
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः ।
नदीं गोदावरीं रम्याम् आश्रित्य न्यवसत् तदा ॥* ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

---

1. क-ख-ब—समन्वितः
* सर्वेषु कोशेषु नाध्यायसमाप्तिर्दृश्यते ॥

## ॥ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥

तथा लक्ष्मणकरेण शूर्पणखीवैरूप्यकरणपूर्वकं खरादि हननम् ॥ १ ॥
ततः क्रुद्धेन रावणेन रामविप्रियचिकीर्षया मारीचसमीपं प्रति गमनम्॥२॥

मार्कण्डेयः—

वसतस्तस्य रामस्य ततश्शूर्पणखीकृतम् ।
खरेणासीन्महद्वैरं जनस्थाननिवासिना ॥ १

रक्षार्थं तापसानां च राघवो धर्मवत्सलः ।
चतुर्दशसहस्राणि जघान सह रक्षसाम् ॥ २

दूषणं च खरं चैव निहत्य स महाभुजः ।
चक्रे क्षेमं पुनर्धीमान् धर्मारण्यं स राघवः ॥ ३

हतेषु तेषु रक्षस्सु ततश्शूर्पणखी पुनः ।
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम् ॥ ४

ततो रावणमभ्येत्य राक्षसी दुःखमूर्च्छिता ।
पपात पादयोर्मूले संशुष्करुधिरा तदा ॥ ५

तां तदा विकृतां दृष्ट्वा रावणः क्रोधमूर्छितः ।
उत्पपातासनात् क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ॥ ६

स्वानमात्यान् विसृज्याथ विविक्ते तामुवाच ह ॥ ६॥

रावणः—

केनास्येवं कृता भद्रे मामचिन्त्यावमत्य च ।

कश्शूलं तीक्ष्णमासाद्य सर्वगात्रेषु सेवते ॥ ७॥
कश्शिरस्यग्निमाधाय विस्रब्धस्स्वपते सुखम् ।
आशीविषं घोरतरं पादेन स्पृशतीह कः ॥ ८॥
सिंहं केसरिणं क्रुद्धं स्पृष्ट्वा दंष्ट्रासु तिष्ठति ॥ ९

मार्कण्डेयः—

इत्येवं वदतस्तस्य नेत्रेभ्यस्तेजसोऽर्चिषः ।
निश्चेरुर्दहतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ १०
तस्य तत् सर्वमाचख्यौ भगिनी रामविक्रमम् ।
खरदूषणसंयुक्तं राक्षसानां भयावहम् ॥ ११
स निश्चित्य तु तत् कृत्यं सागरं लवणाकरम् ।
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ॥ १२
त्रिकूटं समतिक्रम्य कालपर्वतमेव च ।
ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ १३
तमतीत्याथ गोकर्णम् अभ्यगच्छद्दशाननः ।
दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ॥ १४
तत्राभ्यगच्छन् मारीचं पूर्वामात्यं दशाननः ।
पुरा रामभयादेव तापसं प्रियजीवितम् ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये १५ श्लोकाः]

## ॥ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

रावणेन भिक्षुवेषधारणपूर्वकं मारीचेन मृगरूपधारिणा सह रामाश्रमाभिगमनम् ॥ १ ॥ मृगग्रहणाय सीताचोदनया तदनुधाविना रामेण राक्षसबुद्ध्या मृगहननम् ॥ २ ॥ म्रियमाणस्य मारीचस्य हा सीते लक्ष्मणेति रामस्वरसमानस्वरश्रवणेन विषण्णायाः सीतायाः परुषभाषणश्रवणाल्लक्ष्मणेन राममार्गानुसरणम् ॥ ३ ॥ अत्रान्तरे रावणेन निजरूपधारणपूर्वकं सीतापहरणम् ॥ ४ ॥

मार्कण्डेयः—

मारीचस्त्वथ सम्भ्रान्तो दृष्ट्वा रावणमागतम् ।
पूजयामास सत्कारैः फलमूलादिभिस्तथा ॥ १

विश्रान्तं चैनमासीनम् अन्वासीनस्स रावणम् ।
उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ २

मारीचः—

न ते प्रकृतिमान् वर्णः कच्चित् क्षेमं पुरे तव ।
कच्चित् प्रकृतयस्सर्वा भजन्ते च यथासुखम् ॥ ३

किमिहागमने चापि कार्यं ते राक्षसेश्वर ।
कृतमित्येव तद्विद्धि यद्यपि स्यात् सुदुष्करम् ॥ ४

मार्कण्डेयः—

शशंस रावणस्तस्मै तत् सर्वं रामचेष्टितम् ।
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ॥ ५

मारीचः—

अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै ।
बाणवेगं हि कस्तस्य शक्तस्सोढुं महात्मनः ॥ ६

प्रव्रज्यायां हि मे हेतुस् स एव पुरुषर्षभः ।
नाशाय सुखमेतत् ते केनाख्यातं दुरात्मना ॥ ७

मार्कण्डेयः—

तमुवाचाथ सक्रुद्धो रावणः परिभर्त्सयन् ॥ ७॥

रावणः—

अकुर्वतो मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ॥ ८

मार्कण्डेयः—

मारीचश्चिन्तयामास विशिष्टान्मरणं वरम् ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ॥ ९

ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम् ॥ ९॥

मारीचः—

किं ते कार्यं दशग्रीव करिष्याम्यवशोऽपि तत् ॥ १०

मार्कण्डेयः—

तमब्रवीद्दशग्रीवो गच्छ सीतां विलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ॥ ११

ध्रुवं सीता समीक्ष्य त्वां राघवं चोदयिष्यति ।
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ॥ १२

तामादायापनेष्यामि ततस्स न भविष्यति ।
भार्यावियोगाद्दुर्बुद्धिर् एतत् साह्यं कुरुष्व मे ।　　१३

इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तम् अन्वगच्छत् सुदुःखितः ॥　　१४

ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः ।
चक्रतुस्तत् तथा सर्वम् उभौ यत् पूर्वमन्त्रितम् ॥　　१५

रावणस्तु यतिर्भूत्वा मुण्डी कुण्डी त्रिदण्डधृक् ।
[1]मृगो भूत्वाऽथ मारीचस्तं तं देशमुपजग्मतुः ॥　　१६

दर्शयामास वैदेहीं मारीचो मृगरूपधृक् ।
चोदयामास यस्यार्थे सा रामं विधिचोदिता ॥　　१७

रामस्तस्याः प्रियं कुर्वन् धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया ॥　　१८

स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥　　१९

सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसेश्वरः ।
चकर्ष महदध्वानं रामस्तं बुबुधे ततः ॥　　२०

निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणम् ॥　　२१

---

1. ख—इदमर्धं नास्ति

स रामबाणाभिहतः कृत्वा चार्तस्वरं ततः ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह ॥ २२

शुश्राव तस्य वैदेही ततस्तां करुणां गिरम् ।
सा पपात ततस्सीता तामुवाचाथ लक्ष्मणः ॥ २३

लक्ष्मणः—

अलं ते शङ्कया देवि को रामं विषहिष्यते ।
मुहूर्ताद्द्रक्ष्यसे रामं आगतं तं शुचिस्मितम् ॥ २४

मार्कण्डेयः—

इत्युक्ता सा प्ररुदती पर्यशङ्कत देवरम् ।
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणा ॥ २५

सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ॥ २५॥

सीता—

नैष कालो ह्ययं मूढ यं त्वं प्रार्थयसे वृथा ॥ २६

अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ।
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् ॥ २७

रामं भर्तारमुत्सृज्य न त्वहं त्वां कदाचन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा ॥ २८

मार्कण्डेयः—

एतादृशं वचश्श्रुत्वा लक्ष्मणो राघवप्रियः ।
पिधाय कर्णौ सद्वृत्तः प्रतस्थे येन राघवः ॥ २९

स रामस्य पदं गृह्य प्रससार धनुर्धरः ॥ २९॥

एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः ॥ ३०॥

यतिवेषप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ।
उपागच्छत् स वैदेहीं रावणः पापनिश्चयः ॥ ३१॥

सा तमालोक्य सम्प्राप्तं धर्मज्ञा जनकात्मजा ।
निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ३२॥

अवमत्य च तत् सर्वं स्वं रूपं प्रत्यपद्यत ।
सान्त्वयामास वैदेहीं कामी राक्षसपुङ्गवः ॥ ३३॥

रावणः—

सीते राक्षसराजोऽहं रावणो नाम विश्रुतः ।
मम लङ्कापुरी रम्या नाम्ना पारे महोदधेः ॥ ३४॥

तत्र त्वं वरनारीषु शोभिष्यसि मया सह ।
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ॥ ३५॥

मार्कण्डेयः—

एवमादीनि वाक्यानि श्रुत्वा तस्याथ जानकी ।
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः ॥ ३६॥

जानकी—

प्रपतेद्द्यौस्सनक्षत्रा पृथिवी शकलीभवेत् ।

शुष्येत् तोयनिधौ तोयं चन्द्रश्शीतांशुतां त्यजेत् ॥ ३७॥

उष्णांशुत्वमथो जह्याद् आदित्यो वह्निरुष्णताम् ।
त्यक्त्वा शैत्यं भजेन्नाहं त्यजेयं रघुनन्दनम् ॥ ३८॥

कथं प्रभिन्नकरटं पद्मिनं वनगोचरम् ।
अपहाय महानागं करेणुस्सूकरं व्रजेत् ॥ ३९॥

कथं पीत्वा च माध्वीकं पीत्वा च मधुरासवम् ।
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरेः ॥ ४०॥

मार्कण्डेयः—

इति सा तं समालक्ष्य प्रविवेशाश्रमं ततः ।
तामनुद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ॥ ४१॥

भर्त्सयित्वा स्वरूपेण स्वरेण गतचेतनाम् ।
मूर्धजेषु निजग्राह खमुपाचक्रमे पुनः ॥ ४२॥

तां ददर्श तदा गृध्रो जटायुर्गिरिगोचरः ।
रुदन्तीं रामरामेति ह्रियमाणां तपस्विनीम् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

---

## ॥ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

सीतामादाय गच्छता रावणेन निरोधकस्य जटायुषो युद्धे हननपूर्वकं लङ्काप्रवेशः ॥ १ ॥ मृगहननपूर्वकं प्रतिनिवृत्तेन रामेण मध्येमार्गं सङ्गतस्य लक्ष्मणस्य विजने सीतात्यजनेन हेतुना गर्हणपूर्वकं स्वावासगमनम् ॥ २ ॥ सीतान्वेषिणा सलक्ष्मणेन रामेण मार्गे स्वग्राहिणः कबन्धस्य वधः ॥ ३ ॥ कबन्धदेहाद्विनिर्गतेन गन्धर्वेण रामं प्रति पम्पातटे सुग्रीवं प्रति गमनचोदना॥

मार्कण्डेयः—

सखा दशरथस्यापि जटायुररुणात्मजः ।
गृध्रराजो महावीर्यस् सम्पातिर्यस्य सोदरः ॥ १

स ददर्श ततस्सीतां रावणाङ्कगतां स्नुषाम् ।
क्रोधादभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम् ॥ २

अथैनमब्रवीत् पक्षी मुञ्चमुञ्चेति मैथिलीम् ।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर ॥ ३

न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम् ।
उक्त्वैवं राक्षसेन्द्रस्य चकर्त नखरैर्भृशम् ॥ ४

पक्षतुण्डप्रहारैश्च बहुशो जर्जरीकृतम् ।
चक्षार रुधिरं भूरि गिरिः प्रस्रवणानिव ॥ ५

स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः ॥ ६

[1]निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् ।
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाऽङ्केन रावणः ॥ ७

यत्रयत्र तु वैदेही पश्यत्याश्रममण्डलम् ।
सरो वा सरितो वाऽपि तत्र मुञ्चति भूषणम् ॥ ८

सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान् ।
तत्र वासो महद्दिव्यम् उत्ससर्ज मनस्विनी ॥ ९

तत् तेषां वानरेन्द्राणां पपात पवनोद्धतम् ।
[2]मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ १०

एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् ।
निवृत्तो ददृशे दूराद् भ्रातरं लक्ष्मणं तदा ॥ ११

श्रीरामः—

कथमुत्सृज्य वैदेहीं वने राक्षससेविते ॥ ११॥

मार्कण्डेयः—

इत्येवं भ्रातरं दृष्ट्वा सम्प्राप्तोऽसीति गर्हयन् ॥ १२

मृगरूपधरेणापि रक्षसा चापकर्षणम् ।
भ्रातुरागमनं चैव चिन्तयन् पर्यतप्यत ॥ १३

गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ॥ १३॥

श्रीरामः—

अपि जीवति वैदेही नेति पश्यामि लक्ष्मण ॥ १४

---

1. क—अर्धपञ्चकं नास्ति 2. ख—इदमर्धं नास्ति

मार्कण्डेयः—

तस्य तत् सर्वमाचख्यौ सीताया लक्ष्मणो वचः ।
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः ॥ १५

दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् ॥ १६

राक्षसं शङ्कमानस्तु विकृष्य बलवद्धनुः ।
अभ्यधावत काकुत्स्थस्  ततस्तं सहलक्ष्मणः ॥ १७

[1]स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ॥ १७॥

जटायुः—

गृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य वा ॥ १८

मार्कण्डेयः—

तस्य तद्वचनं श्रुत्वा सङ्गृह्य धनुषी शुभे ।
कोऽयं पितरमस्माकं नाम्नाऽऽहेत्यूचतुस्तदा ॥ १९

ततो ददृशतुस्तौ तु छिन्नपक्षद्वयं खगम् ॥ १९॥

तयोश्शशंस सीतार्थे स्वकीयं रावणाद्वधम् ॥ २०

अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः ।
तस्य गृध्रश्शिरः कम्पैर् आचचक्षे ममार च ॥ २१

दक्षिणेनेति काकुत्स्थो विदित्वाऽस्य तदिङ्गितम् ।
संस्कारं लम्भयामास सखायं पूजयन् पितुः ॥ २२

---

1. ख—इदमर्धं नास्ति

ततो दृष्ट्वाऽऽश्रमपदं व्यपविद्धबृसीकटम् ।
विध्वस्तकलशं शून्यं गोमायुबलसेवितम् ॥ २३
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ ।
जग्मतुर्दण्डकारण्यं दक्षिणेन परन्तपौ ॥ २४
वने महति तस्मिंस्तु रामस्सौमित्रिणा सह ।
ददर्श मृगयूथानि द्रवमाणानि सर्वशः ॥ २५
शब्दश्च घोरस्सत्त्वानां दावाग्नेरिव दह्यतः ।
अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम् ॥ २६
मेघपर्वतसङ्काशं सालस्कन्धं महाभुजम् ।
उरोगतविशालाक्षं महोदरमहामुखम् ॥ २७
यदृच्छया हि तद्रक्षः करे जग्राह लक्ष्मणम् ।
विषादमगमत् तस्य सौमित्रिरथ भारत ॥ २८
स राममभिसम्प्रेक्ष्य कृष्यते येन तन्मुखम् ।
विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमामिति ॥ २९
हरणं चैव वैदेह्या मम चायमुपप्लवः ।
राज्यभ्रंशश्च भवतस् तातस्य मरणं तथा ॥ ३०
[1]नाहं त्वां सह वैदेह्या समेतं कोसलागतम् ।
द्रक्ष्यामि प्रथिते राज्ये पितृपैतामहे स्थितम् ॥ ३१

---

1. क—अर्धचतुष्टयं नास्ति

द्रक्ष्यन्त्यार्यस्य धन्या ये जना श्रीसहितस्य वै ।
अभिषिक्तस्य वदनं सोमं व्यभ्रामलं यथा ॥ ३२

एवं बहुविधं धीमान् विललाप सलक्ष्मणः ।
तमुवाचाथ काकुत्स्थस् सम्भ्रमेष्वप्यसम्भ्रमः ॥ ३३

श्रीरामः—

मा विषादं नरव्याघ्र नैष किञ्चिन्मयि स्थिते ।
शक्तो धर्षयितुं वीर सुमित्रानन्दवर्धन ॥ ३४

छिन्ध्यस्य दक्षिणं बाहुं छिन्नस् सव्यो महाभुजः ॥ ३४॥

मार्कण्डेयः—

इत्येवमुक्त्वा रामस्तु भुजं तस्य न्यपातयत् ।
खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ३५॥

ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान् वशी ।
सौमित्रिरपि सम्प्रेक्ष्य भ्रातरं राघवं स्थितम् ॥ ३६॥

पुनर्जघान पादेन तद्रक्षो लक्ष्मणो भृशम् ।
गतासुरपतद्भूमौ तद्रक्षस्सुमहाबलः ॥ ३७॥

तस्य देहाद्विनिष्क्रम्य पुरुषो दिव्यदर्शनः ।
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ॥ ३८॥

पप्रच्छ रामस्तं वाग्मी कस्त्वं ब्रूहीति पृच्छतः ।

[1]रामोऽहं दर्शनं चित्रं दुर्दर्शं प्रतिभाति मे ॥ ३९॥

तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप ।
प्राप्तोऽस्मि ब्रह्मशापेन योनिं राक्षससेविताम् ॥ ४०॥

रावणेन हृता सीता लङ्कायां संनिवेशिता ।
सुग्रीवमभिगच्छस्व स ते साह्यं करिष्यति ॥ ४१॥

एषा पम्पा सितजला हंसकारण्डसेविता ।
ऋश्यमूकस्य शैलस्य संनिकर्षतटा नदी ॥ ४२॥

संवसत्यत्र सुग्रीवश् चतुर्भिस्सचिवैस्सह ।
भ्राता वानरराजस्य वालिनो हेममालिनः ॥ ४३॥

एतावच्छक्यमस्माभिर् वक्तुं द्रष्टासि जानकीम् ।
ध्रुवो वानरराजेन विदितो रावणालयः ॥ ४४॥

इत्युक्त्वा दिव्यपुरुषस् तदा त्वन्तर्हितोऽभवत् ।
विस्मयं जग्मतुरुभौ प्रवीरौ रामलक्ष्मणौ ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

---

1. क-ख—रामोहं किमिदं चित्रं दर्शनं
घ—कामया किमिदं चित्रमाश्चर्यं

## ॥ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥

रामेण सुग्रीवेण सख्यकरणपूर्वकं वालिहननम् ॥ १ ॥ रावणेनाशोकवने सीतानिवेशनपूर्वकं तद्वशीकरणाय राक्षसीनां नियोजनम् ॥ २ ॥ तत्र त्रिजटया रामरावणयोरिष्टानिष्टसूचकस्वदृष्टस्वाप्नप्रकारकथनेन सीतायाः परिसान्त्वनम् ॥ ३ ॥

मार्कण्डेयः—

ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम् ।
सीताहरणदुःखार्तः पम्पां रामस्समासदत् ॥ १

मारुतेन सुशीतेन सुखेनामृतगन्धिना ।
सेव्यमानो वने तस्मिञ् जगाम मनसा प्रियाम् ॥ २

विललाप स राजेन्द्रस् तत्र कान्तामनुस्मरन् ।
कामबाणाभिसन्तप्तं सौमित्रिस्तमथाब्रवीत् ॥ ३

लक्ष्मणः—

न त्वामेवंविधो भावस् स्प्रष्टुमर्हति मानद ।
आत्मवन्तमिव व्याधिः पुरुषं वृद्धसेवितम् ॥ ४

प्रवृत्तिरुपलब्धा ते वैदेह्या रावणालये ।
तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ॥ ५

अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम् ।
मयि भृत्ये च शिष्ये च सहाये च समाश्वस ॥ ६

मार्कण्डेयः—

एवं बहुविधैर्वाक्यैर् लक्ष्मणेन स राघवः ।

उक्तः प्रकृतिमापेदे कार्ये च त्वरितोऽभवत् ॥ ७
निषेव्य वारि पम्पायास् तर्पयित्वा पितॄनपि ।
प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ ८
तावृश्यमूकमभ्येत्य बहुमूलफलं गिरिम् ।
गिर्यग्रे वानरान् पञ्च वीरौ ददृशतुस्तदा ॥ ९
सुग्रीवः प्रेषयामास सचिवं वानरं तयोः ।
हनूमन्तं बुद्धिमन्तं हिमवन्तमिव स्थितम् ॥ १०
तेन सम्भाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः ।
सख्यं वानरराजेन चक्रे रामस्तदा नृप ॥ ११
[1]ततस्सीतां हृतां श्रुत्वा सुग्रीवो वालिना कृतम् ।
दुःखमाख्यातवान् सर्वं रामायामिततेजसे ॥ १२
तद्वासो दर्शयामास तस्य कार्ये निवेदिते ।
वानराय तदा सीता ह्रियमाणा व्यपासृजत् ॥ १३
तत्प्रत्ययकरं लब्ध्वा सुग्रीवं वानराधिपम् ।
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यषेचयत् ॥ १४
प्रतिजज्ञे च काकुत्स्थस् समरे वालिनो वधम् ।
सुग्रीवश्चापि वैदेह्याः पुनरानयने नृप ॥ १५
इत्येवं समयं कृत्वा विश्वास्य च परस्परम् ।

1. क—अर्धद्वयं नास्ति

अभ्येत्य सर्वे किष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः ॥ १६
[1]सुग्रीवः प्राप्य किष्किन्धां ननादाभ्रनिभस्वनः ।
नास्य तन्ममृषे वाली तारा तं प्रत्यषेधयत ॥ १७
[2]तथा नदति सुग्रीवो बलवांस्त्वेष वानरः ।
मन्ये चाश्रयवान् प्राप्तो न त्वं निर्गन्तुमर्हसि ॥ १८
हेममाली ततो वाली तारां ताराधिपाननाम् ।
उवाच वचनं वाग्मी तां वानरपतिः पतिः ॥ १९

वाली—

[3]सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता ।
केन वाऽऽश्रयवान् प्राप्तो ममैष भ्रातृगन्धिकः ॥ २०

मार्कण्डेयः—

चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा ।
पतिमित्यब्रवीत् प्राज्ञा शृणु सर्वं कपीश्वर ॥ २१
हृतदारो महासत्त्वो रामो दशरथात्मजः ।
तुल्यारिमित्रतां प्राप्तस् सुग्रीवेण धनुर्धरः ॥ २२
भ्राता चास्य महाबाहुस् सौमित्रिरपराजितः ।
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये ॥ २३
मैन्दश्च द्विविदश्चैव हनूमान्नाम वानरः ।
जाम्बवानृक्षराजश्च सुग्रीवसहितास्तथा ॥ २४

---

1. क—नासीदमर्षेम्
2. क—यथा नन्दति सुग्रीवो बलवानेष; ख-ग—यथा नदति सुग्रीवो
3. ख—इदमर्धं नास्ति

सर्वे एते महात्मनो बुद्धिमन्तो महाबलाः ।
अलं तव विनाशाय रामवीर्यं व्यपाश्रय ॥ २५

तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः ।
पर्यशङ्कत तां वाली सुग्रीवगतमानसाम् ॥ २६

तारां परुषमुक्त्वा तु निर्जगाम गुहामुखात् ।
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत ॥ २७

वाली—

असकृत् त्वं मया क्लीब निर्जितो जीवितप्रियः ।
मुक्तो गच्छसि दुर्बुद्धे कथं घोररणे पुनः ॥ २८

मार्कण्डेयः—

इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नं रामं सम्बोधयन्निव ॥ २९

सुग्रीवः—

हृतदारस्य मे राजन् हृतराज्यस्य च त्वया ।
किं नु जीवितसामर्थ्यम् इति विद्धि कपीश्वर ॥ ३०

मार्कण्डेयः—

एवमुक्त्वा बहुविधं ततस्तौ सन्निपेततुः ।
समरे वालिसुग्रीवौ सालतालशिलायुधौ ॥ ३१

उभौ जघ्नतुरन्योन्यम् उभौ तौ सन्निपेततुः ।
उभौ ववल्गतुश्चित्रं मुष्टिभिश्चाभिजघ्नतुः ॥ ३२

उभौ रुधिरसिक्ताङ्गौ नखदन्तपरिक्षतौ ।
शुशुभाते रुषा वीरौ पुष्पिताविव किंशुकौ ॥ ३३
न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते ।
सुग्रीवस्य तदा मालां हनुमान् कण्ठ आसजत् ॥ ३४
मालया सितया वीरश् शुशुभे कण्ठसक्तया ।
श्रीमानिव महाशैलो मलयो हेममालया ॥ ३५
कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महद्धनुः ।
विचकर्ष धनुश्श्रेष्ठं वालिमुद्दिश्य लक्ष्यन् ॥ ३६
विष्फारस्तस्य धनुषो वज्रस्येव तदा बभौ ।
वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ३७
स तेन मर्माभिहतो वक्त्राच्छोणितमुद्वमन् ।
ददर्शाग्रे स्थितं रामं आरात् सौमित्रिणा सह ॥ ३८
गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्च्छितः ।
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ॥ ३९
हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ।
तां च तारापतिमुखीं तारां निपतितेश्वराम् ॥ ४०
रामस्तु चतुरो मासान् पृष्ठे माल्यवतश्शुभे ।
निवासमकरोद्धीमान् सुग्रीवेणाभ्यवस्थितः ॥ ४१
रावणोऽपि पुरीं लङ्कां गत्वा कामबलात्कृतः ।

सीतां निवेशयामास भवने नन्दनोपमे ॥ ४२
अशोकवनिकाभ्याशे तापसाश्रमसन्निभे ।
भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी ॥ ४३
उपवासतपश्शीला ततस्सा पृथुलोचना ।
उवास दुःखवसतिं फलमूलकृताशना ॥ ४४
दिदेश राक्षसीस्तत्र रक्षणे राक्षसेश्वरः ।
प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ४५
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम् ।
त्रिस्तनीमेकपादां च त्रिजटां चैकलोचनाम् ॥ ४६
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कचमूर्धजाः ।
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ४७
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वनाः ।
तर्जयन्त्यस्तदा रौद्राः परुषव्यञ्जिताक्षराः ॥ ४८

राक्षस्यः—

खादाम पाटयामैनां तिलशः प्रविभज्यताम् ।
येयं भर्तारमस्माकम् अवमत्येह जीवति ॥ ४९

मार्कण्डेयः—

इत्येवं परिभर्सन्ती ताड्यमाना पुनः पुनः ।
भर्तृशोकसमाविष्टा निश्श्वस्यैवमुवाच ताः ॥ ५०

सीता—

आर्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीवने ।

विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ॥ ५१

अद्यैवाहं निराहारा जीवन्ती प्रियवर्जिता ।
शोषयिष्यामि गात्राणि वल्ली तलगता यथा ॥ ५२

न त्वन्यमभिगच्छेयं पुमांसं राघवादृते ।
इति जानीत सत्यं मे क्रियतां यदनन्तरम् ॥ ५३

मार्कण्डेयः—

तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत् सर्वमादितः ॥ ५४

गतासु तासु सर्वासु त्रिजटा नाम राक्षसी ।
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ॥ ५५

त्रिजटा—

सीते वक्ष्यामि ते किञ्चिद् विश्वासं कुरु मे सखि ।
भयं ते व्येतु वामोरु शृणु चेदं वचो मम ॥ ५६

अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः ।
सदा रामहितान्वेषी त्वदर्थे मामचूचुदत् ॥ ५७

सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च ॥ ५७॥

अविन्ध्यः—

भर्ता ते कुशली रामो लक्ष्मणानुगतो बली ॥ ५८

सख्यं वानरराजेन शक्रप्रतिमतेजसा ।
कृतवान् राघवश्श्रीमांस् त्वदर्थे च कृतोद्यमः ॥ ५९

मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् ।
नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ॥ ६०

शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशत् ।
न शक्नोत्यवशां नारीम् उपैतुमजितेन्द्रियः ॥ ६१

क्षिप्रमेष्यति ते भर्ता सुग्रीवेण सह प्रभुः ।
सौमित्रिणा च वीरेण ततस्त्वां मोक्षयिष्यति ॥ ६२

त्रिजटा—

स्वप्ने हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यस्य कुलस्य च ॥ ६३

दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः ।
स्वभावशीलदोषेण सर्वेषां भयवर्धनः ॥ ६४

स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः ।
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ६५

तैलाभिषिक्तो विकचो मज्जन् पङ्के दशाननः ।
असकृत् खरयुक्ते तु रथे नित्यमवस्थितः ॥ ६६

कुम्भकर्णादयश्चैव नग्नाः पतितमूर्धजाः ।
कृष्यन्ते दक्षिणामाशां रक्तमाल्यानुलेपनाः ॥ ६७

श्वेतातपत्रस्सोष्णीषश् शुक्लमाल्यो विभीषणः ।
श्वेतपर्वतमा[1]रूढो मोक्ष्यतेऽस्मान् महाभयात् ॥ ६८

---

1. ख—मासाद्य भुञ्जानो घृतपायसम् । [मध्ये अर्धेयं नास्ति]

रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा ।
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ॥ ६९

हस्तिसञ्चयमारूढो भुञ्जानो घृतपायसम् ।
लक्ष्मणश्च मया दृष्टो विपश्यन् सर्वतो दिशम् ॥ ७०

रुदन्ती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता ।
असकृत् त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ॥ ७१

हर्षमेष्यसि वैदेहि क्षिप्रं भर्तृसमन्विता ॥ ७१॥

मार्कण्डेयः—

इति सा मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः ।
बभूवाशावती बाला भर्तुरेव समागमे ॥ ७२॥

तावदभ्यागता रौद्र्यः पिशाच्यस्ता महारवाः ।
ददृशुस्तां त्रिजटया सहसीतां यथापुरम् ॥ ७३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ अस्मिन्नध्याये ७३॥ श्लोकाः ]

---

## ॥ षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥

रावणेन सीतासमीपमेत्य बहुधा प्रलोभनेऽप्यविकृतमानसया तया प्रत्याख्याने स्वावासं प्रति गमनम् ॥

मार्कण्डेय:—

ततस्तां भर्तृशोकार्तां दीनां मलिनवाससीम् ।
मणिशेषाभ्यलङ्कारां रुदतीं सुपतिव्रताम् ॥ १
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले ।
रावणः कामबाणार्तो ददर्शोपससर्प च ॥ २
देवदानवगन्धर्वयक्षकिम्पुरुषैर्युधि ।
अजितोऽशोकवनिकां ययौ कन्दर्पमोहितः ॥ ३
दिव्याम्बरधरश्श्रीमान् सुमृष्टमणिकुण्डलः ।
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ॥ ४
स कल्पवृक्षसदृशो यत्नादपि विभूषितः ।
श्मशानचैत्यद्रुमवद् भूषितोऽपि भयङ्करः ॥ ५
स तस्यास्तनुमध्यायास् समीपे रजनीचरः ।
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ॥ ६
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः ।
इदमित्यब्रवीद् बालां त्रस्तां मृगवधूमिव ॥ ७

रावणः—
सीते पर्याप्तमेतावत् कृतो भर्तुरनुग्रहः ।
कुरु प्रसादं तन्वङ्गि क्रियतां परिकर्म ते ॥ ८

भजस्व मां वरारोहे महार्हाभरणाम्बरा ।
भव मे सर्वनारीणाम् उत्तमा वरवर्णिनी ॥ ९

सन्ति दानवकन्याश्च राजर्षीणां तथाऽङ्गनाः ।
तासामद्य विशालाक्षि सर्वासां मे भवोत्तमा ॥ १०

चतुर्दश पिशाचानां कोट्यो मे वचसि स्थिताः ।
द्विस्तावत् पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ११

ततो मे त्रिगुणा यक्षा ये मे वचनकारिणः ।
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ॥ १२

[1]गन्धर्वाप्सरसो भद्रे मामापानगतं सदा ।
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ १३

पुत्रोऽहमपि विप्रर्षेस् साक्षाद्विश्रवसो मुनेः ।
पञ्चमो लोकपालानाम् इति मे प्रथितं यशः ॥ १४

दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च ।
यथैव त्रिदशेशस्य तथैव [2]भज भामिनि ॥ १५

क्षीयतां दुष्कृतं कर्म वनवासकृतं तव ।
भार्या मे भव सुश्रोणि यथा मण्डोदरी तथा ॥ १६

---

1. ख—इदमर्धं नास्ति    2. अ—मम

मार्कण्डेयः—

इत्युक्ता तेन वैदेही परिधृत्य शुभानना ।

तृणमन्तरतः कृत्वा तमुवाच निशाचरम् ॥ १७

अर्दितेव हि वामोरूरजस्रं नेत्रवारिणा ।

स्तनावपतितौ बाला सहितावभिवर्षती ॥ १८

[1]व्यवस्थाप्य कथञ्चित् सा विषाददतिमोहिता ।

उवाच रावणं क्षुद्रं वैदेही पतिदेवता ॥ १९

सीता—

असकृद्वदतो वाक्यम् ईदृशं राक्षसेश्वर ।

विषादयुक्तमेतत् ते मया श्रुतमभाग्यया ॥ २०

तद्भद्रमुख भद्रं ते मानसं विनिवर्त्यताम् ।

परदाराऽस्म्यलभ्या च सततं च पतिव्रता ॥ २१

न चैवौपयिकी भार्या मानुषी तव राक्षस ।

विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि ॥ २२

प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ।

न च पालयसे धर्मं लोकपालसमः कथम् ॥ २३

भ्रातरं राजराजं तं महेश्वरसखं प्रभुम् ।

धनेश्वरं व्यपदिशन् कथं त्विह न लज्जसे ॥ २४

मार्कण्डेयः—

इत्युक्त्वा प्रारुदत् सीता कम्पयन्ती पयोधरौ ।

1. ख—इदमर्धं नास्ति

शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्य वाससा ॥ २५

तस्या रुदन्त्या भामिन्या दीर्घा वेणी सुसंयता ।

ददृशे सा विषास्निग्धा काली व्यालीव मूर्धनि ॥ २६

तच्छ्रुत्वा रावणो वाक्यं सीतयोक्तमनिष्ठुरम् ।

प्रत्याख्यातोऽपि दुर्मेधाः पुनरे[1]वाब्रवीद्वचः ॥ २७

रावणः—

काममङ्गानि मे सीते धुनोति मकरध्वजः ।

न त्वामकामां सुश्रोणीं समेष्ये चारुहासिनीम् ॥ २८

किं नु शक्यं मया कर्तुं यत् त्वमद्यापि मानुषम् ।

आहारभूतमस्माकं राममेवावरुध्यसे ॥ २९

मार्कण्डेयः—

इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसगणेश्वरः ।

तत्रैवान्तरितो भूत्वा जगामाभिमतां दिशम् ॥ ३०

राक्षसीभिः परिवृता वैदेही शोककर्शिता ।

सेव्यमाना त्रिजटया तत्रैव न्यवसत् तदा ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

---

1. ख—वानुरुध्यते ; मध्ये अर्धचतुष्टयं नास्ति (28, 29 श्लोकौ)

## ॥ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥



रामेण शरदागमेऽपि विषयासक्त्या स्वानुपसर्पिणं सुग्रीवं प्रति लक्ष्मणप्रेषणम् ॥ १ ॥ सुग्रीवेण सह रामान्तिकमागतेन लक्ष्मणेन तं प्रति सीतान्वेषणाय सुग्रीवकृतवानरप्रेषणनिवेदनम् ॥ २ ॥ ततो लङ्कापुरात्प्रति निवृत्तेन हनुमताङ्गदादिभिः सह मधुवनभङ्गपूर्वकं रामाय सीतावृत्तान्तादि निवेदनपूर्वकं तद्दत्तचूडामणिदानम् ॥ ३ ॥

मार्कण्डेयः—

रामस्तु सहसौमित्रिस् सुग्रीवेणाभिपालितः ।
वसन् माल्यवतः पृष्ठे ददर्श विमलं नभः ॥ १

स दृष्ट्वा विमले व्योम्नि निर्मलं शशलाञ्छनम् ।
[1]ग्रहनक्षत्रताराभिर् अनुयान्तममित्रहा ॥ २

कुमुदोत्पलगन्धेन गन्धमादाय वायुना ।
महीधरस्थस्सहसा शीतेन प्रतिबोधितः ॥ ३

प्रभाते लक्ष्मणं वीरम् अभ्यभाषत दुर्मनाः ।
सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि ॥ ४

श्रीरामः—

गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरम् ।
प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ॥ ५

योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः ।

---

1. ख—इदमर्धं नास्ति

सर्ववानरगोपुच्छा ऋक्षाश्चैनं भजन्ति वै ॥ ६
यदर्थे निहतो वाली मया रघुकुलोद्वह ।
[1]त्वया सह महाबाहो किष्किन्धोपवने पुरा ॥ ७
कृतघ्नं तमहं मन्ये वानरापशदं भुवि ।
यो मामेवंगतो मूढो न जानीतेऽद्य लक्ष्मण ॥ ८
असौ मन्ये न जानीते समयप्रतिपादनम् ।
कृतोपकारं मां नूनम् अवमत्याल्पया धिया ॥ ९
यदि तावदनुद्युक्तश् शेते कामसुखात्मकः ।
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ १०
अथापि घटतेऽस्माकम् अर्थे वानरपुङ्गवः ॥
तमादायेह काकुत्स्थ त्वरावान् भव माचिरम् ॥ ११

मार्कण्डेयः—

इत्युक्तो लक्ष्मणो भ्राता गुरुवाक्यहिते रतः ।
प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ॥ १२
किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः ।
सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः ॥ १३
तं सदारो विनीतात्मा सुग्रीवः प्लवगेश्वरः ।
पूजया प्रतिजग्राह प्रीयमानस्तदर्हया ॥ १४

---

1. ख—इदमर्धं नास्ति

तमब्रवीद्रामवचस् सौमित्रिरकुतोभयः ।
[1]स तत् सर्वमशेषेण शुश्राव हरिपुङ्गवः ॥ १५

सभृत्यस्तं तदा प्रह्वस् स वानरगणाधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं वानरर्षभः ॥ १६

सुग्रीवः—

नास्मि लक्ष्मण दुर्मेधा नाकृतज्ञो न निर्घृणः ।
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः ॥ १७

दिशः प्रस्थापितास्सर्वे विनीता हरयो मया ।
सर्वेषां च कृतः कालो मासेऽभ्यागमने पुनः ॥ १८

यैरियं सवना साद्रिस् सपुरा सागराम्बरा ।
विचेतव्या महावीर सग्रामनगराकरा ॥ १९

स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति ।
ततश्श्रोष्यसि रामेण सहितस्सुमहत् प्रियम् ॥ २०

मार्कण्डेयः—

इत्युक्तो वानरेन्द्रेण लक्ष्मणस्तेन धीमता ।
त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् ॥ २१

स रामं सहसुग्रीवो माल्यवत्पृष्ठमाश्रितम् ।
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ॥ २२

---

1. ख—इदमर्धं नास्ति

इत्येवं वादिनस्तस्य आयाता वानरास्तदा ।
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः ॥ २३

आचख्युस्ते च रामाय मही सागरमेखला ।
विचिता न तु वैदेह्या दर्शनं राक्षसस्य वा ॥ २४

गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः ।
आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽभ्यधारयत् ॥ २५

द्विमासोपरमे काले व्यतीते प्लवगास्तदा ।
सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ २६

वानराः—

रक्षितं वालिना यत् तत् स्फीतं मधुवनं तदा ।
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः ॥ २७

वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः ।
विचेतुं दक्षिणामाशां राजन् प्रस्थापितास्त्वया । २८

मार्कण्डेयः—

तेषां सप्रणयं श्रुत्वा स मेने कृतकृत्यताम् ।
कृतार्थानां हि भृत्यानाम् एतद्भवति चेष्टितम् ॥ २९

[1]स तद्रामाय मेधावी शशंस प्लवगर्षभः ।
रामश्चाप्यनुमानेन मेने दृष्टां च मैथिलीम् ॥ ३०

हनुमत्प्रमुखाश्चापि विश्रुतास्ते प्लवङ्गमाः ।

---

1. ख—इदमर्धं नास्ति

अभिजग्मुर्हरीन्द्रं ते रामलक्ष्मणसंनिधौ ॥ ३१

गतिं च मुखवर्णं च दृष्ट्वा रामो हनूमतः ।
अगमत् प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ३२

हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः ।
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ॥ ३३

तानुवाचागतान् रामः प्रगृह्य रुचिरं धनुः ॥ ३३॥

श्रीरामः—

अपि मां जीवयिष्यध्वम् अपि वः कृतकृत्यता ।
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः ॥ ३४॥

निहत्य समरे शत्रून् आहृत्य जनकात्मजाम् ।
अमोक्षयित्वा वैदेहीम् अहत्वा च रिपुं रणे ॥ ३५॥

हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ॥ ३६

मार्कण्डेयः—

इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः ॥ ३६॥

हनुमान्—

प्रियमाख्यामि ते राम दृष्टाऽऽर्या जानकी मया ॥ ३७

विचित्य दक्षिणामाशां सपर्वतवनौकसाम् ।
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहां ॥ ३८

प्रविशामश्च वयं तां स्म बहुयोजनमायताम् ।

सान्धकारां सुविपिनां गहनां कीटसेविताम् ॥ ३९

गत्वा सुमहदध्वानम् आदित्यस्य प्रभां ततः ।
दृष्टवन्तश्च तत्रैव भवनं दिव्यमन्तरा ॥ ४०

मयस्य किल दैत्यस्य तदा सद्देश्म राघव ।
तत्र प्रभावती नाम तपोऽतप्यत तापसी ॥ ४१

तया दत्तानि भोज्यानि पानानि विविधानि च ।
भुक्त्वा लब्धबलास्सन्तस् तयोक्तेन पथा ततः ॥ ४२

निर्याय तस्मादुद्देशात् पश्याम लवणाम्भसः ।
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ॥ ४३

ततो मलयमारुह्य पश्यन्तो वरुणालयम् ।
विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ॥ ४४

अनेकशतविस्तीर्णं योजनानां महोदधिम् ।
तिमिनक्रझषावासं चिन्तयन्तस्सुदुःखिताः ॥ ४५

[1]तत्रानशनसङ्कल्पं कृत्वाऽऽसीना वयं तदा ।
ततः कथायां गृध्रस्य जटायोरभवत् कथा ॥ ४६

ततः पर्वतशृङ्गाभं घोररूपं भयावहम् ।
पक्षिणं दृष्टवन्तस्स वैनतेयमिवापरम् ॥ ४७
सोऽस्मानतर्कयद्भोक्तुम् अथाभ्येत्य वचोऽब्रवीत् ॥ ४७॥

---

1. अ-घ—नास्तीदमर्धम्

पक्षी—

भोः क एष मम भ्रातुर् जटायोः कुरुते कथाम् ॥ ४८

सम्पातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ।

अन्योन्यस्पर्धया रूढावावामादित्यसंसदम् ॥ ४९

तदा दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः ।

[1]तस्मान्मे चिरदृष्टस्तु भ्राता गृध्रपतिः प्रियः ॥ ५०

निर्दग्धपक्षः पतितो ह्यहमस्मिन् महागिरौ ।

द्रष्टुं वीरं न शक्नोमि भ्रातरं वै जटायुषम् ॥ ५१

हनुमान्—

तस्यैवं वदतोऽस्माभिर् हतो भ्राता निवेदितः ।

[2]व्यसनं भवतश्चेदं सङ्क्षेपाद्वै निवेदितम् ॥ ५२

सम्पातिस्तु तदा राजञ् श्रुत्वा सुमहदप्रियम् ।

विषण्णचेताः पप्रच्छ पुनरस्मानरिंदमः ॥ ५३

सम्पातिः—

कश्च रामः कथं सीता जटायुश्च कथं हतः ।

इच्छामि सर्वमेवैतच् छ्रोतुं प्लवगसत्तमाः ॥ ५४

हनुमान्—

तस्याहं सर्वमेवैतं भवतो व्यसनागतम् ।

प्रायोपवेशने चापि हेतुं विस्तरशोऽब्रुवम् ॥ ५५

1. ख—अर्धद्वयं नास्ति 2. अ—नास्तीदमर्धम्

सोऽस्मानाश्वासयामास वाक्येनानेन पक्षिराट् ॥ ५५॥

सम्पातिः—

रावणो विदितो मह्यं लङ्का चास्य महापुरी ।
दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ॥ ५६॥

भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा ॥ ५७

हनुमान्—

इति तस्य वचश्श्रुत्वा वयमुत्थाय सत्वराः ।
सागरप्लवने मन्त्रं मन्त्रयामः परंतप ॥ ५८

नाध्यगच्छद्यदा कश्चित् सागरस्य विलङ्घनम् ।
ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् ॥ ५९

शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ५९॥

तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
उपवासतपश्शीला भर्तृदर्शनलालसा ॥ ६०॥

जटिला मलदि[1]ग्धाङ्गा कृशा दीना तपस्विनी ॥ ६१

निमित्तैस्तामहं सीताम् उपलभ्य पृथग्विधैः ।
उपसृत्याब्रवं न्यायाद् अभिगम्य रहोगताम् ॥ ६२

सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ।
त्वद्दर्शनमभिप्रेप्सुर् इह प्राप्तो विहायसा ॥ ६३

1. क-ख—दिग्दाङ्गी

राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ॥ ६४

कुशलं त्वाऽब्रवीद्रामस् सीते सौमित्रिणा सह ।
सखिभावाच्च सुग्रीवः कुशलं त्वाऽनुपृच्छति ॥ ६५

क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैर्वृतः ।
गम्यतामिति मां सीता तदा प्रादादिमं मणिम् ॥ ६६

धारिता येन वैदेही कालमेनमनिन्दिता ।
प्रत्ययार्थं कथां चेमां कथयामास जानकी ॥ ६७

जानकी—

क्षिप्तामिषीकां काकस्य चित्रकूटे महागिरौ ।
ममाङ्के पुरुषव्याघ्रः प्रत्यभिज्ञानकारणात् ॥ ६८

एकाक्षिविकलः काकस् सुदुष्टात्मा कृतश्च वै ॥ ६८॥

मार्कण्डेयः—

श्रावयित्वा तथाऽऽत्मानं ततो दग्ध्वा च तां पुरीम् ।
सम्प्राप्तोऽस्मीति तं रामः प्रियवादिनमार्चयत् ॥ ६९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ६९॥ श्लोकाः]

---

## ॥ अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥

वानरसेनापतिभिस्स्वस्वसैन्यैस्सह रामसुग्रीवोपासनम् ॥ १॥ वानरसेनाभिस्सह सागरतीरमुपागतेन रामेण सेनानां सागरतरणाय समुद्राराधनार्थं नियमेन दर्भसंस्तरे शयनम् ॥ २ ॥ सागरेण रामं प्रति स्वप्ने स्वात्मप्रदर्शनपूर्वकं नलेन सेतुनिर्मापणचोदना ॥ ३ ॥ रामेण शरणार्थिनो विभीषणस्य लङ्काराज्येऽभिषेचनपूर्वकं सेतुमार्गेण सैन्यैः सह लङ्कागमनम् ॥ ४ ॥

मार्कण्डेयः—

ततस्तस्यैव रामस्य समासीनस्य तैस्सह ।
समाजग्मुः कपिवरास् सुग्रीववचनात् ततः ॥ १

वृतः कोटिसहस्रेण वानराणां तरस्विनाम् ।
श्वशुरो वानरश्श्रीमान् सुषेणो राममभ्यगात् ॥ २

कोटीशतवृतौ चाऽपि गजो गवय एव च ।
वानरेन्द्रौ महाबाहू पृथक् पृथगदृश्यताम् ॥ ३

षष्टिः कोटिसहस्राणि प्रकर्षन् प्रत्यदृश्यत ।
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ॥ ४

गन्धमादनवासी तु प्रथितो गन्धमादनः ।
कोटीशतसहस्राणि हरीणां समकर्षत ॥ ५

पनसो नाम मेधावी वानरस्सुमहाबलः ।
कोट्या च द्वादश त्रिंशत् पञ्च पञ्च च कर्षति ॥ ६

श्रीमान् दधिमुखो नाम हरिर्वृद्धोऽपि वीर्यवान् ।
[1]प्रचकर्ष महत् सैन्यं हरीणां भीमतेजसाम् ॥ ७

कृष्णानां मुखपुण्ड्राणां मृगाणां भीमकर्मणाम् ।
कोटीशतसहस्रेण जाम्बवान् प्रत्यदृश्यत ॥ ८

एते चान्ये च बहवो हरियूथपयूथपाः ।
असङ्ख्येया महाराज समीयू रामकारणात् ॥ ९

शिरीषकुसुमाभानां सिंहानामिव नर्दताम् ।
[2]श्रूयते तुमुलश्शब्दस् तत्रतत्र स्म धावताम् ॥ १०

गिरिकूटनिभाः केचित् केचिन्महिषसन्निभाः ।
[3]शरदभ्रप्रतीकाशाः [4]पिष्टहिङ्गुदिकाननाः ॥ ११

उत्पतन्तः प्लवन्तश्च प्लवमानाश्च वानराः ।
उद्धून्वन्तोऽपरे रेणून् समाजग्मुस्समन्ततः ॥ १२

स वानरमहालोकः पूर्णसागरसन्निभः ।
निवेशमकरोत् तत्र सुग्रीवानुमते तदा ॥ १३

ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः ।
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चापि पूजिते ॥ १४

तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव ।

---

1. क—अर्धचतुष्टयं नास्ति 2. क—नास्तीदमर्धम्
3. क—शरदूगुह+हिङ्गुलिकाननाः ख—शरदाभ्र+हिङ्गुलिकाननाः
4. ख—अयं पादोऽनन्तरश्च न स्तः

प्रययौ राघवश्श्रीमान् सुग्रीवसहितस्तदा ॥ १५

मुखमासीत् तु सैन्यस्य हनूमान् मारुतात्मजः ।
जघनं पालयामास सौमित्रिरकुतोभयः ॥ १६

बद्धगोधाङ्गुलित्राणौ राघवौ तत्र जग्मतुः ।
[1]धृतौ हरिमहामात्यैश् चन्द्रसूर्यौ ग्रहैरिव ॥ १७

प्रबभौ हरिसैन्यं तत् सालतालशिलायुधम् ।
सुमहच्छालिभवनं यथा सूर्योदयं प्रति ॥ १८

नलनीलाङ्गदाक्रान्ता मैन्दद्विविदपालिता ।
ययौ सा महती सेना राघवस्यार्थसिद्धये ॥ १९

विधिवत्सु प्रशस्तेषु बहुमूलफलेषु च ।
[2]प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ॥ २०

निवसन्ती निराबाधा तथैव गिरिसानुषु ।
[3]उपायाद्धरिसेना सा क्षारोदमिव सागरम् ॥ २१

द्वितीयसागरनिभं तद्बलं बहुलध्वजम् ।
वेलावनं समासाद्य निवेशमकरोत् तदा ॥ २२

ततो दाशरथिश्श्रीमान् सुग्रीवं प्रत्यभाषत ।
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ २३

---

1. क—अर्धपञ्चकं नास्ति
2. ख—इदमर्धं नास्ति
3. क—अर्धपञ्चकं नास्ति

श्रीरामः—

उपायः को नु भवतां मम सागरलङ्घने ।
इयं च महती सेना सागरश्चापि दुस्तरः ॥ २४

मार्कण्डेयः—

[1]तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः ।
समर्था लङ्घने सिन्धोर् न तत्कृत्स्नाश्च वानराः ॥ २५
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः ।
नेति रामश्च तान् सर्वान् सान्त्वयन् प्रत्यभाषत ॥ २६

श्रीरामः—

शतयोजनविस्तारम् अशक्तास्सर्ववानराः ।
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः ॥ २७
नावो न सन्ति सेनाया बह्वयस्तारयितुं तथा ।
[2]वणिजामुपघातं च कथमस्मद्विधश्चरेत् ॥ २८
विस्तीर्णं चैव तत् सैन्यं हन्याच्छिद्रेषु चापरः ।
प्लवोडुपप्रतारश्च नैवात्र मम रोचते ॥ २९
अहं चेमं जलनिधिं [3]समाराध्याप्युपायतः ।
[4]प्रतिशोष्याम्युपवसन् दर्शयिष्यति मां ततः ॥ ३०

---

1. ख—अर्धचतुष्टयं नास्ति 2. ख—अर्धत्रयं नास्ति
3. ख-च—समाराध्याम्युपायतः
4. ख—शि; च—शेष्याम्युपवरं

न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः ।
महास्त्रैरप्रतिहतैर् अत्यग्निपवनोज्ज्वलैः ॥ ३१

मार्कण्डेयः—

इत्युक्त्वा सहसौमित्रिर् उपस्पृश्याथ राघवः ।
प्रतिशिश्ये जलनिधिं विधिवद्दर्भसंस्तरे ॥ ३२

सागरस्तु ततस्सुप्तं दर्शयामास राघवम् ।
देवो नदनदीभर्ता श्रीमान् यादोगणैर्वृतः ॥ ३३

कौसल्यामातरित्येवम् आभाष्य मधुरं वचः ।
इदमित्याह मतिमान् वानरैश्शतशो वृतम् ॥ ३४

सागरः—

ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ ।
ऐक्ष्वाकोऽस्मि च ते ज्ञाती राम सत्यपराक्रम ॥ ३५

मार्कण्डेयः—

एवमुक्तस्समुद्रेण रामो वाक्यमथाब्रवीत् ॥ ३५॥

श्रीरामः—

मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते ॥ ३६

येन गत्वा दशग्रीवं हन्याम कुलपांसनम् ।
राक्षसं [1]सानुजं तं तु मम भार्यापहारिणम् ॥ ३७

यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् ।

---

1. क-ख—बन्धं तु ; घ—सानुजं हन्तुं

शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः ॥ ३८

मार्कण्डेयः—

इत्येवं ब्रुवतश्श्रुत्वा रामस्य वरुणालयः ।
उवाच व्यथितो वाक्यम् इति बद्धाञ्जलिस्स्थितः ॥ ३९

सागरः—

नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव ।
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर ॥ ४०
यदि दास्यामि ते मार्गं सैन्यस्य भवदाज्ञया ।
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् ॥ ४१
अस्ति त्वत्र नलो नाम वानरश्शिल्पिसत्तमः ।
त्वष्टुः काकुत्स्थ तनयो बलवान् विश्वकर्मणः ॥ ४२
स यत् काष्ठं तृणं वाऽपि शिलां प्रक्षिप्यते मयि ।
समस्तं धारयिष्यामि स ते सेतुर्भविष्यति ॥ ४३

मार्कण्डेयः—

इत्युक्त्वाऽन्तर्हिते तस्मिन् रामो नलमथाब्रवीत् ।

श्रीरामः—

कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम ॥ ४४

मार्कण्डेयः—

तेनोपायेन काकुत्स्थस् सेतुबन्धमकारयत् ।
दशयोजनविस्तारमायतं शतयोजनम् ॥ ४५

नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।
स रामाज्ञां पुरस्कृत्य धार्यते गिरिसन्निभः ॥ ४६

तत्रैव स तु धर्मात्मा समागच्छद्विभीषणः ।
भ्राता तु राक्षसेन्द्रस्य चतुर्भिस्सचिवैस्सह ॥ ४७

[1]प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।
सुग्रीवस्य तु शङ्काऽभूत् प्रणिधिस्स्यादिति स्म ह ॥ ४८

राघवस्तस्य चेष्टाभिस् सम्यक् च चरितेङ्गितैः ।
यदा तत्त्वेन दुष्टोऽभूत् तत एनमपूजयत् ॥ ४९

सर्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम् ।
चक्रे च मन्त्रिप्रवरं सुहृदं लक्ष्मणस्य च ॥ ५०

विभीषणमते चैव सोऽत्यक्रामन्महार्णवम् ।
ससैन्यस्सेतुना तेन मासेनैव नराधिपः ॥ ५१

ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः ।
भेदयामास कपिभिर् महान्ति च बहूनि च ॥ ५२

तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ ।
चारौ वानररूपेण तौ जग्राह विभीषणः ॥ ५३

प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ ।

1. क—अर्धपञ्चकं नास्ति

दर्शयित्वा ततस्सैन्यं रामः पश्चादवासृजत् ॥ ५४
निवेश्योपवने सैन्यं स शूरः प्राज्यवानरम् ।
प्रेषयमास दौत्येन रावणस्य ततोऽङ्गदम् ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

## ॥ एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

अङ्गदेन रावणाय रामसंदेशनिवेदनपूर्वकं पुना रामसमीपगमनम् ॥ १ ॥ वानरै रामाज्ञया लङ्काप्राकारादिविभेदनपूर्वकं राक्षसैस्सह योधनम् ॥ २ ॥ ततो रामेण स्वसेनानामवहारः ॥ ३ ॥

मार्कण्डेयः—

प्रभूताम्भोदके तस्मिन् बहुमूलफले वने ।
सेनां निवेश्य काकुत्स्थो विधिवत् पर्यरक्षत ॥ १
रावणस्तु विधिं चक्रे लङ्कायां [1]शास्त्रनिर्मितम् ।
प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा ॥ २
अगाधतोयाः परिखा मीननक्रसमाकुलाः ।
बभूवुस्सप्त परिघाः [2]खादिरैश्शङ्कुभिश्चिताः ॥ ३
कर्णाट्टयन्त्रा दुर्धर्षा बभूवुर्बहुघोपलाः ।

1. अ—शास्त्रनिर्मिताम्
2. ख—बहुयन्त्रकृतोपलाः [मध्ये अर्धं नास्ति]

[1]साशीविषगुणायोधास् ससर्जरसपांसवः ॥ ४
मुसलालातनाराचास् तोमरासिपरश्वथाः ।
अन्विताश्च शतघ्नीभिस् समधूच्छिष्टमुद्गराः ॥ ५
पुरद्वारेषु सर्वेषु गुल्मास्स्थावरजङ्गमाः ।
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ६
अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः ।
विदितो राक्षसेन्द्रस्य प्रविवेश हतव्यथः ॥ ७
[2]मध्ये राक्षसकोटीनां बह्वीनां स महाबलः ।
शुशुभे मेघमालाभिर् आदित्य इव संवृतः ॥ ८
स समासाद्य पौलस्त्यम् अमात्यैरभिसंवृतम् ।
रामसंदेशमागम्य वाग्मी वक्तुं प्रचक्रमे ॥ ९

अङ्गदः—

आह त्वां राघवो राजन् कोसलेन्द्रो महाबलः ॥ ९॥

श्रीरामः—

प्राप्तकालमिदं वाक्यं तदादत्स्व सुदुर्मते ॥ १०
अकृतात्मानमासाद्य राजानमनये रतम् ।
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ११
त्वयैकेनापराधेन सीताप्यपहृता बलात् ।

---

1. ख—आदौ + खोमरासिपरश्वथाः [मध्ये अर्धं नास्ति]
2. अ-ब—अर्धद्वयं नास्ति

वधायानपराधानाम् अन्येषां तद्भविष्यति ॥ १२
ये त्वया बलदर्पाणाम् आविष्टेन वनेचराः ।
ऋषयो हिंसिताः पूर्वं देवताश्चावमानिताः ॥ १३
राजर्षयश्च निहता रुदन्त्यश्चाहृतास्त्रियः ।
तदिदं समनुप्राप्तं फलं तस्यानयस्य ते ॥ १४
हन्तास्मि त्वां सहामात्यं बुध्यस्व पुरुषो भव ।
पश्य मे धनुषो वीर्यं मानुषस्य निशाचर ॥ १५
मुञ्च तां जानकीं मा वा न वै मोक्षोऽथ कर्हिचित् ।
अराक्षसमिमं लोकं कर्तास्मि निशितैश्शरैः ॥ १६

मार्कण्डेयः—

इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः ।
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्च्छितः ॥ १७
इङ्गितज्ञास्ततो भर्तुश् चत्वारो रजनीचराः ।
चतुर्ष्वङ्गेषु जगृहुश् शार्दूलमिव पक्षिणः ॥ १८
तांस्ततोऽङ्गेषु संसक्तान् अङ्गदो रजनीचरान् ।
आदायैव समुत्पत्य प्रासादतलमाविशत् ॥ १९
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः ।
भुवि सम्भिन्नहृदयाः प्रहारपरिपीडिताः ॥ २०
समुक्तो हर्म्यशिखरात् तस्मात् पुनरवापतत् ।
लङ्घयित्वा पुरीं रम्यां सुवेलस्य समीपतः ॥ २१

कोसलेन्द्रमथाभ्येत्य सर्वमावेद्य चाङ्गदः ।
विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥* २२

ततस्सर्वाभिसारेण हरीणां वातरंहसाम् ।
भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ॥ २३

विभीषणर्क्षाधिपतीन् पुरस्कृत्याथ लक्ष्मणः ।
दक्षिणं नगरद्वारम् अवामृद्नाद्दुरासदम् ॥ २४

करभारुणगात्राणां हरीणां युद्धशालिनाम् ।
कोटीशतसहस्रेण लङ्कामभ्यपतंस्ततः ॥ २५

उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः ।
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः ॥ २६

शालिप्रसूनसदृशैश् शिरीषकुसुमप्रभैः ।
तरुणादित्यसदृशैर् अतिगौरैश्च वानरैः ॥ २७

प्राकारं ददृशुस्ते तु समन्तात् कपिभिर्वृतम् ।
राक्षसा विष्ठिताश्चासन् सस्त्रीवृद्धास्समन्ततः ॥ २८

बिभिदुस्ते मणिस्तम्भान् कर्णाट्टशिखराणि च ।
भग्नोन्मथितशृङ्गाणि यन्त्राणि च विचिक्षिपुः ॥ २९

परिगृह्य शतघ्नीश्च निचक्रास्सहलोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महाबलाः ॥ ३०

---

* ख—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

प्राकारस्थाश्च ये केचिन्निशाचरगणास्तदा ।
प्रदुद्रुवुस्ते शतशः कपिभिस्समनुद्रुताः ॥ ३१

ततस्तु राजवचनाद् राक्षसाः कामरूपिणः ।
निर्ययुर्विकृताकारास् सहस्रशतसङ्घशः ॥ ३२

अश्मवर्षाणि वर्षन्तो द्रावयन्तो वनौकसः ।
प्राकारं शोधयन्तस्ते परं विस्मयमास्थिताः ॥ ३३

स माषराशिसदृशैर् बभूव क्षणदाचरैः ।
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥ ३४

पेतुश्शूलविनिर्भिन्ना बहवो वानरर्षभाः ।
स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ॥ ३५

केशाकेश्यभवद्युद्धं रक्षसां वानरैस्सह ।
नखैर्दन्तैश्च वीराणां खादतां च परस्परम् ॥ ३६

निष्टनन्तो ह्युभयतस् तत्र वानरराक्षसाः ।
हता निपतिता भूमौ नैवामुञ्चन् परस्परम् ॥ ३७

रामस्तु शरजालानि ववर्ष जलदो यथा ।
तानि लङ्कां समासाद्य जघ्नुस्तान् रजनीचरान् ॥ ३८

सौमित्रिरपि नाराचैर् दृढधन्वा जितक्लमः ।
आविश्याविश्य दुर्गस्थान् पातयामास राक्षसान् ॥ ३९

ततः प्रत्यवहारोऽभूत् सैन्यानां राघवाज्ञया ।
कृते विमर्दे लङ्कायां लब्धलक्षो जयोऽभवत् ॥ ४०

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

रामलक्ष्मणादीनां रावणेन्द्रजिदादिभिस्सह द्वन्द्वयुद्धम् ॥

मार्कण्डेयः—

ततो निविशमानांस्तान् सैनिकान् रावणानुगाः ।
अभिजग्मुर्गणानैकाः पिशाचाः क्षुद्रराक्षसाः ॥ १

पर्वणः पूतना जृम्भः खरः क्रोधवशो हरिः ।
[1]प्ररुजश्चारुजश्चैव प्रहस्तश्चैव मानवः ॥ २

ततो निपततां तेषाम् अदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तत्र चकार स विभीषणः ॥ ३

ते दृश्यमाना हरिभिर् बलिभिर्दूरपातिभिः ।
निहतास्सर्वतो राजन् महीं जग्मुर्गतासवः ॥ ४

1. क—अर्धपद्यकं नास्ति

अमृष्यमाणस्सबलो रावणो निर्ययावथ ।
व्यूह्य चौशनसं व्यूहं हरीन् सर्वान् न्यवारयत् ॥ ६

राघवस्त्वथ निर्याय व्यूढानीकं दशाननम् ।
बार्हस्पत्यं विधिं कृत्वा प्रतिव्यूह्य व्यदर्शत ॥ ७

समेत्य युयुधे तत्र रामेण सह रावणः ।
युयुधे लक्ष्मणश्चैव तथैवेन्द्रजिता सह ॥ ८

विरूपाक्षेण सुग्रीवस् तारेणाटनिखर्वणः ।
[1]पौण्ड्रेण च नलस्तत्र पटुशः पनसेन च ॥ ९

[2]विषह्यं यं स्म यो मेने स स तेन समेयिवान् ।
युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ॥ १०

स सम्प्रहारो ववृधे भीरूणां भयवर्धनः ।
रोमसंहर्षणो घोरः पुरा देवासुरे यथा ॥ ११

रावणो राममानर्च्छेघ् छक्तिशूलासिवृष्टिभिः ।
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ॥ १२

तथैवेन्द्रजितं यत्तो लक्ष्मणो मर्मभेदिभिः ।
इन्द्रजिच्चापि सौमित्रिं बिभेद निशितैश्शरैः ॥ १३

विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम् ।
काकपक्षशरैस्तीक्ष्णैः प्रत्यविध्यद्गतव्यथः ॥ १४

---

1. क—अर्धश्लोकं नास्ति 2. ख—हृदमर्धं नास्ति

तेषां बलवतामासीन्महात्मानां समागमः ।
विव्युधुस्सकला येन त्रयो लोकाश्चराचराः ॥　　१५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

## ॥ एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

विभीषणहनुमदर्थ्यां प्रहस्तधूम्राक्षवधश्रवणनिर्विण्णेन रावणेन युद्धाय कुम्भकर्णप्रेषणम् ॥

मार्कण्डेयः—

ततः प्रहस्तस्सहसा समभ्येत्य विभीषणम् ।
गदया ताडयामास विनद्य रणकर्कशम् ॥　　१

स तयाऽभिहतो धीमान् गदया भीमवेगया ।
नाकम्पत महाबाहुर् हिमवानिव सुस्थितः ॥　　२

ततः प्रगृह्य विपुलां शतघण्टां विभीषणः ।
अनुमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ॥　　३

पतन्त्या स तया वेगाद् राक्षसोऽशनिना यथा ।
हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ॥　　४

तं दृष्ट्वा निहतं सङ्ख्ये प्रहस्तं क्षणदाचरम् ।
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ५

[1]तस्य मेघोपमं सैन्यम् उत्पतद्भीमदर्शनम् ।
दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ॥ ६

ततस्तान् सहसा दीर्णान् दृष्ट्वा वानरपुङ्गवान् ।
निर्ययौ कपिशार्दूलो हनुमान् पर्यवस्थितः ॥ ७

तं दृष्ट्वाऽवस्थितं सङ्ख्ये हरयः पवनात्मजम् ।
वेगेन महता राजन् संन्यवर्तन्त सर्वशः ॥ ८

ततश्शब्दो महानासीत् तुमुलो रोमहर्षणः ।
रामरावणसैन्यानाम् अन्योन्यमभिधावताम् ॥ ९

तस्मिन् प्रवृत्ते सङ्ग्रामे घोरे रुधिरकर्दमे ।
धूम्राक्षः कपिसैन्यं तद् द्रावयामास वीर्यवान् ॥ १०

तं राक्षसं महामात्रम् आपतन्तं सपत्नजित् ।
तरसा प्रतिजग्राह हनुमान् पवनात्मजः ॥ ११

तयोर्युद्धमभूद्घोरं हरिराक्षससैन्ययोः ।
जिगीषतोर्यथाऽन्योन्यम् इन्द्रप्रह्लादयोरिव ॥ १२

गदाभिः परिघैश्चैव राक्षसो जघ्निवान् कपिम् ।
कपिश्च जघ्निवान् रक्षस् सस्कन्धविटपैर्द्रुमैः ॥ १३

1. घ—अर्धद्वयं नास्ति

ततस्तमतिकायेन साश्वं सरथसारथिम् ।
धूम्राक्षमवधीद्धीमान् द्रुमेण पवनात्मजः ॥ १४

ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसात्मजम् ।
हरयो जातविस्रम्भा जघ्नुरन्ये च सैनिकान् ॥ १५

ते वध्यमाना बलिभिर् हरिभिर्जितकाशिभिः ।
राक्षसा भग्नसङ्कल्पा लङ्कामभ्यपतन् भयात् ॥ १६

तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः ।
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ १७

श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि ।
धूम्राक्षं च महेष्वासं ससैन्यं राक्षसैस्सह ॥ १८

[1]सुदीर्घमिव निश्श्वस्य समुत्पत्य वरासनात् ।
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ॥ १९

इत्येवमुक्त्वा विविधैर् वादित्रैस्सुमहास्वनैः ।
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ २०

प्रबोध्य महता चैनं यत्नेनागतसाध्वसः ।
स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ॥ २१

ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् ॥ २१॥

1. क-ख-घ—अभीत इव

रावणः—

धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ।
य इदं दारुणं कालं न जानीषे [1]महाभयम् ॥ २२॥

एष तीर्त्वोऽर्णवं रामस् सेतुना हरिभिस्सह ।
अभिपत्येह नस्सर्वान् करोति कदनं महत् ॥ २३॥

मयाप्यपहृता सीता भार्या रामस्य जानकी ।
तां मोक्षयितुमायातो बद्ध्वा सेतुं महार्णवे ॥ २४॥

तेन चैव प्रहस्तादिर् महान्नस्स्वजनो हतः ।
तस्य नान्यो निहन्ताऽस्ति त्वदृते शत्रुकर्शन ॥ २५॥

दंशितो ह्यद्य निर्याहि त्वमद्य बलिनां वर ।
रामादीन् समरे सर्वान् जहि शत्रूनरिन्दम ॥ २६॥

दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ।
[2]तौ त्वां सैन्येन महता सहितावनुयास्यतः ॥ २७॥

मार्कण्डेयः—

इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ।
संदिदेशेतिकर्तव्यं वज्रवेगप्रमाथिनौ ॥ २८॥

तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

1. क-ख-घ—भयावहम्    2. क—अर्धश्लोकं नास्ति

## ॥ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

लक्ष्मणेन कुम्भकर्णवधः ॥ १ ॥ हनुमन्नीलाभ्यां वज्रवेगप्रमाथिनो-र्वधः ॥ २ ॥

मार्कण्डेयः—

ततो निर्याय स्वपुरात् कुम्भकर्णस्सहानुजः ।
अपश्यत् कपिसैन्यं तज् जितकाश्यग्रतस्स्थितम् ॥ १

तमभ्येत्याशु हरयः परिवार्य समन्ततः ।
शैलवृक्षायुधा नादान् अमुञ्चन् भीमनिस्स्वनाः ॥ २

अभ्यघ्नंश्च महाकायैर् बहुभिर्जगतीरुहैः ।
करजैरतुदंश्चान्ये विहाय भयमुत्तमम् ॥ ३

बहुधा वध्यमानास्ते युद्धमार्गैः प्लवङ्गमाः ।
नानाप्रहरणैर्भीमं राक्षसेन्द्रमताडयन् ॥ ४

स ताड्यमानः प्रहसन् भक्षयामास वानरान् ।
[1]पनसश्च गवाक्षश्च वज्रबाहुश्च वानरः ॥ ५

[2]ते दृष्ट्वा व्यथिताः कर्म कुम्भकर्णस्य धीमतः ।
[3]उदक्रोशन् परित्रस्तास् तारप्रभृतयस्तदा ॥ ६

---

1. क-ब—पनसं च गवाक्षं च वज्रदंष्ट्रं च वानरम् । [पाठान्तरं]
2. अ-क-ब—इदमर्धं नास्ति
3. घ—इदमर्धद्वयं नास्ति

तं तारमुषैः क्रोशन्तम् अन्यांश्च हरियूथपान् ।
[1]अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः ॥ ७

ततो निपत्य वेगेन कुम्भकर्णे महामनाः ।
[2]सालेन जघ्निवान् मूर्ध्नि तरुणस्स च वानरः ॥ ८

स महात्मा महावेगः कुम्भकर्णस्य मूर्धनि ।
बिभेद सालं सुग्रीवो न चैवाव्यथयत् कपिः ॥ ९

ततो विनद्य प्रहसन् सालस्पर्शाविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् ॥ १०

ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरस् सौमित्रिर्मित्रनन्दनः ॥ ११

सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ।
प्राहिणोत् कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ १२

[3]स तस्य देहावरणं भित्त्वा देहं च सायकः ।
जगाम दारयन् भूमिं रुधिरेण समुक्षितः ॥ १३

तथा स भिन्नहृदयस् समुत्सृज्य कपीश्वरम् ।
वेगेन महताऽऽविष्टस् तिष्ठतिष्ठेति चाब्रवीत् ॥ १४

कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः ।

1. अ-घ—अर्धद्वयं नास्ति
2. अ—नासीदमर्धम्
3. अ-अर्धत्रयं नास्ति

अभिदुद्राव सौमित्रिम् उद्यम्य महतीं शिलाम् ॥ १५
तस्याभिद्रवतस्तूर्णं क्षुराभ्या[1]मूर्जितौ करौ ।
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥ १६
ततो ह्यस्य भुजान् सर्वान् प्रगृहीतशिलायुधान् ।
क्षुरैश्चिच्छेद लब्धलक्षं सौमित्रिः प्रविदर्शयन् ॥ १७
स बभूवातिकायश्च बहुपादशिरोभुजः ।
तं ब्रह्मास्त्रेण सौमित्रिर् ददाह त्रिपुरोपमम् ॥ १८
स बभूव महावीर्यो दिव्यास्त्राभिहतो रणे ।
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ १९
तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम् ।
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात् ॥ २०
ततस्तद्विद्रुतं सैन्यं दृष्ट्वा तौ दूषणानुजौ ।
अवस्थाप्य च सौमित्रिं सङ्क्रुद्धावभ्यधावताम् ॥ २१
द्रवन्तौ सहसा क्रुद्धौ वज्रवेगप्रमाथिनौ ।
[2]प्रतिजग्राह सौमित्रिर् वध्यमानः पतत्रिभिः ॥ २२
ततस्सुतुमुलं युद्धम् अभवद्रोमहर्षणम् ।
दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ॥ २३
[1]महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत ।

---

1. क-ख—मुच्छ्रितौ; घ—मूर्च्छितौ
2. क—अर्धपञ्चकं नास्ति		3. ख—इदमर्धं नास्ति

तौ चापि वीरौ सङ्क्रुद्धावुभौ तौ सम्प्रवर्षताम् ॥ २४
मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः ।
सौमित्रेश्च महाबाहोस् सम्प्रहारस्सुदारुणः ॥ २५
अथाद्रिशृङ्गमादाय हनुमान् मारुतात्मजः ।
अभिद्रुत्याहनद् वीरो वज्रवेगं महाबलः ॥ २६
नीलश्च सहसा गृह्य दूषणावरजं हरिः ।
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ॥ २७
ततः प्रावर्तत पुनस् सङ्ग्रामः कटुकोदयः ।
रामरावणसैन्यानाम् अन्योन्यमभिधावताम् ॥ २८
शतशो नैर्ऋतान् वन्या जघ्नुर्वन्यांश्च नैर्ऋताः ।
नैर्ऋतास्तत्र वध्यन्ते प्रायशो न तु वानराः ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[ अस्मिन्नध्याये २९ श्लोकाः ]

---

## ॥ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

---

लक्ष्मणेन्द्रजितोर्युद्धम् ॥ १ ॥ अङ्गदेनेन्द्रजिद्रथभङ्गे मायया तस्यान्तर्धाने च रामेणापि तत्रागमनम् ॥ २ ॥

---

मार्कण्डेयः—

कुम्भकर्णं हतं श्रुत्वा सानुगं राक्षसाधिपः ।
प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् ॥ १

पुत्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत । १॥

रावणः—

जहि राममभित्रघ्न सुग्रीवं च सलक्ष्मणम् ॥ २

त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम् ।
जित्वा वज्रधरं सङ्ख्ये सहस्राक्षं शचीपतिम् ॥ ३

अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैश्शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतां वर ॥ ४

रामलक्ष्मणसुग्रीवास् शरस्पर्शं न तेऽपि च ।
समर्थाः प्रतिसोढुं च कुतस्तदनुयायिनः ॥ ५

[1]अकृता या प्रहस्तेन कुम्भकर्णेन चानघ ।
खरस्यापचितिस्सङ्ख्ये तां गच्छस्व महाभुज ॥ ६

तमद्य निशितैर्बाणैर् हत्वा शत्रुं ससैनिकम् ।
प्रतिनन्द्य मां पुत्र पुरा जित्वेव वासवम् ॥ ७

मार्कण्डेयः—

इत्युक्तस्स तथेत्युक्त्वा रथमास्थाय दंसितः ।
प्रययाविन्द्रजिद्राजंस् तूर्णमायोधनं प्रति ॥ ८

ततो विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः ।
आह्वयामास समरे लक्ष्मणं शुभलक्षणम् ॥

1. ख—इदमर्धं नास्ति

तं लक्ष्मणो ह्यभ्यधावत् प्रगृह्य सशरं धनुः ।
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा ॥ १०
तयोस्समभवद्युद्धं सुमहज्जयगृद्धिनोः ।
दिव्यास्त्रविदुषोस्तीव्रम् अन्योन्यस्पर्धिनोस्तथा ॥ ११
रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नम् आतिष्ठद्बलिनां वरः ॥ १२
तत एवं महावेगैर् अर्दयामास सायकैः ।
तानागतान् स चिच्छेद सौमित्रिर्निशितैश्शरैः ॥ १३
ते निकृत्ताश्शरैस्तीक्ष्णैर् न्यपतन् वसुधातले ।
सायका रावणेराजौ शतशश्शकलीकृताः ॥ १४
तमङ्गदो वालिसुतश् श्रीमानुद्यम्य पादपम् ।
अभिद्रुत्य महावेगस् ताडयामास मूर्धनि ॥ १५
तमिन्द्रजित् सुसम्भ्रान्तः प्रासेनोरसि वीर्यवान् ।
प्रहर्तुमैच्छत् तं चास्य प्रासं चिच्छेद लक्ष्मणः ॥ १६
तमभ्याशगतं वीरम् अङ्गदं रावणात्मजः ।
गदयाऽताडयत् सव्ये पार्श्वे वानरपुङ्गवम् ॥ १७
तमचिन्त्य प्रहारं स बलवान् वालिनस्सुतः ।
ससर्जेन्द्रजितं क्रोधात् सालस्कन्धममित्रजित् ॥ १८
सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ।
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् ॥ १९

ततो हताश्वात् प्रस्कन्द्य रथात् स हतसारथिः ।
तत्रैवान्तर्दधे राजन् मायया रावणात्मजः ॥ २०
अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम् ।
रामस्तं देशमागम्य तत् सैन्यं पर्यरक्षत ॥ २१
स राममुद्दिश्य शरैश् ततो दत्तवरैस्तदा ।
विव्याध सर्वगात्रेषु लक्ष्मणं च महारथः ॥ २२
तमुद्दिश्य शरैस्तीक्ष्णैर् माययाऽन्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ ॥ २३
[1]स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः ।
व्यसृजत् सायकान् भूयश् शतशोऽथ सहस्रशः ॥ २४
तमदृश्यं विचिन्वन्तस् सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीश्शिलाः ॥ २५
तांश्च तौ चाप्यदृश्यस्स शरैर्विव्याध राक्षसः ।
स भृशं ताडयामास रावणिर्मायया वृतः ॥ २६
तौ शरैरर्दितौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

---

1. अ-घ—सप्तार्धानि न सन्ति

## ॥ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

इन्द्रजिच्छरजालबन्धेन मोहाधिगमपूर्वकं भूमौ पतितयो रामलक्ष्मणयोर्विभीषणेन प्रज्ञानास्त्रेण मोहापनोदनम् ॥ १ ॥ तथा सुग्रीवेण महौषध्या तयोर्विशल्यीकरणम् ॥ २ ॥ ततो रामादीनां नेत्रेषु कुबेरदूतानीतजलमार्जनेनातीन्द्रियवस्तुदर्शनशक्त्युदयः ॥ ३ ॥ ततः पुनरुपागतस्येन्द्रजितो लक्ष्मणेन वधः ॥ ४ ॥ ततः पुत्रवधामर्षेण सीतावधोद्यतस्य रावणस्याविन्ध्याख्येन वृद्धामात्येन साम्ना ततो विनिवर्तनम् ॥ ५ ॥

मार्कण्डेयः—

तावुभौ पतितौ दृष्ट्वा भ्रातरावमितौजसौ ॥
बबन्ध रावणिर्भूयश्च शरैर्दत्तवरैस्तदा ॥ १

तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे ।
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे । २

दृष्ट्वा निपतितौ भूमौ सर्वाङ्गेषु शराचितौ ।
सुग्रीवः कपिभिस्सार्धं परिवार्योपतस्थिवान् ॥ ३

सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च ।
हनुमन्नीलतारैश्च नलेन च महात्मना ॥ ४

ततस्तं देशमागम्य कृतकर्मा विभीषणः ।
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रमोहितौ ॥ ५

विशल्यौ चापि सुग्रीवः क्षणेनैतौ चकार तौ ।
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ६

तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम् ।
उभौ गतक्लमौ चास्तां क्षणेनेशौ महारथौ ॥ ७

ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम् ।
उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥ ८

विभीषणः—

अयमम्भो गृहीत्वा तु राजराजस्य शासनात् ।
गुह्यकोऽभ्यागतश्चैव त्वत्सकाशमरिन्दम ॥ ९

इदमम्भः कुबेरस्ते महाराज प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ १०

अनेन स्पृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान् द्रक्ष्यति यस्मै च भवानेतत् प्रदास्यति ॥ ११

मार्कण्डेयः—

तथेति रामस्तद्वारि प्रतिगृह्याथ सत्कृतिम् ।
चकार नेत्रयोश्शौचं लक्ष्मणश्च महामनाः ॥ १२

सुग्रीवजाम्बवन्तौ च हनुमानङ्गदस्तथा ।
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ १३

तथा समभवच्चापि यदुवाच विभीषणः ।
क्षणेनातीन्द्रियाण्येषां चक्षूंष्यासन् युधिष्ठिर ॥ १४

इन्द्रजित् कृतकर्मा तु पित्रे कर्म तदाऽऽत्मनः ।
निवेद्य पुनरागच्छत् त्वरमाजिशिरःप्रति ॥ १५

तमागतं तु सङ्क्रुद्धं पुनरेव युयुत्सया ।
अभिदुद्राव सौमित्रिर् विभीषणमते स्थितः ॥ १६

कृताह्निकमथैवैनं जिघांसुर्जितकाशिनम् ।
शरैर्जघान सङ्क्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः ॥ १७

ततस्समभवद्युद्धं तदाऽन्योन्यं जिगीषतोः ।
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ॥ १८

सोऽविध्यदिन्द्रजित् तीक्ष्णैस् सौमित्रिं मर्मभेदिभिः ।
[1]सौमित्रिश्चानलस्पर्शैर् अविध्यद्रावणिं शरैः ॥ १९

सौमित्रिशरसंस्पर्शाद् रावणिः क्रोधमूर्च्छितः ।
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ २०

तस्येमान् पावकस्पर्शैस् सौमित्रिः पत्रिभिस्त्रिभिः ।
वारयामास नाराचैस् सौमित्रिर्मित्रनन्दनः ॥ २१

असृजल्लक्ष्मणश्चाष्टौ राक्षसाय शरान् पुनः ।
[2]तथा तं न्यहनद्वीरस् तन्मे निगदतश्शृणु ॥ २२

एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ।
द्वितीयेन तु बाणेन [3]भुजमन्यमपातयत् ॥ २३

तृतीयेन तु बाणेन शितधारेण भास्वता ।

1. क—अर्धचतुष्टयं नास्ति 2. ख—इदमर्धं नास्ति
3. अ-ध—शितधारेण भास्वता [मध्ये अर्धं नास्ति]

[1]जहार सुनसं चापि शिरो ज्वलितकुण्डलम् ॥ २४
विनिकृत्तभुजस्कन्धः कबन्धाकृतिदर्शनः ।
पपात वसुधायां तु छिन्नमूल इव द्रुमः ॥ २५
तं हत्वा सूतमप्यस्य जघान बलिनांवरः ।
लङ्कां निवेशयामासुर् वाजिनस्तं रथं तदा ॥ २६
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् ॥ २६॥
स पुत्रं निहतं श्रुत्वा त्रासात् सम्भ्रान्तलोचनः ।
रावणश्शोकमोहार्तो वैदेहीं हन्तुमुद्यतः ॥ २७॥
अशोकवनिकास्थां तां रामदर्शनलालसाम् ।
खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ २८॥
तं दृष्ट्वा तस्य दुर्बुद्धेर् अवघ्यः पापनिश्चयम् ।
शमयामास सङ्क्रुद्धं श्रूयतां येन हेतुना ॥ २९॥

अवघ्यः—

महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि ।
हतैवैषा यदा स्त्री च बन्धनस्था च ते गृहे ॥ ३०॥
न चैषा देहभेदेन हता स्यादिति मे मतिः ।
जहि भर्तारमेवास्या हते तस्मिन् हता भवेत् ॥ ३१॥
न हि ते विक्रमे तुल्यस् साक्षादपि शतक्रतुः ।
असकृद्धि त्वया सेन्द्रास् त्रासितास्त्रिदशा युधि ॥ ३२॥

मार्कण्डेयः—

एवं बहुविधैर्वाक्यैर् अवघ्यो रावणं तदा ।

---

1. ब—जघान

क्रुद्धं संशमयामास जगृहे च स तद्वचः ॥ ३३॥

निर्याणे स मतिं कृत्वा नियन्तारं क्षपाचरः ।
आज्ञापयामास तदा रथो मे युज्यतामिति ॥ ३४॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥



इन्द्रजिद्वधक्रोधाद्रावणेन स्वयमेव युद्धाय रामं प्रत्यभियानम् ॥ १ ॥ तदा इन्द्रेण रामाय मातलिसनाथस्य निजरथस्य प्रेषणम् ॥ २ ॥ श्रीरामेण मायायोधिनो रावणस्य ब्रह्मास्त्रेण हननम् ॥ ३ ॥

---

मार्कण्डेयः—

ततः क्रुद्धो दशग्रीव प्रिये पुत्रे निषूदिते ।
निर्याय रथमास्थाय हेमरत्नविभूषितम् ॥ १

संवृतो राक्षसैर्घोरैर् विविधायुधपाणिभिः ।
अभिदुद्राव रामं स पोथयन् हरियूथपान् ॥ २

[1]तमाद्रवन्तं सङ्क्रुद्धं मैन्दद्विविदवानराः ।
हनूमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ॥ ३

---

1. अ–ब—नवार्धानि न सन्ति

ते दशग्रीवसैन्यं तद् ऋक्षवानरयूथपाः ।
द्रुमैर्विध्वंसयाञ्चक्रुर् दशग्रीवस्य पश्यतः ॥ ४
ततस्स्वसैन्यमालोक्य वध्यमानं महात्मभिः ।
मायामादाय युयुधे रावणो राक्षसेश्वरः ॥ ५
तस्य देहाद्विनिष्क्रान्ताश् शतशोऽथ सहस्रशः ।
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ६
तान् रामो जघ्निवान् सर्वान् दिव्येनास्त्रेण राक्षसान् ।
अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः ॥ ७
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च वीर्यवान् ।
अभिदुद्राव रामं स लक्ष्मणं च दशाननः ॥ ८
ततस्ते राममागच्छन् लक्ष्मणं च निशाचराः ।
अभिपेतुस्तदा राजन् प्रगृहीतेषुकार्मुकाः ॥ ९
तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः ।
उवाच वाक्यं सौमित्रिम् असम्भ्रान्तो बृहद्वचः ॥ १०

श्रीरामः—

जहीमान् राक्षसान् पापान् आत्मनः प्रतिरूपकान् ॥ १०॥

मार्कण्डेयः—

ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।
उपतस्थे रणे रामं मातलिश्शक्रसारथिः ॥ ११॥

मातलिः—

अयं हर्यश्वसंयुक्तस् त्वमोघस्स्यन्दनोत्तमः ।

त्वदर्थमिह सम्प्राप्तस् सन्देशाद्वै शतक्रतोः ॥ १२॥
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ।
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् ॥ १३॥
तदनेन नरव्याघ्र मया दत्तेन संयुगे ।
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः ॥ १४॥

मार्कण्डेयः—

इत्युक्तो मातलेस्तथ्यं वचोऽशङ्कत राघवः ।
मायेयं राक्षसेन्द्रस्य तमुवाच विभीषणः ॥ १५॥

विभीषणः—

नेयं माया नरव्याघ्र रावणस्य दुरात्मनः ।
तदातिष्ठाभिनन्द्यैनं रथमैन्द्रं महाद्युते ॥ १६॥

मार्कण्डेयः—

ततः प्रहृष्टः काकुत्स्थस् तथेत्युक्त्वा विभीषणम् ।
रथेनाभिपपाताशु दशग्रीवं रुषाऽन्वितः ॥ १७॥
हाहाकृतानि भूतानि रावणे समभिद्रुते ।
सिंहनादांश्च पटहा दिवि दिव्याश्च नानदन् ॥ १८॥
स रामाय महाघोरं विससर्ज निशाचरः ।
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् ॥ १९॥
तच्छूलमथ रामस्तु चिच्छेद निशितैश्शरैः ।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत् ॥ २०॥
ततः क्रुद्धस्ससर्जाशु दशग्रीवश्शिताञ् छरान् ।

सहस्रायुतशो रामे शस्त्राणि विविधानि च ॥ २१॥

ततो भुसुण्डीश्शूलानि मुसलानि परश्वधान् ।

शक्तीश्च विविधाकाराश् शतघ्नीश्च शिताञ् छरान् ॥ २२॥

तां मायां विविधां दृष्ट्वा दशग्रीवस्य रक्षसः ।

[1]भयात् प्रदुद्रुवुस्सर्वे वानरास्सर्वतोदिशम् ॥ २३॥

ततस्सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम् ।

तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह ॥ २४॥

[2]तं प्रेक्ष्य बाणं रामेन ब्रह्मास्त्रेणानुमन्त्रितम् ।

जहृषुर्देवगन्धर्वा दृष्ट्वा देवपुरोगमाः ॥ २५॥

अल्पावशेषमायुश्च ततोऽमन्यन्त राक्षसम् ।

ब्रह्मास्त्रे योजिते तस्मिन् देवगन्धर्वदानवाः ॥ २६॥

तस्मिन् ससर्ज तं रामश् शरमप्रतिमौजसम् ।

रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् ॥ २७॥

स तेन राक्षसश्रेष्ठस् सरथस्साश्वसारथिः ।

जज्वाल स महाज्वालेनाग्निनाभिपरिष्कृतः ॥ २८॥

ततः प्रहृष्टास्त्रिदशास् सगन्धर्वास्सचारणाः ।

निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ २९॥

---

1. ख—अर्धत्रयं नास्ति

2. ख—तं प्रेक्ष्य रामं बाणेन

क—तं बाणवर्यं रामेण ; ख—तं प्रेक्षमाणा रामेण+भिमन्त्रितम्

तत्यजुस्तं महाभागं पञ्चभूतानि रावणम् ।
भ्रंशितस्सर्वलोकेषु ब्रह्मास्त्रेणामितौजसा ॥ ३०॥

शरीरधातवोऽप्यस्य मांसं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्धा न हि भस्माप्यदृश्यत ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

## ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

रावणवधानन्तरमविन्ध्यनाम्ना राक्षसवृद्धेन रामसमीपं प्रति सीताया आनयनम् ॥ १ ॥ सीतया स्वशीलशङ्किनो रामस्यानङ्गीकारवचनश्रवणेन भूमौ पतनम् ॥ २ ॥ अन्तरिक्षगतैर्ब्रह्मादिभिः सीतायाः सौशील्यख्यापनपूर्वकं रामं प्रति तद्ग्रहणचोदना ॥ ३ ॥ रामेण सीतालक्ष्मणादिभिः सहायोध्यां प्रति प्रस्थानम् ॥४॥ दूत्येन भरतं प्रति हनुमत्प्रेषणपूर्वकं नन्दिग्राममागतेन रामेण भरतादिभिः सहायोध्यां प्रत्यागमनम् ॥ ५ ॥ वसिष्ठादिभिः सीतया सह राज्येऽभिषिक्तेन रामेण सुग्रीवविभीषणादीनां सबहुमानं स्वस्वपुरप्रेषणपूर्वकं प्रजापालनम् ॥ ६ ॥

---

मार्कण्डेयः—

स हत्वा रावणं क्रुद्धं राक्षसेन्द्रं सुरद्विषम् ।
बभूव हृष्टस्ससुहृद् रामस्सौमित्रिणा सह ॥ १

ततो हते दशग्रीवे देवास्सर्षिगणास्तथा ।

आशीर्भिर्जययुक्ताभिर् आनर्चुस्तं महाभुजम् ॥ २
रामं कमलपत्राक्षं तुष्टुवुस्सर्वदेवताः ।
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ३

पूजयित्वा रणे रामं प्रतिजग्मुर्यथागतम् ।
तन्महोत्सवसङ्काशम् आसीदाकाशमच्युत ॥ ४

ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः ।
विभीषणाय प्रददौ प्रभुः परपुरञ्जयः ॥ ५

ततस्सीतां पुरस्कृत्य विभीषणपुरस्कृताम् ।
अविन्ध्यो नाम सुप्राज्ञो वृद्धामात्यो विनिर्ययौ ॥ ६

उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम् ।
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ॥ ७

एतच्छ्रुत्वा वचस्तस्माद् अवतीर्य महारथात् ।
बाष्पेणापिहितस्सीतां ददर्शेक्ष्वाकुनन्दनः ॥ ८

तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् ।
मलोपचितसर्वाङ्गीं ध्यानशोकपरायणाम् ॥ ९

उवाच रामो वैदेहीं परामर्शविशङ्कितः ।
[1]लक्षयित्वेङ्गितं सर्वं प्रियं तस्यै निवेद्य सः ॥ १०

1. ख—इदमर्धं नास्ति

श्रीरामः—

गच्छ वैदेहि मुक्ता त्वं एतत् कार्यं मया तव ॥ १०॥

मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि ।
जरां व्रजेथा इति मे निहतोऽसौ महासुरः ॥ ११॥

कस्मादस्मद्विधो जातु जानन् धर्मविनिश्चयम् ।
परहस्तगतां नारीं मुहूर्तमपि धारयेत् ॥ १२॥

असद्वृत्तां सुवृत्तां वाऽप्यहं त्वामद्य मैथिलि ।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥ १३॥

मार्कण्डेयः—

ततस्सा सहसा बाला तच्छ्रुत्वा दारुणं वचः ।
[1]पपात देवी व्यथिता निकृत्ता कदली यथा ॥ १४॥

योऽप्यस्या हर्षसम्भूतो मुखरागः पुराऽभवत् ।
क्षणेन स पुनर्नष्टो निश्श्वासादिव दर्पणे ॥ १५॥

ततस्ते हरयस्सर्वे तच्छ्रुत्वा रामभाषितम् ।
गतासुकल्पा निश्चेष्टा बभूवुरशुभलक्षणाः ॥ १६॥

ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः ।
[1]पद्मयोनिर्जगत्स्रष्टा दर्शयामास राघवम् ॥ १७॥

शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च ।

---

1. च—अर्धचतुष्टयं नास्ति 2. क-ख-च—पितामहो

यक्षाधिपश्च भगवांस् तथा समर्षयोऽमलाः ॥　　१८॥
राजा दशरथश्चैव दिव्याभरणमूर्तिमान् ।
विमानेन महार्हेण हंसयुक्तेन भास्वता ॥　　१९॥
ततोऽन्तरिक्षं तत् सर्वं देवगन्धर्वसङ्कुलम् ।
शुशुभे तारकाचित्रं शरदीव नभस्स्थलम् ॥　　२०॥
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी ।
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥　　२१॥

सीता—

राजपुत्र न ते कोपं करोमि विदिता हि मे ।
गतिस्त्रीणां नराणां च शृणु चेदं वचो मम ॥　　२२॥
अन्तश्चरति भूतानां मातरिश्वा सदागतिः ।
स मे विमुञ्चतु प्राणान् यदि पापं चराम्यहम् ॥　　२३॥
[1]ततोऽन्तरिक्षे वागासीत् सर्वा विश्रावयन् दिशः ।
पुण्या संहर्षणी तेषां वानराणां महात्मनाम् ॥　　२४॥

वायुः—

भो भो राघव सत्यं वै वायुरस्मि सदागतिः ।

---

1. स—अग्निरापस्तथाकाशं पृथिवी वायुरेव च ।
　　विमुञ्चयन्तु मे प्राणान् यदि पापं चराम्यहम् ॥
　　यथाऽहं त्वामृते वीर नान्यं स्वप्नेऽप्यचिन्तयम् ।
　　तथा धर्मो विनिर्दिष्टः तेमे साक्षी भवत्विह ॥
　यमः—
　　धर्मराजोऽस्मि काकुत्स्थ साक्षी लोकस्य कर्मणः । [अधिकः पाठः]

अपापा मैथिली राजन् सङ्गच्छ सह सीतया ॥ २५॥

अग्निः—

अहमन्तश्शरीरस्थो भूतानां रघुनन्दन ।
सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति ॥ २६॥

वरुणः—

सर्वमन्तश्चरो वेद्मि भूतदेहेषु राघव ।
अहं वै त्वां ब्रवीम्येतन् मैथिली प्रतिगृह्यताम् ॥ २७॥

ब्रह्मा—

पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मिणि ।
साधो सद्वृत्त मार्गस्ते शृणु चेदं वचो मम ॥ २८॥
शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम् ।
यक्षाणां दानवानां च महर्षीणां च पातितः ॥ २९॥
अवध्यस्सर्वभूतानां मत्प्रसादात् पुराऽभवत् ।
कस्माच्चित् कारणात् पापः कञ्चित् कालमुपेक्षितः ॥ ३०॥
वधार्थमात्मनस्तेन हृता सीता दुरात्मना ।
नलकूबरशापेन रक्षा चास्या मया कृता ॥ ३१॥
यदि ह्यकामामासेवेत् स्त्रियमन्यामपि ध्रुवम् ।
शतधाऽस्य फलेन्मूर्धा इत्युक्तस्सोऽभवत् पुरा ॥ ३२॥
न तु शङ्का त्वया कार्या प्रतीच्छेमां महाद्युते ।
कृतं त्वया महत् कार्यं देवानाममितप्रभ ॥ ३३॥

दशरथः—

प्रीतोऽस्मि तव भद्रं ते पिता दशरथोऽस्म्यहम् ।
अनुजानामि राज्यं त्वं प्रशाधि पुरुषोत्तम ॥ ३४॥

श्रीरामः—

[1]अभिवादये त्वां राजेन्द्र पिता मे जनको यदि ।
गमिष्यामि पुरीं रम्याम् अयोध्यां शासनात् तव ॥ ३५॥

मार्कण्डेयः—

तमुवाच पिता भूयः प्रहृष्टो मनुजर्षभः ॥ ३६

दशरथः—

गच्छायोध्यां प्रशाधि त्वं राम रक्तान्तलोचन ॥ ३६॥

मार्कण्डेयः—

ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः ।
महेन्द्र इव पौलोम्या भार्यया सहसीतया ॥ ३७॥
ततो वरं ददौ तस्मै अवध्याय परन्तपः ।
त्रिजटां चार्थकामाभ्यां योजयामास राक्षसीम् ॥ ३८॥
तमुवाच ततो ब्रह्मा देवैश्शक्रमुखैर्वृतः ॥ ३९

ब्रह्मा—

कौसल्यामातरिष्टांस्ते वरानद्य ददामि ताम् ॥ ३९॥

मार्कण्डेयः—

वव्रे रामस्स्थितिं धर्मे शत्रुभिश्चापराजयम् ।
राक्षसैर्निहतानां च वानराणां समुद्भवम् ॥ ४०॥

---

1. क—अर्धचतुष्टयं नास्ति

तथेति ब्रह्मणा प्रोक्तं ततस्तद्वचनात् तदा ।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ४१॥
सीता चापि महाभागा वरं हनुमते ददौ ॥ ४२

सीता—

रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ॥ ४२॥
दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृतास्सदा ।
[1]उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ॥ ४३॥

मार्कण्डेयः—

ततस्तत् प्रेक्षमाणानां तेषामक्लिष्टकारिणाम् ।
अन्तर्धानं ययुर्देवास् सर्वे शक्रपुरोगमाः ॥ ४४॥
दृष्ट्वा तु रामं जानक्या सङ्गतं शक्रसारथिः ।
उवाच परमप्रीतस् सुहृन्मध्य इदं वचः ॥ ४५॥

मातलिः—

देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् ।
अपनीतं त्वया दुःखम् इदं सत्यपराक्रम ॥ ४६॥
सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
कथयिष्यन्ति लोके त्वां यावद्भूमिर्धरिष्यति ॥ ४७॥

मार्कण्डेयः—

इत्येवमुक्त्वाऽनुज्ञाप्य रामं शस्त्रभृतां वरम् ।

---

1. ख—इदमर्धं नास्ति

सम्पूज्यापाक्रमत् तेन रथेनादित्यवर्चसा ॥ ४८॥

ततस्सीतां पुरस्कृत्य रामस्सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चापि सहितस्सर्ववानरैः ॥ ४९॥

विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ।
सन्ततार पुनस्तेन सेतुना मकरालयम् ॥ ५०॥

पुष्पकेण विमानेन खेचरेण विराजता ।
[1]कामगेन यथा मुख्यैर् अमात्यैस्संवृतो वशी ॥ ५१॥

ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः ।
तत्रैवोवास धर्मात्मा सहितस्सर्ववानरैः ॥ ५२॥

अथैनान् राघवः काले समानीयाभिपूज्य च ।
विसर्जयामास तदा रत्नैस्सम्पूज्य सर्वशः ॥ ५३॥

[2]गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु च सर्वशः ।
सुग्रीवसहितो रामः किष्किन्धां समुपाविशत् ॥ ५४॥

विभीषणेनानुगतस् सुग्रीवसहितस्तदा ।
पुष्पकेण विमानेन वैदेह्या दर्शयन् वनम् ॥ ५५॥

किष्किन्धां तु समासाद्य रामः प्रहरतां वरः ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ५६॥

ततस्तैरेव सहितो रामस्सौमित्रिणा सह ।

1. ख—इदमर्धं नास्ति    2. ख—इदमर्धं नास्ति

यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ॥ ५७॥
अयोध्यां तु समासाद्य पुरीं राष्ट्रपतिस्तदा ।
भरताय हनूमन्तं दूतं प्रस्थापयद्द्रुतम् ॥ ५८॥
वायुपुत्रस्ततः प्राप्तो नन्दिग्राममुपाविशत् ॥ ५९
स तत्र मलदिग्धाङ्गं भरतं चीरवाससम् ।
[1]नन्दिग्रामगतं रामस् सशत्रुघ्नं सराघवः ॥ ६०
अग्रतः पादुके कृत्वा ददर्शासीनमासने ॥ ६०॥
समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान् ।
राघवस्सहसौमित्रिर् मुमुदे भरतर्षभ ॥ ६१॥
तदा भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शने चोभौ प्रहर्षं समवापतुः ॥ ६२॥
तस्मै तद्भरतो राज्यम् आगतायाभिसत्कृतम् ।
न्यासं निर्यातयामास संयुक्तः परया मुदा ॥ ६३॥
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिजितेऽहनि ।
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ॥ ६४॥
सोऽभिषिक्तो वसिष्ठेन सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यम् अन्वजानाद्गृहान् प्रति ॥ ६५॥
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तं मुदा युतौ ।

1. क—नासीदमर्धम्

समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ॥ ६६॥

पुष्पकं च विमानं तु पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या परमया युतः ॥ ६७॥

ततो देवर्षिसहितस् सरितं गोमतीमनु ।
शताश्वमेधानाजह्रे जानक्या स निरर्गलान् ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[ अस्मिन्नध्याये ६८॥ श्लोकाः ]

---

## ॥ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

मार्कण्डेयेन स्वस्यानुपमदुःखानुभवितृत्वबुध्या शोचतो युधिष्ठिरस्य रामोपाख्यानकथनपूर्वकं हेतूपन्यासेन शोकापनोदनम् ॥

---

मार्कण्डेयः—

एवमेतन्महाबाहो रामेणामिततेजसा ।
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ १

मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परन्तप ।
बाहुवीर्याश्र[1]ये मार्गे वर्तसे दीप्तनिर्णये ॥ २

न हि ते वृजिनं किञ्चिद् दृश्यते परमण्वपि ॥ ३॥

---

1. अ—मे

अस्मिन् मार्गे विषीदेयुस् सेन्द्रा अपि सुरासुराः ॥ ३
संहत्य निहतो वृत्रो मरुद्भिर्वज्रपाणिना ।
नमुचिश्चैव दुर्धर्षो दीर्घजङ्घा च राक्षसी ॥ ४
सहायवति सर्वार्थास् सन्तिष्ठन्तीह नित्यशः ।
किं नु तस्याजितं सङ्ख्ये यस्य भ्राता धनञ्जयः ॥ ५
अयं च बलिनां श्रेष्ठो भीमो भीमपराक्रमः ।
युवानौ च महेष्वासौ यमौ माद्रवतीसुतौ ॥ ६
एभिस्सहायैः कस्मात् त्वं विषीदसि परन्तप ॥ ६॥
य इमे वज्रिणस्सेनां जयेयुस्समरुद्गणाम् ।
त्वमप्येभिर्महेष्वासैस् सहायैर्देवरूपिभिः ॥ ७॥
विजेष्यसि रणे सर्वान् अमित्रान् भरतर्षभ ॥ ८
इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना ।
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ॥ ९
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम् ।
जयद्रथं च राजानं विजितं च समागतम् ॥ १०
असहायेन रामेण वैदेही पुनराहृता ।
हत्वा सङ्ख्ये दशग्रीवं राक्षसं भीमविक्रमम् ॥ ११
यस्य शाखामृगा मित्रा ऋक्षाः कृष्णमुखास्तथा ।
जात्यन्तरकृता राजन् एतद्बुद्ध्या विचारय ॥ १२

तस्मात् त्वं कुरुशार्दूल मा शुचो भरतर्षभ ।
त्वद्विधा हि महात्मानो न शोचन्ति परन्तप ॥ १३

वैशम्पायनः—

एवमाश्वासितो राजा मार्कण्डेयेन धीमता ।
त्यक्त्वा दुःखमदीनात्मा पुनरप्येनमब्रवीत् ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[अस्मिन्नध्याये १४ श्लोकाः]

---

## ॥ अष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

मार्कण्डेयेन युधिष्ठिरं प्रति सावित्र्युपाख्यानकथनारम्भः ॥ १ ॥ अश्वपतिनाम्नो मद्रराजस्य स्वीयव्रतचर्यासंतुष्टसावित्रीदेवीप्रसादात्सावित्रीनामककन्याजननम् ॥ २ ॥ यौवनस्थया तया पित्राज्ञया वृद्धामात्यैस्सह राजर्षीणामाश्रमेषु स्वोचितवरान्वेषणम् ॥ ३ ॥

---

युधिष्ठिरः—

नात्मानमनुशोचामि नेमान् भ्रातॄंस्तथा मुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १

द्यूते दुरात्मभिः क्लिष्टाः क्लिष्टया तारिता वयम् ।
जयद्रथेन च पुनर् बलादपहृता बलात् ॥ २

अस्ति सीमन्तिनी काचिद् दृष्टपूर्वाऽपि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३

मार्कण्डेयः—

शृणु राजन् कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथाप्राप्तं सावित्र्या राजकन्यया ॥ ४

आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च कृतज्ञश्च सत्यसन्धो जितेन्द्रियः ॥ ५

यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ६

क्षमावाननपत्यश्च सत्यवाक् संयतेन्द्रियः ।
अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥ ७

अपत्योत्पादनार्थाय तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रह्मचारी बभूव ह ॥ ८

हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे गते काले बभूव मितभोजनः ॥ ९

एतेन नियमेनासीद् वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ १०

सुरूपिणी तदा राजन् दर्शयामास तं नृपम् ।
अग्निहोत्रात् समुत्पन्ना हर्षेण महताऽन्विता ॥ ११

उवाच चैनं वरदा वचनं पार्थिवं तदा ।
सा तमश्वपतिं राजन् सावित्री नियमे स्थितम् ॥ १२

सावित्री—

ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च मद्भक्त्या तुष्टाऽस्मि तव पार्थिव ॥ १३

वरं वृणीष्वाश्वपते मद्रराज यथेप्सितम् ।
न प्रमादस्स्वधर्मेषु कर्तव्यस्ते कथञ्चन ॥ १४

अश्वपतिः—

अपत्यार्थस्समारम्भः ततो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ १५

तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ।
सन्तानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १६

सावित्री—

पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ १७

प्रसादाच्चैव तस्मात् ते स्वयं विहितवत्यहम् ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ १८

[1]उत्तरं च न ते किञ्चिद् व्याहर्तव्यं कथञ्चन ।
[2]पितामहनियोगेन तुष्टा ह्येतद्ब्रवीमि ते ॥ १९

1. अ-च—नास्तीदमर्धम्        2. च—अर्धद्वयं नास्ति

मार्कण्डेयः—

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रं चैतद्भविष्यति ॥ २०

अन्तर्हितायां सावित्र्यां जगाम स्वगृहं नृपः ।
स राजोपवसद्वीरः प्रजा धर्मेण पालयन् ॥ २१

कस्मिंश्चित् तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधत् ॥ २२

राजपुत्र्यास्तु गर्भस्स कालेन भरतर्षभ ।
व्यवर्धत महान् शुक्लस् तारापतिरिवाम्बरे ॥ २३

प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या नृपतिश् चक्रे स मुदितस्तदा ॥ २४

सावित्र्या प्रीतया दत्ता सावित्र्या हुतयाऽप्यपि ।
सावित्रीत्येव नामास्याश् चक्रुर्विप्रास्तथा पिता ॥ २५

सा विग्रहवतीव श्रीर् व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ २६

तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येव दृष्ट्वा सम्मेनिरे जनाः ॥ २७

तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ २८

अथोपोष्य शिरस्स्नाता दैवतान्यभिगम्य सा ।
हुत्वाऽग्निं विधिवद्विप्रान् वाचयामास पर्वणि ॥ २९

ततस्सुमनसश्शेषाः प्रतिगृह्य महात्मनः ।
पितुस्समीपमगमद् देवी श्रीरिव रूपिणी ॥ ३०

साऽभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमाश्रिता ॥ ३१

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च नरैर् नृपतिर्दुःखितोऽभवत् ॥ ३२

राजा—

पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैस्सदृशमात्मनः ॥ ३३

प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३४

श्रुतं हि धर्म[1]शास्त्रे मे कथ्यमाने द्विजोत्तमैः ।
तथा त्वमपि कल्याणि गदतो मे वचश्शृणु ॥ ३५

अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३६

---

1. क—शास्त्रेण पठ्यमानं द्विजातिभिः
ख—श्रुतं हि धर्मशास्त्रं मे पठ्यमानं द्विजातिभिः
घ—शास्त्रे मे पठ्यमाने द्विजोत्तमैः

इदं मे वचनं श्रुत्वा भर्तुरन्वेषणं कुरु ।
[1]देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३७

मार्कण्डेयः—

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३८

साऽभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगाम विमृश्य च ॥ ३९

हैमं रथं समास्थाय सचिवैस्स्थविरैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ४०

मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ४१

एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्येषु तं तं देशं जगाम ह ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

1. ख—इदमर्धं नास्ति

## ॥ एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥

मनसा स्वानुगुणनिर्धारणपूर्वकं वनादागतया सावित्र्या नारदेन सह संभाषमाणस्य पितुरन्तिकमेत्य तयोः पादाभिवादनम् ॥ १ ॥ नारदसंनिधौ पित्रा पृष्टया तया द्युमत्सेनसूनोः सत्यवतः पतित्वेन मनसा वरणकथनम् ॥ २ ॥ पित्रा नारदवचनात्तस्याल्पायुष्ट्वनिवेदनपूर्वकं वरान्तरवरणं चोदितयापि तया स्वाध्यवसायादनिवर्तनम् ॥ ३॥ राज्ञाऽपि तस्या निर्बन्धान्नारदवचनाच्च तस्मा एव तस्या दानाध्यवसानम् ॥ ४ ॥

---

मार्कण्डेयः—

अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टस्सभामध्ये कथायोगेन भारत ॥ १

ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २

नारदेन समागम्य दृष्ट्वा सा पितरं शुभम् ।
उभयोरेव सहसा चक्रे पादाभिवन्दनम् ॥ ३

नारदः—

क्व गताऽभूत् सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भद्र न चैनां सम्प्रयच्छसि ॥ ४

अश्वपतिः—

कार्येण खल्वनेनैव प्रेषिताद्यैव साऽऽगता ।
ततोऽद्य शृणु देवर्षे भर्ता यो वाऽनया वृतः ॥ ५

मार्कण्डेयः—

सा ब्रूहि विस्तरेणेति पित्रा सञ्चोदिता तदा ।
दैवतस्यैव वचनं प्रतिगृह्येदमब्रवीत् ॥ ६

सावित्री—

आसीत् साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चात्त्वन्धो बभूव ह ॥ ७

विनष्टचक्षुषस्तदा तस्य बालपुत्रस्य धीमतः ।
[1]सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा ॥ ८

स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९

[2]तस्य पुत्रः पुरे जातस् संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १०

नारदः—

अहो बत महत् पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ ११

सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
तथाऽस्य ब्राह्मणाश्चक्रुर् नामैतत् सत्यवानिति ॥ १२

[3]बालस्याश्वाः प्रियाश्चास्य करोत्यश्वान् स मृन्मयान् ।

---

1. ख—सामन्तेन 2. अ—अर्धचतुष्टयं नास्ति
3. ख—इदमर्धं नास्ति

चित्रेऽपि विलिखत्यश्वांश् चित्राश्व इति चोच्यते ॥ १३

अश्वपतिः—

अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः ।
क्षमावानपि वा शूरस् सत्यवान् पितृनन्दनः ॥ १४

नारदः—

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव शूरश्च वसुधेव क्षमान्वितः ॥ १५

अश्वपतिः—

[1]अपि राजात्मजो दाता ब्रह्मण्यो वाऽपि सत्यवान् ।
रूपवानप्युदारो वाऽप्यथ वा प्रियदर्शनः ॥ १६

नारदः—

साङ्कृते रन्तिदेवस्य स्वशक्त्या दानतस्समः ।
ब्रह्मण्यस्सत्यवादी च शिबिरौशीनरो यथा ॥ १७

ययातिरिव चोदारस् सोमवत् प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८

स वदान्यस्स तेजस्वी धीमांश्चैव क्षमान्वितः ।
स दान्तस्स मृदुश्शूरस् स सत्यः संयतेन्द्रियः ॥ १९

[2]सन्मैत्रश्चानसूयश्च स ह्रीमान् धृतिमांश्च सः ।

---

1. अ—सहार्धानि न सन्ति ख—अर्धद्वयं नास्ति
2. ख—इदमर्धं नास्ति

नित्यशश्चार्जवं तस्मिन् धृतिस्तत्रैव च ध्रुवा ॥ २०

सङ्क्षेपतस्तथा वृद्धैश् शीलवृद्धैश्च कथ्यते ॥ २०॥

अश्वपतिः—

गुणैरुपेतं भगवन् सत्यवन्तं ब्रवीषि मे ।

दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१॥

नारदः—

एको दोषोऽस्य नान्योऽस्ति सोऽद्यप्रभृति सत्यवाक् ।

संवत्सरेण सोऽल्पायुर् देहन्यासं करिष्यति ॥ २२॥

अश्वपतिः—

[1]एहि सावित्रि गच्छ त्वं अन्यं वरय शोभने ।

तस्य दोषो महानेको गुणानाक्रम्य तिष्ठति ॥ २३॥

यथा मे भगवानाह नारदो देवसत्कृतः ।

संवत्सरेण सोऽल्पायुर् देहन्यासं करिष्यति ॥ २४॥

सावित्री—

सकृदंशो निपतति सकृत् कन्या प्रदीयते ।

सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥ २५॥

दीर्घायुरथवाऽल्पायुस् सगुणो निर्गुणोऽपि वा ।

सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ २६॥

---

1. क—श्लोकचतुष्टयं नास्ति

मनसा निश्चितं कृत्वा ततो वाचाऽभिधीयते ।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ २७॥

नारदः—

[1]अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्यामि भोस्तावत् सर्वेषां भद्रमस्तु वः ॥ २८॥

मार्कण्डेयः—

एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं ययौ ।
राजा च दुहितुस्सर्वं वैवाहिकमकारयत् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

नारदः—

1. ख—स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥
नान्यस्मिन्पुरुषे सा हि व्यवस्यति च वै गुणान् ।
प्रदानमेव तस्याद्य रोचते दुहितुस्तव ॥

राजा—

अविचार्यं ममैतावद्युक्तं तथ्यं भवद्वचः । [अधिकः पाठः]

## ॥ पञ्चाशदधिकद्विशततमोऽध्यायः ॥

अश्वपतिना राज्ञा द्युमत्सेनाश्रममेत्य सत्यवते स्वपुत्र्याः सावित्र्या दानेन वैवाहिकोत्सवनिर्वर्तनपूर्वकं स्वनगरागमनम् ॥

मार्कण्डेयः—

अथ कन्याप्रदानेन तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत् सर्वं भाण्डं वैवाहिकं नृपः ॥ १

ततो वृद्धान् द्विजान् सर्वान् ऋत्विक्सभ्यपुरोहितान् ।
समाहूय तिथौ पुण्ये प्रययौ सह कन्यया ॥ २

मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं पुनः ।
पद्भ्यामेवाथ तैस्सार्धं राजर्षिस्तमुपागमत् ॥ ३

तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४

स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५

तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ६

तस्य सर्वमभिप्रायम् इतिकर्तव्यतां वचः ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७

सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे सङ्गृहाण मे ॥ ८

द्युमत्सेनः—

च्युताश्च राज्याद्वनवासमाश्रिताश्-
चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे
सहिष्यति क्लेशमिमं सुता तव ॥ ९

अश्वपतिः—

सुखं च दुःखं च भवाभवात्मकं
यथा विजानाति सुताऽहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं
विनिश्चयेनाहमिहागतो नृप ॥ १०

आशां नार्हति मे हन्तुं सौहार्दात् प्रणयेन च ।
[1]अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न माऽर्हसि ॥ ११

अनुरूपो हि संयुक्तस् त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवत[2]स्सुताम् ॥ १२

द्युमत्सेनः—

पूर्वमेवाभिलषितस् सम्बन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ १३

1. ख—अर्धद्वयं नास्ति 2. अ—स्सुतम्

अभिप्रायस्त्वयं वै ते पूर्वमेवाभिकाङ्क्षितः ।
सत्यो निवर्त्यतां सत्यं काङ्क्षितो ह्यसि मेऽतिथिः ॥ १४

मार्कण्डेयः—

ततस्सर्वान् समानीय द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १५

दत्त्वा चाश्वपतिः कन्यां यथार्हं सपरिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६

सत्यवानपि भार्यां तां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १७

[1]गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १८

परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् ॥ १९

एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिद् अतिचक्राम भारत ॥ २०

सावित्र्याश्च शयानायास् तिष्ठन्त्याश्च दिवानिशम् ।
नारदेन यदुक्तं तद् वाक्यं मनसि वर्तते ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. अ—अर्धचतुष्टयं नास्ति

## ॥ एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥

कदाचन नारदनिर्दिष्टे सत्यवतो मृतिदिवसे सावित्र्या परशुहस्तस्य वनं गच्छतो भर्तुरनुगमनम् ॥

मार्कण्डेयः—

काले बहुतिथे तस्य व्यतिक्रान्ते कदाचन ।
[1]प्राप्तस्स कालो मर्तव्यं यत्र सत्यवता नृप ॥ १

गणयन्त्याश्च सावित्र्या दिवसे दिवसे यथा ।
तद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः ॥ २

चतुर्थेऽहनि मर्तव्यम् इति सञ्चिन्त्य भामिनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ ३

तां श्रुत्वा नियतिं तस्या भृशं दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीम् अब्रवीत् परिसान्त्वयन् ॥ ४

द्युमत्सेनः—

अतितीव्रोऽयमारम्भस् त्वयाऽऽरब्धो नृपात्मजे ।
तिसृणां वसतीनां हि स्थानं परमदुष्करम् ॥ ५

सावित्री—

न कार्यस्तात सन्तापः कारयिष्याम्यहं व्रतम् ।
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ६

---

1. अ-घ—अर्धचतुष्टयं नास्ति

द्युमत्सेनः—

व्रतं ते नेति वा वक्तुं नास्मि शक्तः कथञ्चन ।

पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ७

मार्कण्डेयः—

एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।

तिष्ठन्ती [1]चैव सावित्री काष्ठभूतेव लक्ष्यते ॥ ८

श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।

दुःखान्वितायास्तिष्ठन्त्यास् सा रात्रिर्व्यत्यवर्तत ॥ ९

अद्य वै तद्दिनं चेति हुत्वा दीप्तं हुताशनम् ।

युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १०

ततस्सर्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च ।

अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ ११

[2]अवैधव्याशिषस्त्वेके सावित्र्यर्थं हिताश्शुभाः ।

ऊचुस्तपस्विनस्सर्वे तपोवननिवासिनः ॥ १२

एवमस्त्विति सावित्री ध्यानयोगपरायणा ।

मनसा ता गिरस्सर्वाः प्रत्यगृह्णात् तपस्विनी ॥ १३

तं कालं तं मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।

यथोक्तं नारदवचश् चिन्तयन्ती सुदुःखिता ॥ १४

---

1. ख—चापि

2. क—अथ चैवाशिषस्ते तु सदैवचा; ख-आशिषस्त्वब्रुवंस्ते तु संप्रीत्यर्थं
घ—अवैधव्याशिषस्त्वे तु संप्रीत्यर्थं

ततश्च श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तस्थामिदं वाक्यं प्रीत्या भरतसत्तम ॥ १५

श्वश्रूश्वशुरौ—

व्रतो यथोपदिष्टोऽपि यथावच्चरितस्त्वया ।
आहारकालस्सम्प्राप्तः क्रियतां यदनन्तरम् ॥ १६

सावित्री—

अस्तं गते मयाऽऽदित्ये भोक्तव्यं कृतकामया ॥ १६॥

मार्कण्डेयः—

एवं सम्भाषमाणायास् सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनम् ॥ १७॥
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
[1]सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ॥ १८॥

सत्यवान्—

वनं न गतपूर्वं ते दुःखः पन्थाश्च भामिनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ १९॥

सावित्री—

उपवासान्न मे ग्लानिर् नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ २०॥

सत्यवान्—

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।

---

1. अ-क-ख—पङ्क्त्यर्धानि न सन्ति

मम त्वामन्वय गुरून् न मे दोषस्स्पृशेदयम् ॥ २१॥

मार्कण्डेयः—

साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ॥ २२

सावित्री—

अयं गच्छति मे भर्ता फलाहारो महावनम् ।
इच्छेयमभ्यनुज्ञातुम् आर्यया श्वशुरेण च ॥ २३
अनेन सह निर्गन्तुं न हि मे विरहः प्रियः ॥ २३॥
गुर्वग्निहोत्रार्थकृते प्रस्थितोऽयं सुतस्तव ।
[1]न निवार्यो निवार्यस्स्याद् अन्यथा प्रस्थितो वनम् ॥ २४॥
संवत्सरः किञ्चिदूना न निष्क्रान्ताऽहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २५॥

द्युमत्सेनः—

यदा प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाऽभ्यर्थनायुक्तम् उक्तपूर्वं स्मराम्यहम् ॥ २६॥
तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ २७॥

मार्कण्डेयः—

उभाभ्यां समनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ २८॥

---

1 ख—इदमर्धं नास्ति

सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूररवघुष्टानि ददर्श विपुलेक्षणा ॥ २९॥

नदीं पुण्यवहां चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधुराक्षरम् ॥ ३०॥

सा वीक्षमाणा भर्तारं सर्वावस्थमतन्द्रिता ।
मृतमेव हि तं मेने काले मुनिवचस्स्मरन् ॥ ३१॥

अवर्जयन्तीव पतिं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालं प्रतीक्षती ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः]

---

## ॥ द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥

सावित्र्या सह वनं प्रविष्टेन सत्यवता फलाहरणपूर्वकं काष्ठविपाटनम् ॥ १ ॥ तथा शिरोवेदनावूनतया काष्ठपाटनादुपरमपूर्वकं भार्योत्सङ्गे शिरोनिधानेन भूतले शयनम् ॥ २ ॥ ततः सत्यवतोऽसुहरणाय समागतं यमं दृष्टवत्या सावित्र्या साञ्जलिबन्धं तदागमनप्रयोजनप्रश्नः ॥ ३ ॥ यमेन तां प्रति तत्कथनपूर्वकं पाशबन्धनेन सत्यवतस्तदीयशरीरादपकर्षणपूर्वकं स्वलोकं प्रति प्रस्थानम् ॥ ४ ॥ तमनुगच्छन्त्याः सावित्र्याः स्तुतिवचनसंतुष्टेन यमेन तस्यै वरदानपूर्वकं बन्धविमोचनेन सत्यवतो विसर्जनम् ॥ ५ ॥ ततः पुनरुज्जीवितेन सत्यवता सावित्र्या सह पितुराश्रमं प्रति प्रस्थानम् ॥६॥

---

मार्कण्डेयः—

अथ भार्यासहायस्स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठं समाहरत् ॥ १

ततः पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ २

सोऽभिगम्य प्रियां भार्याम् उवाच श्रमपीडितः ॥ २॥

सत्यवान्—

व्यायामेन च मे भीरु जाता शिरसि वेदना ॥ ३

अङ्गानि चैव सावित्रि हृदयं च विदूयते ।
अस्वस्थमिव चात्मानं लक्षये मृदुभाषिणि ॥ ४

शूलैरिव शिरो विद्धम् इदं संलक्षयाम्यहम् ।
स्वप्तुमिच्छामि कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ५

मार्कण्डेयः—
समासाद्य तु सावित्री भर्तारमुपगृह्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ६
ततस्सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ७
हन्त प्राप्तस्स कालोऽयम् इति चिन्तापरा सती ।
मुहूर्तादिव चापश्यत् पुरुषं पीतवाससम् ॥ ८
बद्धमौलिं वपुष्मन्तम् आदित्यमिव तेजसा ।
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ॥ ९
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ।
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैश्शिरः ॥ १०
कृताञ्जलिरुवाचाथ हृदयेन प्रवेपिता ॥ १०॥

सावित्री—
दैवतं त्वाऽभिजानामि वपुरेतदमानुषम् ।
कामया ब्रूहि मे कस्त्वं किञ्च कर्म चिकीर्षसि ॥ ११॥

यमः—
पतिव्रताऽसि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मां च शुभे यमम् ॥ १२॥
अयं ते सत्यवान् भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्याम्येनमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ॥ १३॥

[1]मार्कण्डेयः—

इत्युक्तः पितृराजस्तां भगवान् सञ्चिकीर्षितम् ।
यथावत् सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ १४॥

यमः—

अयं हि धर्मसंयुक्तो रूपवान् गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुम् अतोऽस्मि स्वयमागतः ॥ १५॥

मार्कण्डेयः—

ततस्सत्यवतः कायात् पाशबद्धं वशंगतम् ।
अङ्गुष्ठमात्रं पुरुषं [2]निश्चकर्ष यमो बलात् ॥ १६॥
ततस्समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद् बभूवाप्रियदर्शनम् ॥ १७॥
यमस्तु तं तथा बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चापि दुःखार्ता यममेवान्वपद्यत ॥ १८॥
भर्तुश्शरीररक्षां च विधाय हि तपस्विनी ।
भर्तारमनुगच्छन्ती तथावस्थं सुमध्यमा ॥ १९॥
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ २०

यमः—

निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदैहिकम् ।
कृतं भर्तुस्त्वयाऽऽनृण्यं यावद्गम्यं गतं त्वया ॥ २१

---

1. सवित्री—

श्रूयते भगवन्दूतास् तवागच्छन्ति मानवान् ।
नेतुं किल भवान् कस्माद् आगतोऽसि स्वयं प्रभो ॥

इति अधिकः पाठः मुद्रित पुस्तकेषु अस्ति, परन्तु अ-क-ख-घ—कोशेषु नास्ति 2. ख—निचक

सावित्री—

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मया हि तत्र गन्तव्यम् एष धर्मस्सनातनः ॥ २२
तपसा गुरुवृत्त्या च भर्तुस्स्नेहाद्व्रतेन च ।
तव चैवं प्रसादेन न मे प्रतिहता गतिः ॥ २३
प्राहुस्साप्तपदं मित्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ २४

नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च ।
विजानन्तो धर्ममुदाहरन्ति
तस्मात् सन्तो धर्ममाहुः प्रधानम् ॥ २५
एकस्य [1]धर्मेण सतां मतेन
सर्वे स्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं चतुर्थं
तस्मात् सन्तो धर्ममाहुः प्रधानम् ॥ २६

यमः—

निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनाऽस्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ २७

1. ख-ब—धर्मस्य

सावित्री—

च्युतस्स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुश्श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान् भवेन्नृपस्
तव प्रसादाज्ज्वलनार्कसन्निभः ॥ २८

यमः—

ददामि तेऽहं तमनिन्दिते वरं
यथा त्वयोक्तं भविता च तत् तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ २९

सावित्री—

नात्र श्रमो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिस्
सुरेश भूयश्च वचो निबोध मे ॥ ३०

सतां सकृत् सङ्गतमीप्सितं मतं
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेषु सङ्गतं
ततस्सतां संनिवसेत् समागमे ॥ ३१

यमः—

मनोनुकूलं बुधबुद्धिवर्धनं
त्वयाऽहमुक्तो वचनं हिताश्रयम् ।
विना पुनस्सत्यवतोऽस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि ॥ ३२

सावित्री—

हृतं हि राज्यं श्वशुरस्य मे परैस्
स्वमेव राज्यं स लभेत पार्थिवः ।
जह्यात् स्वधर्मं तु न मे गुरुर्यम
द्वितीयमेनं वरयामि ते वरम् ॥ ३३

यमः—

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात् परिहीयते नृपः ।
कृतेन कामेन मया नृपात्मजे
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३४

सावित्री—

प्रजास्त्वयैता नियमेन संयता
नियम्य चैवं नयसे न काम्यया ।
ततो यमत्वं तव देव विश्रुतं
निबोध चेमां गिरमीरितां मया ॥ ३५

अद्रोहस्सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मस्सनातनः ॥ ३६

एवंप्रायश्च लोकोऽयं मनुष्याश्शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३७

यमः—

पिपासितस्येव यथा भवेज्जलं
तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनस्सत्यवतो हि जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३८

सावित्री—

ममानपत्यः पृथिवीपतिः पिता
भवेत् पितुः पुत्रशतं तथौरसम् ।
[1]कुलस्य संतानकरं च तद्भवेत्
तृतीयमेतद्वरयामि ते वरम् ॥ ३९

यमः—

कुलस्य सन्तानकरं सुवर्चसं
शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथि त्वमागता ॥ ४०

1. क—नास्तीदमर्धम्

सावित्री—

न दूरमेतन्मम भर्तृसन्निधौ
मनो हि मे दूरतरं प्रधावति ।
पथा व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥ ४१

विवस्वतस्त्वं तनयः प्रतापवांस्
ततो हि वैवस्वत उच्यसे बुधैः ।
श्रमेण धर्मेण च रञ्जिताः प्रजास्
ततस्तवेहेश्वर धर्मराजता ॥ ४२

आत्मन्यपि न विश्वासस् तथा भवति सत्सु यः ।
तस्मात् सत्सु विशेषेण सर्वः प्रणयते नरः ॥ ४३

सौहृदात् सर्वभूतानां विश्वासो नाम जायते ।
सत्सु तस्माद् विशेषेण विश्वासं कुरुते जनः ॥ ४४

यमः—

उदाहृतं ते वचनं यदङ्गने
शुभे न तादृक् त्वदृते मया श्रुतम् ।
अनेन तुष्टोऽस्मि विनाऽस्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ ४५

सावित्री—

[1]वरं वृणे सत्यवतो मयि प्रभो
भवेत् सुतानां शतमेतदीप्सितम् ।

यमः—

तथाऽस्तु ते पुत्रशतं शुभानने
द्रुतं निवर्तस्व परिश्रमो न ते ॥ ४६

सावित्री—

सतां सदा शाश्वतधर्मवृत्तिस्
सन्तो न सीदन्ति न च व्यथन्ते ।
सतां सद्भिस्सङ्गमो नाफलोऽस्ति
सद्भ्यो भयं नानुपश्यन्ति सन्तः ॥ ४७

सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो हि भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राजन्
सतां मध्ये नावसीदन्ति सन्तः ॥ ४८

आर्यजुष्टमिदं वृत्तम् इति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नापेक्षन्ते प्रतिक्रियाः ॥ ४९

न च प्रसादः पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।

---

1. क—अर्धद्वयं नास्ति

यस्मादेतन्नियतं सत्सु नित्यं
तस्मात् सन्तो रक्षितारो भवन्ति ॥ ५०

यमः—

यथायथा भाषसि धर्मसंहितं
मनोनुकूलं सुपदं महार्थवत् ।
तथातथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ५१

सावित्री—

न तेऽपवर्गस्सुकृताद्विनाकृतस्
तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं
यथा मृता [1]वै तमहं विना पतिम् ॥ ५२
न कामये भर्तृविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं
न भर्तृहीना व्यवसामि जीवितुम् ॥ ५३
वरातिसर्गश्शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति ॥ ५४

1. ख-ग—ह्येवमहं

मार्कण्डेयः—

तथेत्युक्त्वा तु तं पाशं मुक्त्वा [1]वैवस्वतो वचः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ५५

यमः—

एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
तोषितोऽहं त्वया साध्वि वाक्यैर्धर्मार्थसंहितैः ॥ ५६

अरोगस्तव देहश्च सिद्धार्थश्च भविष्यति ।
चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ॥ ५७

इष्ट्वा यज्ञैश्च धर्मेण लोके ख्यातिं गमिष्यति ।
त्वयि पुत्रशतं चैव सत्यवान् जनयिष्यति ॥ ५८

ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाख्या भविष्यन्तीह शाश्वताः ॥ ५९

पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ॥ ६०

भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ६०॥

मार्कण्डेयः—

एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ६१॥

सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम यत्र तच्छावं भर्तुस्तत्र विचेतनम् ॥ ६२॥

1. क–घ—सत्यवतो

सा भूमौ प्रेक्ष्य भर्तारम् उपसृश्योपगूह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ६३॥

संज्ञां च सत्यवाँल्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनःपुनरुदीक्ष्य वै ॥ ६४॥

सत्यवान्—

सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषश्श्यामो योऽसौ मां सम्प्रकर्षति ॥ ६५॥

सावित्री—

सुचिरं बत सुप्तोऽसि ममाङ्के पुरुषर्षभ ।
गतस्स भगवान् देवः प्रजासंयमनो यमः ॥ ६६॥

विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि [1]शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६७॥

मार्कण्डेयः—

उपलभ्य ततस्संज्ञां सुखसुप्त इवोत्थितः ।
दिशस्सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥ ६८॥

सत्यवान्—

फलाहारो हि निष्क्रान्तस् त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत् ॥ ६९॥

शिरोभितापसन्तप्तस् स्थातुं चिरमशक्नुवन् ।
तवोरसङ्गे प्रसुप्तोऽहम् इति सर्वं स्मरे शुभे ॥ ७०॥

---

1. घ—सज्ञं

त्वयोपगूढस्य च मे निद्रयाऽपहृतं मनः ।
ततोऽपश्यमहं घोरं पुरुषं च महौजसम् ॥ ७१॥

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो हि यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ७२॥

मार्कण्डेयः—

तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तम् आख्यास्यामि नृपात्मज ॥ ७३॥

उत्तिष्ठोत्तिष्ठ भद्रं ते पितरं पश्य सुव्रतम् ।
विगाढा रजनी चैव निवृत्तश्च दिवाकरः ॥ ७४॥

नक्तञ्चराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ७५॥

एताश्शिवा घोरनादान् दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ॥ ७६॥

सत्यवान्—

[1]वनं प्रतिभयाकारं घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्यते ॥ ७७॥

1. ख—कोशे श्लोकोऽयं अत्र नास्ति; परन्तु $73\frac{1}{2}$ 'श्लोकानन्तरं अधिकपाठतया वर्तते.

सावित्री—

अस्मिन्नद्य वने दग्धे शुष्कवृक्षस्स्थितो ज्वलन् ।
वायुना धम्यमानोऽग्निर् दृश्यतेऽत्र क्वचित् क्वचित् ॥ ७८॥

ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः ।
काष्ठानीमानि सन्तीह जहि सन्तापमात्मनः ॥ ७९॥

यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृतेन वै ॥ ८०॥

प्रभाते तु वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेताम् उचितं यदि तेऽनघ ॥ ८१॥

सत्यवान्—

शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संयोगं त्वत्प्रसादजम् ॥ ८२॥

न कदाचिद्विकाले हि गतपूर्वोऽहमाश्रमात् ।
अनागतायां सन्ध्यायां रुणद्ध्यम्बा हि मां सदा ॥ ८३॥

तथाऽपि मयि निष्क्रान्ते सन्तप्येते गुरू मम ।
विचिनोति हि मां तातस् सहैवाश्रमवासिभिः ॥ ८४॥

मातापितृभ्यां सुभृशं दुःखिताभ्यामहं पुरा ।
उपालब्धस्सुबहुशश् चिरेणागच्छसीति च ॥ ८५॥

का त्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ८६॥

पुरा मामूचतुश्चैव रात्रा[1]वाहूय मां तदा ।
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ८७॥
त्वया हीनौ न जीवावो मुहूर्तमपि पुत्रक ।
यावद्धारिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ८८॥
वृद्धयोरन्धयोर्यष्टिस्त्वयि प्राणः प्रतिष्ठितः ।
त्वयि पिण्डश्च कीर्तिश्च सन्तानश्चावयोरिति ॥ ८९॥
माता पिता च वृद्धौ च तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ॥ ९०॥
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम ।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी ॥ ९१॥
अहं च संशयं प्राप्तः कृच्छ्रामप्यापदं स्थितः ।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ॥ ९२॥
व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनः ॥ ९३॥
[2]नात्मानमनुशोचामि यथाऽहं पितरं शुभे ।
भर्तारं चाप्यनुगतां मातरं भृशदुःखिताम् ॥ ९४॥
मत्कृते पितरावद्य सन्तापं भृशमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मया त्विह ॥ ९५॥

1. क-ख-घ—वाम्राय 2. अ-ब—अर्धद्वयं नास्ति

तयोः प्रियं मे कर्तव्यम् इति जीवामि चाप्यहम् ।
परमं दैवतं तौ मे पूजनीयौ सदा मया ॥ ९६॥
तयोस्तु मे सदाऽस्त्येवं व्रतमेतत् पुरातनम् ॥ ९७

मार्कण्डेयः—
एवमुक्त्वा स धर्मात्मा गुरुप्रियहिते रतः ।
उच्छ्रित्य बाहू दुःखार्तस् सुस्वरं प्ररुरोद ह ॥ ९८
ततोऽब्रवीत् तदा दृष्ट्वा भर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि बाहुभ्यां सावित्री धर्मचारिणी ॥ ९९

सावित्री—
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तॄणां स्वस्थो भावो भवत्युत ॥ १००
न स्मराम्युक्तपूर्वं वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ १०१

सत्यवान्—
कामये दर्शनं पित्रोर् याहि सावित्रि माचिरम् ।
अपि नाम गुरू तौ हि पश्येयं [1]प्रीयमाणकौ ॥ १०२
पुरा मातुः पितुर्वाऽपि यदि पश्यामि विप्रियम् ।
न जीविष्ये वरारोहे सत्येनात्मानमालभे ॥ १०३
कर्तुं धर्मं च ते बुद्धिर् मां चेज्जीवन्तमिच्छसि ।

1. क-ख—प्रिय

मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात् ॥ १०४

मार्कण्डेयः—

तत उत्थाय सावित्री केशान् संयम्य भामिनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १०५

उत्थाय सत्यवांश्चापि [1]विमृश्याङ्गानि पाणिना ।
दिशस्सर्वास्समालोक्य कठिने दृष्टिमादधे ॥ १०६

तमुवाचाथ सावित्री श्वः फलानीह नेष्यसि ।
योगक्षेमार्थमेतं ते नेष्यामि परशुं त्वहम् ॥ १०७

कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुस् सकाशे पुनरागमत् ॥ १०८

वामे स्कन्धे तु वामोरूर् भर्तुर्बाहुं निवेश्य सा ।
दक्षिणेन परिष्वज्य जगाम मृदु भामिनी ॥ १०९

सत्यवान्—

अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ ११०

आगतौ स्वः पथाऽनेन फलान्यवचितानि च ।
यथागतं शुभे गच्छ [2]पन्थानमविचारयन् ॥ १११

पलाशखण्डे चैतस्मिन् पन्था व्यावर्तते द्विधा ।

---

1. क-ख—विमृज्या
2. क-ख—पन्थानं मा विचारय; ग—पन्थानमविचारय

अस्योत्तरेण यः पन्थास् तेन गच्छ त्वरस्व च ॥ ११२

स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।

मार्कण्डेयः—

ब्रुवन्नेव त्वरायुक्तस् सम्प्रायादाश्रमं प्रति ॥ ११३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

॥ ४२ ॥ द्रौपदीहरणपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ अस्मिन्नध्याये ११३ श्लोकाः ]

---

## ॥ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥



अकस्माच्चक्षुर्लाभतुष्टेनापि पुत्रानागमविषण्णेन द्युमत्सेनेन तत्र तत्र तदन्वेषणम् ॥ १ ॥ ऋषिगणेन शुभनिमित्तज्ञापनेन समाश्वासिते तस्मिन् सावित्र्या सह सत्यवता पितुराश्रमाभिगमनम् ॥ २॥ मुनिगणाय सावित्र्या वने वृत्तवृत्तान्तनिवेदनम् ॥ ३ ॥

---

मार्कण्डेयः—

तस्मिन्नेव हि काले द्युमत्सेनो महावने ।

लब्धचक्षुः प्रसन्नात्मा [1]भूत्वा सर्वं ददर्श ह ॥ १

स सर्वानाश्रमान् गत्वा शैब्यया सह भार्यया ।

पुत्रहेतोः परामार्तिं जगाम मनुजर्षभ ॥ २

तावाश्रमान्नदीं श्चैव वनानि च सरांसि च।

---

1. ख—दृष्ट्या सर्वान् ब—दृष्ट्वा

तांस्तान् देशान् विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ३
श्रुत्वा शब्दं च यत् किञ्चिद् उन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानभ्यधावताम् ॥ ४
भिन्नैश्च परुषैः पादैस् सव्रणैश्शोणितोक्षितैः ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावताम् ॥ ५
ततोऽभिगम्य तैर्विप्रैस् सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य समानीतौ स्वमाश्रमम् ॥ ६
तत्र भार्यासहायस्स वृतो वृद्धैस्तपोधनैः ॥
आश्वासितो विचित्रार्थैः पूर्वराजकथाश्रयैः ॥ ७
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्यवृत्तानि पुत्रस्य साविव्या दर्शनानि च ॥ ८
शोकं जग्मतुरन्योन्यं स्मरन्तौ भृशदुःखितौ ।
पुनश्च करुणां वाचं वदन्तौ शोककर्शितौ ॥ ९
हा पुत्र वधूस्साध्वि क्वासि क्वासीत्यरोदताम् ॥ ९॥

ब्राह्मणाः—

यथाऽस्य भार्या सावित्री तपसा च दमेन च ।
आचारेण तु संयुक्ता तथा जीवति सत्यवान् ॥ १०॥

गौतमः—

वेदस्साङ्गो मयाऽधीतस् तपो मे सञ्चितं महत् ।

कौमारब्रह्मचर्यं च गुरवोऽग्निश्च तोषिताः ॥ ११॥
समाहितेन चीर्णानि सर्वाण्येव व्रतानि च ।
वायुभक्षोपवासश्च कुशलानि च यानि मे ॥ १२॥
अनेन तपसा वेद्मि सर्वं परिचिकीर्षितम् ।
सत्यमेतन्निबोध त्वं ध्रियते सत्यवानिति ॥ १३॥

शिष्यः—

उपाध्यायस्य मे वक्त्राद् यथा वाक्यं विनिस्सृतम् ।
नैतज्जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ १४॥

ऋषयः—

यथाऽस्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ १५॥

भारद्वाजः—

[1]यथाऽस्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १६॥

दाल्भ्यः—

यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताऽऽहारमकृत्वैव तथा जीवति सत्यवान् ॥ १७॥

वामदेवः—

[2]यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।

---

1. अ—क—अर्धचतुष्टयं नास्ति　2. अ—अर्धद्वयं नास्ति

पार्थिवीं चैव वृद्धिं ते तथा जीवति सत्यवान् ॥ १८॥

धौम्यः—

सर्वैर्गुणैरुपेतस्ते यथा पुत्रो द्विजप्रियः ।
दीर्घायुर्लक्षणोपेतस् तथा जीवति सत्यवान् ॥ १९॥

मार्कण्डेयः—

एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान् विगणयन्नर्थान् अवस्थित इवाभवत् ॥ २०॥

ततो मुहूर्तात् सावित्री तदा सत्यवता तदा ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१॥

दृष्ट्वा चोत्पतितास्सर्वे हर्षं जग्मुश्च ते द्विजाः ।
कण्ठं माता पिता चास्य समालिङ्ग्याभ्यरोदताम् ॥ २२॥

ब्राह्मणाः—

पुत्रेण सङ्गतं त्वाऽद्य चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं हि पश्यामो वृद्धिं ते पृथिवीपते ॥ २३॥

समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात् त्रिभिर्दिष्ट्या विवर्धसे ॥ २४॥

[1]यदा सर्वैर्मुदा युक्तास् तथा तन्नात्र संशयः ।

---

1. ख—इदमर्धंनास्ति

भूयोभूयस्समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २५॥

मार्कण्डेयः—

ततोऽग्निहोत्रमुज्वाल्य द्विजास्ते सर्व एव हि ।
उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् ॥ २६॥

शैब्या च सत्यवांश्चैव सावित्री च ततस्तथा ।
सर्वैस्तैरभ्यनुज्ञाता विशोकास्समुपाविशन् ॥ २७॥

ततो राज्ञा सहासीनास् सर्वे ते वनवासिनः ।
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेस्सुतम् ॥ २८॥

जनाः—

प्रागेव नागतं कस्मात् सभार्येण त्वया विभो ।
विरात्रे चागतं कस्मात् को नु बन्धश्च तेऽभवत् ॥ २९॥

सन्तापितः पिता माता वयं चैव नृपात्मज ।
न कस्मादेव जानीमस् तत् सर्वं वक्तुमर्हसि ॥ ३०॥

सत्यवान्—

पित्राऽहमभ्यनुज्ञातस् सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ॥ ३१॥

सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं न च मया सुप्तपूर्वं कदाचन ॥ ३२॥

सर्वेषामेव भवतां सन्तापो मा भवेदिति ।

अतो [1]विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३३॥

गौतमः—

अकस्माच्चक्षुषः प्राप्तिर् द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि साविश्री वक्तुमर्हति ॥ ३४॥

श्रोतुमिच्छाम सावित्रि [2]त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्ति सावित्रीमेव तेजसा ॥ ३५॥

त्वमत्र हेतुं जानीषे तस्मात् सर्वं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किञ्चिदत्र वदस्व नः ॥ ३६॥

सावित्री—

एवमेतद्यथा वेत्थ सङ्कल्पो नान्यथा हि वः ।
न हि किञ्चिद्रहस्यं मे श्रूयतां कृतमत्र यत् ॥ ३७॥

मृत्युर्मे भर्तुराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस् ततो नैनं जहाम्यहम् ॥ ३८

सुप्तं चैनं यमस्साक्षाद् उपागच्छत् सकिङ्करः ।
स चैनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३९॥

अतोषयमहं देवं सत्येन वचसा विभुम ।
पञ्च मे तेन वै दत्ता वराश्शृणुत तान् मम ॥ ४०॥

---

1. ख—इदमर्धं नास्ति; घ—ऽपि रात्रीगमनं
2. क—अर्धं पादोऽनन्तरश्च न स्तः

चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणामात्मनश्शतम् ॥ ४१॥
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं स्थिरं व्रतम् ॥ ४२॥
एतत् सत्यं मयाऽऽख्यातं कारणं विस्तरेण वः ।
यथावृत्तं सुखोदर्कम् इदं दुःखं महर्षयः ॥ ४३॥

ऋषयः—

निमज्ज्यमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतधर्मपुण्यया
समुद्धृतं साध्वि पुनः कुलीनया ॥ ४४॥

मार्कण्डेयः—

तथा प्रशस्तामभिपूज्य वैते
वरस्त्रियं तामृषयस्समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा
[1]शिवेन जग्मुर्मुदिता यथालयम् ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

---

1. ख-ब—शुभेन

## ॥ चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥



साल्वदेशीयैर्द्युमत्सेनं प्रति तन्मन्त्रिणा तच्छत्रुनिबर्हणनिवेदनपूर्वकं निजनगरं प्रत्यागमनप्रार्थना ॥१॥ सभार्येण द्युमत्सेनेन सावित्रीसत्यवद्भ्यां सह मुनिगणाभिवादनादिपूर्वकं स्वपुरप्रत्यागमनम् ॥ २ ॥

---

मार्कण्डेयः—

तस्यां रात्र्यां व्यतीतायाम् उदिते सूर्यमण्डले ।
कृतपौर्वाह्णिकास्सर्वे समेयुस्ते तपोधनाः ॥ १

तदेव सर्वे सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन् कथयन्तः पुनः पुनः ॥ २

ततः प्रकृतयस्सर्वास् साल्वेभ्योऽभ्यागता नृपम् ।
आचख्युर्हि हतं चैव स्वेनामात्येन तं नृपम् ॥ ३

तं मन्त्रिणा हतं प्रोच्य ससहायं सबान्धवम् ।
न्यवेदयन् यथातत्त्वं विद्रुतं च द्विषद्बलम् ॥ ४

ऐकमत्यं च सर्वस्य जनस्य स्वं नृपं प्रति ।

प्रकृतयः—

सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५

अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमान्यनीकानि चतुरङ्गं च ते बलम् ॥ ६

प्रयाहि राजन् भद्रं ते घुष्टस्ते नगरे जयः ।

अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ॥ ७

मार्कण्डेयः—

चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषाऽन्वितम् ।
मूर्ध्ना निपतितास्सर्वे विस्मयोत्फुल्ललोचनाः ॥ ८

अतोऽभिवाद्य तान् वृद्धान् द्विजानाश्रमवासिनः ।
तैश्चापि पूजितस्सर्वैः प्रययौ नगरं प्रति ॥ ९

शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया सह ॥ १०

ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महाभागं यौवराज्येऽभ्यषेचयन् ॥ ११

ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १२

भ्रातॄणां सोदराणां च तथैवाप्यभवच्छतम् ।
मद्राधिपस्याश्वपतेर् मालव्यां सुमहाबलम् ॥ १३

एवमात्मा पिता माता श्वश्रूश्श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात् समुद्धृतम् ॥ १४

तथैवैषाऽपि कल्याणी द्रौपदी शीलसम्मता ।
तारयिष्यति वस्सर्वान् सावित्रीव कुलाङ्गना ॥ १५

वैशम्पायनः—

एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन् काम्यके न्यवसत् तदा ॥ १६

[1]यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी [2]सर्वसिद्धार्थो न दुःखं प्राप्नुयात् तदा ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥
॥ ४२ ॥ द्रौपदीहरणपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]
(द्रौपदीहरणपर्व समाप्तम्)

---

## ॥ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥

---

[कुण्डलाहरणपर्व ]

सूर्येण स्वप्ने कर्णं प्रति इन्द्रेण पाण्डवप्रियचिकीर्षया भाविकवच-कुण्डलयाचनानिवेदनपूर्वकं तद्दानप्रतिषेधवचनम् ॥ १ ॥ कर्णेन सूर्यं प्रति हेतूक्तिपूर्वकमिन्द्राय तद्दानप्रतिज्ञानम् ॥ २ ॥

---

जनमेजयः—

यत् तत् तदा स महाभागो लोमशो वाक्यमब्रवीत् ।
इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरम् ॥ १

यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित् ।

---

1. क—श्लोकद्वयं नास्ति 2. ख—पुत्रपौत्रैश्च+क्वचित्.

तदाप्यपहरिष्यामि [1]सव्यसाचाविहागते ॥ २

किं नु तद्विदुषां श्रेष्ठ कर्णं प्रति महद्भयम् ।
आसीन्नो न स धर्मात्मा कथयामास कस्यचित् ॥ ३

वैशम्पायनः—

अहं ते राजशार्दूल कथयामि कथामिमाम् ।
[2]पृच्छतो भरतश्रेष्ठ शुश्रूषुस्त्वं हि मे मतः ॥ ४

द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे ।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ ५

अभिप्रायं ततो ज्ञात्वा महेन्द्रस्य विभावसुः ।
कुण्डलार्थे महाराज सूर्यः कर्णमुपागमत् ॥ ६

महार्हे शयने चैनं स्पर्द्ध्यास्तरणसंवृते ।
शयानमतिविश्वस्तं ब्रह्मण्यं सत्यवादिनम् ॥ ७

स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाऽऽविष्टः पुत्रस्नेहाच्च भारत ॥ ८

ब्राह्मणो वेदविद्भूत्वा सूर्यो योगर्द्धिरूपवान् ।
हितार्थमब्रवीत् कर्णं सान्त्वपूर्वमिदं वचः ॥ ९

ब्राह्मणः—

कर्ण मद्वचनं तावच्छृणु सत्यभृतां वर ।

---

1. अ-घ—सव्यसाची इहागते　　2. ख—इदमर्धं नास्ति

ब्रुवतोऽस्य महाबाहो सौहृदात् परमं सुखम् ॥ १०
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया ।
ब्राह्मणच्छद्मना चैव कुण्डलोपजिहीर्षया ॥ ११
विदितं ह्येव शीलं ते सर्वस्य ददतस्तव ।
यथा त्वं भिक्षितस्सद्भिर् ददास्येव न याचसे ॥ १२
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितः ।
वित्तं यच्चान्यदप्याहुर् न प्रत्याख्यातं न कर्हिचित् ॥ १३
तं त्वामेवंविधं ज्ञात्वा स्वयं वै पाकशासनः ।
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ १४
तस्मै प्रयाचमानाय न देये कुण्डले त्वया ।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ १५
कुण्डलार्थेऽब्रुवंस्तात कारणैर्बहुभिस्त्वया ।
अन्यैर्बहुविधैर्वित्तैस् सन्निवार्ये पुनःपुनः ॥ १६
रत्नैस्स्त्रीभिस्तथा भोगैर् धनैर्बहुविधैरपि ।
[1]निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरन्दरः ॥ १७
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे ।
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपैष्यसि ॥ १८
कवचेन च संयुक्तः कुण्डलाभ्यां च मानद ।

1. ख—इदमर्धं नास्ति

अवध्यस्त्वं रणेऽरीणाम् इति विद्धि वचो मम ॥ १९

अमृतादुत्थितमिदम् उभयं रत्नसम्मितम् ।
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत् प्रियं तव ॥ २०

कर्णः—

[1]को मामेवं भवान् प्राह दर्शयन् सौहृदं परम् ।
कामं मे भगवन् ब्रूहि को भवान् द्विजवेषधृक् ॥ २१

ब्राह्मणः—

अहं कर्ण सहस्रांशुस् सौहृदात् त्वां निवेदये ।
कुरुष्वैतद्वचो मे त्वम् एतच्छ्रेयः परं हि ते ॥ २२

कर्णः—

श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः ।
भवान् हितार्थमुद्युक्तश् श्रूयतां तु वचो मम ॥ २३

प्रसादये त्वां वरदं प्रणयाद्यद् ब्रवीम्यहम् ।
न निवार्यो व्रतादस्माद् अहं यद्यस्मि ते प्रियः ॥ २४

व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नं विभावसो ।
यथाऽहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम् । २५

यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मना वृतः ।
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् ॥ २६

दास्यामि विबुधश्रेष्ठ कुण्डले कवचोत्तमम् ।

---

1. घ—अर्धद्वयं नास्ति

न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ॥ २७
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् ।
युक्तं हि यशसा युक्तं मरणं लोकसम्मतम् । २८
सोऽहमिन्द्राय दास्यामि कुण्डले सह कर्मणा ।
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ॥ २९
[1]हितार्थं यदि पार्थानां कुण्डले मे प्रयाचते ।
तन्मे कीर्तिकरं लोके तस्य॰कीर्तिर्भविष्यति ॥ ३०
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ।
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति ॥ ३१
कीर्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ॥ ३२
अयं पुराणश्श्लोको हि स्वयं गीतो विभावसो ।
[2]धाता लोकेश्वर यथा कीर्तिं लप्स्यामि शाश्वतीम् ॥ ३३
पुरुषस्य परे लोके कीर्तिरेव परायणम् ।
इह लोके विशुद्धा च कीर्तिर्वर्धनमायुषः ॥ ३४
[3]सोऽहं शरीरजे त्यक्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम् ।

1. ख—इदमर्धं नास्ति
2. क—यत+राधु नैरस्य वै
ख—धाता लोकेश्वरेणेह यथा निगदितो बुधैः । [पाठान्तरम्]
3. क—सोऽहं शरीरजे दत्त्वा सङ्ग्रामे जीवितार्थिनाम् ।
वृद्धान्बालान्द्विजातींश्च मोक्षयित्वा महाभयात् ।
प्राप्स्यामि परमं लोके कीर्तिं लप्स्यामि शाश्वतीम् ।[अधिकः पाठः]

दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ॥ ३५
हुत्वा शरीरं सङ्ग्रामे कृत्वा कर्म सुदुष्करम् ।
निहत्य च परानाजौ यशः प्राप्स्यामि केवलम् ॥ ३६
भीतानामभयं दत्त्वा सङ्ग्रामे जीवितार्थिनाम् ।
वृद्धान् बालान् द्विजातींश्च मोक्षयित्वा महाभयात् ॥ ३७
प्राप्स्यामि परमं लोके यशस्स्वर्भानुसूनुना ।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम् ॥ ३८
सोऽहं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् ।
ब्रह्मरूपधृते देव लोके गन्ता परां गतिम् ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ३९ श्लोकाः]

---

## ॥ षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥

सूर्येण हेतुकथनपूर्वकं पुनरिन्द्राय कवचकुण्डलदानप्रतिषेधोक्तिः ॥

---

विवस्वान्—

माऽहितं कर्ण कार्षीस्त्वम् आत्मनस्सुहृदां तथा ।
पुत्राणामथ भार्याणाम् अथो मातुरथो पितुः ॥ १

शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर ।
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिता ॥ २

यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान् समादाय गमिष्यति यमक्षयम् ॥ ३

जीवतां कुरुते कार्यं पिता माता सुतास्तथा ।
ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन् पुरुषर्षभ ॥ ४

राजानश्च नरव्याघ्र पुरुषाणां निबोध तत् ।
कीर्तिश्च जीवतस्साध्वी [1]पुरुषस्य महाद्युते ॥ ५

[2]मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः ।
मृतः कीर्तिं न जानीते जीवन् कीर्तिं समश्नुते ॥ ६

[3]मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ।
अहं तु त्वां ब्रवीम्येतद् भक्तोऽसीति हितेप्सया ॥ ७

भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।
भक्तोऽयं परया भक्त्या मामित्येव महाभुज ॥ ८

ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ॥ ८॥

अस्ति चात्र परं किञ्चिद् अध्यात्मं देवनिर्मितम् ।
अतश्च त्वां ब्रवीम्येतत् क्रियतामविशङ्कया ॥ ९॥

---

1. क—पुरुषस्येह च वृद्धिकृत्
2. क—अष्टादशार्धांनि न सन्ति
3. ख—इदमर्धं नास्ति

देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ।
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ॥ १०॥

पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध मे ।
माऽस्मै ते कुण्डले दद्या भिक्षवे वज्रपाणये ॥ ११॥

शोभसे कुण्डलाभ्यां हि रुचिराभ्यां महाद्युते ।
विशाखयोर्मध्यगतश् शशीव विमलोदितः ॥ १२॥

कीर्तिश्च जीवतस्साध्वी पुरुषस्येह वृद्धिकृत् ॥ १३

प्रत्याख्येयस्त्वया तात कुण्डलार्थे पुरन्दरः ।
पाण्डवानां हिते युक्तो भिक्षन् ब्राह्मणवेषधृत् ॥ १४

शक्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयाऽनघ ।
विहन्तुं देवराजस्य हेतुयुक्तैः पुनःपुनः ॥ १५
[1]उपपत्त्युपपन्नार्थैर् माधुर्यकृतलक्षणैः ॥ १५॥
पुरन्दरस्य कर्ण त्वं बुद्धिमेतामपानुद ॥ १६

त्वं हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना ।
सव्यसाची त्वया चैव युधि शूरस्समेष्यति ॥ १७

न तु त्वामर्जुनश्शक्तः कुण्डलाभ्यां समन्वितम् ।
विजेतुं युधि यद्यस्य स्वयमिन्द्रश्शरो भवेत् ॥ १८

1. ख—इदमर्धं नास्ति

तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे ।
सङ्ग्रामे यदि निर्जेतुं कर्ण कामयसेऽर्जुनम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

## ॥ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥

कर्णेन सूर्यं प्रति सानुनयं शक्राय कवचकुण्डलदानेऽभ्यनुज्ञाप्रार्थना॥ १ ॥ सूर्येण कर्णं प्रति शक्राच्छक्तिग्रहणचोदनापूर्वकं कुण्डलादिदानाभ्यनुज्ञानम् ॥ २ ॥

कर्णः—

[1]भगवन्तमहं भक्तो यथार्थं वेत्थ गोपते ।
तथा परं हि तिग्मांशो नान्यं देवं कथञ्चन ॥ १

न मे माता न मे पुत्रा न चात्मा सुहृदो न च ।
तथैवेष्टास्सदा भक्त्या यथा त्वं गोपते मम ॥ २

इष्टानां च महात्मानो भक्तानां च न संशयः ।
कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ॥ ३

इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि ।

1. अ-ब—अर्धद्वयं नास्ति

जानीत इति वै कृत्वा भगवानाह मद्धितम् ॥ ४

भूयश्च शिरसा देवं प्रसाद्य च पुनःपुनः ।
इति ब्रवीमि तिग्मांशो कर्तुं मे क्षन्तुमर्हसि ॥ ५

बिभेमि न तथा मृत्योर् यथा बिभ्येऽनृतादहम् ।
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम् ॥ ६

प्रदाता जीवितस्यापि न मेऽत्रास्ति विचारणा ।
यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति ॥ ७

व्येतु सन्तापजं दुःखं तव भास्कर मानसे ।
अर्जुनप्रतिमं चैव विजेष्यामि रणेऽर्जुनम् ॥ ८

तवापि विदितं देव ममाप्यस्त्रबलं महत् ।
जामदग्न्यादुपात्तं यत् तथा द्रोणान्महात्मनः ॥ ९

इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम ।
भिक्षवे वज्रिणे दद्याम् अपि जीवितमात्मनः ॥ १०

सूर्यः—

यदि तद्दास्यसे कर्ण वज्रिणे कुण्डले शुभे ।
त्वमप्येनमथो ब्रूया विजयार्थं महाबल ॥ ११

[1]नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतोः ।
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ॥ १२

1. क्ष—इदमर्धं नास्ति

अर्जुनेन विनाशं हि तव दानवसूदनः ।
प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ १३

स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः ।
अभ्यर्थयेथा देवेशम् अमोघार्थे पुरंदरम् ॥ १४

अमोघां देहि मे शक्तिम् अमित्रविनिबर्हिणीम् ।
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमे ॥ १५

इत्येव नियमेन त्वं दद्याऽशक्राय कुण्डले ।
तथा त्वं कर्ण सङ्ग्रामे रिपून् वै निहनिष्यसि ॥ १६

नाहत्वा हि महाबाहो शत्रूनेति करं पुनः ।
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ १७

वैशम्पायनः—

एवमुक्त्वा सहस्रांशुस् सहसाऽन्तरधीयत ।
कर्णस्तु बुबुधे राजन् स्वप्नान्ते [1]प्रवदन्निव ॥ १८

प्रतिबुद्धस्तु राधेयस् स्वप्नं सञ्चिन्त्य भारत ।
चकार निश्चयं राजन् शक्त्यर्थे वदतां वरः ॥ १९

यदि मामिन्द्र आयाति कुण्डलार्थे परन्तपः ।
शक्त्या तस्मै प्रदास्यामि कुण्डले वर्म चैव ह ॥ २०

स कृत्वा प्रातरुत्थाय कार्याणि भरतर्षभ ।

---

1. क-ख—प्रव्यथन्निव घ—प्रबुधन्निव

ब्राह्मणान् वाचयित्वाऽथ यथाकार्यमुपाक्रमत् ॥ २१
विधिना राजशार्दूल मुहूर्तमजपत् ततः ।
ततस्सूर्याय जप्यान्ते कर्णस्स्वप्नं न्यवेदयत् ॥ २२
यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि ।
तत् सर्वमानुपूर्व्येण शशंसास्मै वृषा तदा ॥ २३
तच्छ्रुत्वा भगवान् देवो भानुस्स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यस्स्मयन्निव ॥ २४
तत[1]स्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन् वै वासवं प्रत्यपालयत् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

॥ ४३ ॥ कुण्डलाहरणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥

---

स्वावासे दुर्वाससमावासयता कुन्तिभोजेन तत्परिचर्यार्थे कुन्त्या नियोजनम् ॥

---

जनमेजयः—

किं नु गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशे कुण्डले चैव कवचं चैव कीदृशम् ॥ १

---

1. क-ख-ग—स्सत्यमिति

कुतश्च कवचं तस्य कुण्डले चैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ २

वैशम्पायनः—

अहं राजन् ब्रवीम्येतत् तस्य गुह्यं विभावसोः ।
यादृशे कुण्डले ते च कवचं चैव यादृशम् ॥ ३
कुन्तिभोजं पुरा राजन् ब्राह्मणस्समुपस्थितः ।
तिग्मतेजा महान् प्रांशुश् श्मश्रुदण्डजटाधरः ॥ ४
दर्शनीयोऽनवद्याङ्गस् तेजसा प्रज्वलन्निव ।
[1]मधुपिङ्गो मधुरवाक् तपस्स्वाध्यायभूषणः ॥ ५
स राजानं कुन्तिभोजम् अब्रवीत् सुमहातपाः ।

ब्राह्मणः—

भिक्षामिच्छाम्यहं भोक्तुं तव गेहे तु वत्सरम् ॥ ६
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ७
यथाकामं च गच्छेयम् आगच्छेयं तथैव च ।
शय्यासने च मे राजन् नापराध्येत कश्चन ॥ ८

वैशम्पायनः—

तमब्रवीत् कुन्तिभोजः प्रीतियुक्तमिदं वचः ।
एवमस्तु परं चेति पुनश्चैनमथाब्रवीत् ॥ ९

कुन्तिभोजः—

मम कन्या महाब्रह्मन् पृथा नाम यशस्विनी ।

---

1. ख—इदमर्धं नास्ति

[1]शीलवृत्तान्विता साध्वी नियताऽ[2]नवमानिनी ॥ १०
उपस्थास्यति सा त्वां वै पूजयाना महाविभो ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ११

वैशम्पायनः—

एवमुक्त्वा तु तं विप्रं प्रतिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् ॥ १२

कुन्तिभोजः—

अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ १३
त्वयि वत्से परायत्तं ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यं न मिथ्या त्वं कर्तुमर्हसि कर्हिचित् ॥ १४
अयं तपस्वी भगवान् स्वाध्यायनिरतो द्विजः ।
यद्यद्ब्रूयान्महातेजास् तत्तद्देयममत्सरात् ॥ १५
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैस् सूर्यो दिवि विराजते ॥ १६
अमानयंस्तान् दाण्डक्यो वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ॥ १७
[3]विन्ध्यश्चैव समुद्रश्च नहुषश्च विहिंसितः ।

---

1. ख—इदमर्धं नास्ति     2. क-ख—न च मानिनी
3. क—नास्तीदमर्धम्

सोऽयं वत्से महाभागे आहितस्त्वयि साम्प्रतम् ॥ १८
त्वं सदा निभृतं कुर्या ब्राह्मणस्याभिराधनम् ।
[1]जानामि प्रणिधानं ते बाल्यात् प्रभृति भामिनि ॥ १९
ब्राह्मणेष्वपि सर्वेषु गुरुबन्धुषु चैव ह ।
तथा प्रेष्येषु [2]सर्वेषु मित्रसम्बन्धबन्धुषु ॥ २०
मयि चैव यथावत् त्वं सर्वमावृत्य वर्तसे ॥ २०॥
न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्याऽनवद्याङ्गि तव भृत्यजनेष्वपि ॥ २१॥
[3]सन्देष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा तु सुतेवासि ममैव हि ॥ २२॥
वृष्णीनां च कुले जाता कुले मम विवर्धिता ।
सुखात् सुखमनुप्राप्य ह्रदाद्ध्रदमिवापगा ॥ २३॥
दौष्कुलेया विशेषेण कथञ्चित् प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाश्शुभे ॥ २४॥
पृथे राजकुले जन्म रूपं चाद्भुतदर्शनम् ।
तेन तेनासि सम्पन्ना समुपेताप्यनिन्दिते ॥ २५॥
सा त्वं मानं परित्यज्य दम्भं दर्पं च भामिनि ।

---

1. ख—इदमर्धं नास्ति
2. ख—मयि च सर्वमादृत्य वर्तसे—मध्ये अर्धं नास्ति
3. ख—अर्धद्वयं नास्ति

आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ २६॥

एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते च द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये २७॥ श्लोकाः]

---

## ॥ एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥

कुन्त्या सावधानं परिचर्यया दुर्वाससः परितोषणम् ॥

---

कुन्ती—

ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्र न ते मिथ्या ब्रवीम्यहम् ॥ १

एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्चैतत् प्रियं मम ॥ २

अद्यैवैष्यति सायाह्ने यदि प्रातरथो निशि ।
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ३

लाभोऽयं मम राजेन्द्र यद्वै पूजयितुं द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ४

विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः ।
[1]वसन् प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ५

यत् प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्ये तदहं कर्तुं व्येतु ते मानसो ज्वरः ॥ ६

ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थास्स्युर् विपरीते वधाय च ॥ ७

साऽहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृते व्यथां राजन् प्राप्स्यसि द्विजसत्तमात् ॥ ८

अपराधो हि राजेन्द्र राज्ञामश्रेयसे परम् ।
भवन्ति च्यवनो यद्वत् सुकन्यायाः कृते पुरा ॥ ९

नियमेन परेणाहम् उपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ १०

कुन्तिभोजः—

एवमेतत् त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थे कुलार्थे च त्वमात्मार्थे च नन्दिनी ॥ ११

वैशम्पायनः—

एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय सुतवत्सलः ॥ १२

1. क-ख-घ—स सं

कुन्तिभोजः—

इयं ब्रह्मन् मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत् किञ्चिन्न कार्यं हृदि तत् त्वया ॥ १३

द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा ॥ १४

सुमहत्यपराधेऽपि क्षमा कार्या द्विजोत्तम ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजातिना ॥ १५

वैशम्पायनः—

तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसङ्काशं गृहमस्मै न्यवेदयत् ॥ १६

तत्राग्निशरणे गुप्तम् आसनं तस्य भानुमत् ।
आहारादि च सर्वं तत् तथैव प्रत्यवेदयत् ॥ १७

निक्षिप्य राजपुत्री च तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधनम् ॥ १८

तं तु सा ब्राह्मणश्रेष्ठम् उपचारेण कन्यका ।
विधिवत् परिचारार्हं देववत् पर्यतोषयत् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

॥ ४३ ॥ कुण्डलाहरणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये १९ श्लोकाः ]

## ॥ षष्ट्यधिकद्विशततमोऽध्यायः ॥

कुन्तीपरिचर्यासंतुष्टेन दुर्वाससा तां प्रति अभीप्सितार्थवरणचोदना॥ १ ॥ तथा किंचिदप्यवृण्वन्त्यै तस्यै स्वयमेव सकलदेववशीकरणदक्षस्य मन्त्रस्योपदेशः ॥ २ ॥ ततस्तेन कुन्तिभोजामन्त्रणपूर्वकमन्तर्धानम् ॥ ३ ॥

वैशम्पायनः—

सा तु कन्या महाभागं ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ १
प्रातरायास्य इत्युक्त्वा कदाचिद्द्विजसत्तमः ।
तत आयाति राजेन्द्र सायं रात्रावथो पुनः ॥ २
तं च वेलासु सर्वासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ३
अन्नादिसमुदाचारश् शय्यासनकृतस्तथा ।
दिवसे दिवसे तस्य वर्धते न तु हीयते ॥ ४
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तथा ॥ ५
स्वप्नकाले पुनश्चैति न चैति बहुशो द्विजः ।
दुर्लभ्यमपि चैवान्नं दीयतामिति सोऽब्रवीत् ॥ ६
कृतमित्येव तत् सर्वं यथा तस्मै न्यवेदयत् ॥ ६॥
शिष्यवत् पुत्रवच्चैव स्वसृवच्च सुसंयता ।
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ॥ ७॥

प्रीतिमुत्पादयामास धन्या यत्नैरनिन्दिता ॥ ८
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्याः परं यत्नमथाकरोत् ॥ ९
तां प्रभाते च सायेऽपि पिता पप्रच्छ भारत ॥ ९॥

पिता—

अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया ॥ १०

वैशम्पायनः—

तं वा परममित्येव प्रत्युवाच यशस्विनी ॥ १०॥
ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः ॥ ११
ततस्संवत्सरे पूर्णे यदाऽसौ जपतां वरः ।
नापश्यद्दुष्कृतं किञ्चित् पृथायास्सौहृदे रतः ॥ १२
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ॥ १२॥

ब्राह्मणः—

प्रीतोऽस्मि परमं भद्रे परिचारेण मे शुभे ।
[1]वरान् वृणीष्व कल्याणि दुरापान् मानुषैरिह ॥ १३॥
यैस्त्वं सीमन्तिनीस्सर्वा यशसाऽभिभविष्यसि ॥ १४

कुन्ती—

कृतानि मम सर्वाणि यस्मान्मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ १५

ब्राह्मणः—

यदि नेच्छसि भद्रं ते वरं मत्तश्शुचिस्मिते ।

1. क—अष्टार्धानि न सन्ति

इमं मन्त्रं गृहाण त्वम् आह्वानाय दिवौकसाम् ॥ १६
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेन तेन वशे भद्रे स्थातव्यं ते भविष्यति ॥ १७
अकामो वा सकामो वा स समेष्यति ते वशम् ।
विबुधो मन्त्रसम्भ्रान्तो वाक्यैर्भृत्य इवानुगः ॥ १८

**वैशम्पायनः—**

न शशाक द्विजार्तिं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ १९
ततस्तामनवद्याङ्गीं ग्राहयामास वै द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि स्थितम् ॥ २०
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ॥ २०॥
उषितोऽस्मि सुखं राजन् कन्यया परितोषितः ।
तव गेहे सुविहितस् सदा सुप्रतिपूजितः ॥ २१॥
साधयिष्यामहे तावद् इत्युक्त्वाऽन्तरधीयत ॥ २२
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।
बभूव विस्मयाविष्टः पृथां चेमामपूजयत् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

## ॥ एकषष्ट्यधिकद्विशततमोऽध्यायः ॥

कदाचन ऋतुस्नातया सूर्यमवलोकयन्त्या कुन्त्या दुर्वाससा दत्त-मन्त्रपरीक्षणाय तदाह्वानम् ॥ १ ॥ मन्त्रबलादुपागतेन रविणा स्वेन सङ्गमनङ्गीकुर्वन्त्याः कुन्त्या विभीषिकापूर्वकं सङ्गायानुनयनम् ॥ २ ॥

वैशम्पायनः—

[1]गते तस्मिन् द्विजश्रेष्ठे कस्मिंश्चित् कालपर्यये ।
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् ॥ १

कुन्ती—

अयं वै कीदृशस्तेन मम दत्तो महात्मना ।
मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिव ॥ २

वैशम्पायनः—

एवं सा चिन्तयन्त्येव ददर्शर्तुं यदृच्छया ।
[2]व्रीडिता साऽभवत् कन्या बालभावे रजस्वला ॥ ३
अथोद्यन्तं सहस्रांशुं पृथादीप्तं ददर्श ह ।
न चातप्यत रूपेण भानोस्सन्ध्यागतस्य सा ॥ ४
तस्या दृष्टिरभूद्दिव्या साऽपश्यद्दिव्यदर्शनम् ।
आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ५

1. ख—सा तु कन्या महाभागा ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ [अधिकः पाठः]
2. ख—इदमर्धं नास्ति

तस्याः कौतूहलं चासीन्मन्त्रं प्रति नराधिप ।
आह्वानमकरोत् साऽथ तस्य देवस्य भामिनी ॥ ६

उपस्पृश्य तदा कुन्ती साऽऽजुहाव दिवाकरम् ।
आजगाम ततो राजंस् त्वरमाणो दिवाकरः ॥ ७

मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव ।
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ८

योगात् कृत्वा द्विधाऽऽत्मानम् आजगाम तताप च ।
आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ॥ ९

सूर्यः—

आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः ।
किं करोम्यवशो राज्ञि ब्रूहि किं ते चिकीर्षितम् ॥ १०

कुन्ती—

गम्यतां भगवंस्तत्र यतोऽसि समुपागतः ।
कौतूहलात् समाहूतः प्रसीद भगवन्निति ॥ ११

सूर्यः—

गमिष्येऽहं यथा मा त्वं ब्रवीषि तनुमध्यमे ।
न तु देवं समाहूय न्याय्यं प्रेषयितुं यथा ॥ १२

तवाभिसन्धि सुभगे कुर्यां पुत्रो भवेदिति ।
वीर्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ १३

सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि ।

उत्पत्स्यति हि पुत्रस्ते यथासङ्कल्पमङ्गने ॥ १४

अथ गच्छाम्यहं भद्रे त्वया सङ्गम्य सुस्मिते ।
शप्स्ये कन्येऽन्यथा क्रुद्धो ब्राह्मणं पितरं च ते ॥ १५

त्वत्कृते तान् प्रधक्ष्यामि सर्वानपि न संशयः ।
पितरं चैव ते मूढे यो न वेत्ति तवानयम् ॥ १६

तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात् तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् ॥ १७

एते हि विबुधास्सर्वे पुरंदरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव मां शुभे ॥ १८

पश्य चैनान् वरारोहे दिव्यं चक्षुरिदं हि ते ।
पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ १९

वैशम्पायनः—

ततोऽपश्यत् त्रिदशान् राजपुत्री
सर्वानेव स्वेषु धिष्ण्येषु खस्थान् ।
प्रभासन्तं भानुमन्तं [1]महान्तं
यथाऽऽदित्यं रोचमानं तथैव ॥ २०

तान् सा दृष्ट्वा त्रिदशानेव बाला
सूर्यं देवी वचनं प्राह भीता ॥ २०॥

1. ख-ब—पुरस्ताद्

कुन्ती—

गच्छ त्वं वै गोपते स्वं विमानं
कन्याभावो दुःख एषोपचारः ॥ २१

पिता माता गुरवश्चैव मन्ये
देहस्यास्य प्रभवन्ति स्म दाने ।
साऽहं धर्मं पालयिष्यामि लोके
स्त्रीणां वृत्तं पूज्यते देहरक्षा ॥ २२

मया मन्त्रबलं ज्ञातुम् आहूतस्त्वं विभावसो ।
बाल्याद्बालेति तत् कृत्वा क्षन्तुमर्हसि मे प्रभो ॥ २३

सूर्यः—

बालेति कृत्वाऽनुनयं तवाहं
ददानि नान्यानुनयं लभेत ।
आत्मप्रदानं कुरु कुन्तिकन्ये
शान्तिस्तवानेन भवेच्च भीरु ॥ २४

न चापि गन्तुं युक्तं हि मया मिथ्याकृतेन वै ।
इतस्त्वयाऽनवद्याङ्गि लोके समुपहास्यताम् ॥ २५

गच्छेयमेव सुश्रोणि गतोऽहं वै निराकृतः ।
सर्वेषां विबुधानां च वक्तव्यस्स्यामहं शुभे ॥ २६

सा त्वं मया सुसङ्गच्छ लप्स्यसे मादृशं सुतम् ।
विशिष्टा सर्वलोकेषु भविष्यसि च भामिनी ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

## ॥ द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥

कुन्त्या सङ्गमन्तरा दुश्शकानुनये भास्करे कृच्छ्रात्तदङ्गीकरणम् ॥ १ ॥
सूर्येण पुनः कन्यात्वलाभरूपवरदानपूर्वकं तस्यां गर्भादानम् ॥ २ ॥

वैशम्पायनः—

सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः ।
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ १

न शशाक च सा बाला प्रत्याख्यातुं तमोनुदम् ।
भीता शापात् ततो राजन् दध्यौ दीर्घमथान्तरम् ॥ २

अनागसः पितुश्शापो ब्राह्मणस्य तथैव च ।
मन्निमित्तं कथं तत् स्यात् क्रुद्धादस्माद्विभावसोः ॥ ३

[1]बालेनापि च सा मोहाद् भृशं शापभयादपि ।

1. ख—अर्धद्वयं नास्ति

नाऽत्यासाद्यथितव्यानि तेजांसि च तपांसि च ॥ ४
साऽहमद्य भृशं भीता गृहीत्वा च करौ भृशम् ।
कथं च कार्यं कुर्यां वै स्वयमात्मनिवेदनम् ॥ ५
सैवं शापभयात् त्रस्ता बहु चिन्तयती तदा ।
मोहेनाभिपरीताङ्गी स्मयमाना पुनः पुनः ॥ ६
[1]तं देवमब्रवीद्भीता बन्धूनां राजसत्तम ।
व्रीडाविह्वलया वाचा शापार्त्तैव विशां पते ॥ ७

कुन्ती—

पिता मे ध्रियते देव माता चान्ये च बान्धवाः ।
न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ॥ ८
त्वया मे सङ्गमो देव यदि स्याद्विधिवर्जितः ।
मन्निमित्तं कुलस्यास्य लोकेऽकीर्तिर्न संशयः ॥ ९
अथवा धर्ममेव त्वं मन्यसे तपतां वर ।
ऋते प्रदानाद्बन्धुभ्यस् तव कामं करोम्यहम् ॥ १०
आत्मप्रदानं दुर्धर्ष तव कृत्वा सती त्वहम् ।
त्वयि धर्मो यशश्चैव त्वयि कीर्तिश्च देहिनाम् ॥ ११

सूर्यः—

न ते पिता न ते माता गुरवो वा शुचिस्मिते ।

1. स—तमेवमब्रवीद्भीता शापार्त्तैव विशाम्पते—मध्ये अर्धं नास्ति

प्रभवन्ति प्रदाने ते भद्रं ते शृणु मे वचः ॥ १२
सर्वान् कामयते यस्मात् कनेर्धातोश्च भामिनि ।
[1]तस्मात् कन्येह सुश्रोणी स्वतन्त्रा वरवर्णिनि ॥ १३
नाधर्मश्चरितः कश्चित् त्वया भवति भामिनि ।
अधर्मं कुत एवाहं चरेयं लोककाम्यया ॥ १४
अनावृतास्स्त्रियस्सर्वा नराश्च वरवर्णिनि ।
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः ॥ १५
सा मया सह सङ्गम्य पुनः कन्या भविष्यसि ।
पुत्रश्च ते महाबाहुर् भविष्यति न संशयः ॥ १६

कुन्ती—
यदि पुत्रो ममाप्येवं त्वत्तस्सर्वतमोपह ।
कुण्डली कवची शूरो महाबाहुर्भविष्यति । १७
अस्तु मे सङ्गमो देव अनेन समयेन ते ॥ १७॥

सूर्यः—
भविष्यति महाराज्ञि मत्समो मत्प्रकाशिनि ।
तस्मै दास्यामि वामोरु वर्म चैवेदमात्मनः ॥ १८॥

कुन्ती—
भगवन् देवदेवेश सङ्गमोऽहं त्वया सह ।
यदि पुत्रो भवेदेवं यथा वदासि गोपते ॥ १९॥

वैशम्पायनः—
तथेत्युक्त्वा च तां कुन्तीम् आविवेश विहङ्गमः ।

---

1. अ-क-ख—इदमर्धं नास्ति

स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् ॥ २०॥
ततस्सा विह्वला साध्वी कन्या सूर्यस्य तेजसा ।
पपात विह्वला देवी शयने मूढचेतना ॥ २१॥

सूर्यः—

साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि ।
सर्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि ॥ २२॥

वैशम्पायनः—

सा तु तं व्रीडिता साध्वी कन्या सूर्यमथाब्रवीत् ।
एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्चसम् ॥ २३॥

इति स्मोक्त्वा कुन्तिभोजात्मजा सा
विवस्वन्तं ध्यायमाना सलज्जा ।
तस्मिन् पुण्ये शयनीये पपात
मोहाविष्टा वेपमाना लतेव ॥ २४॥
तां तीक्ष्णांशुस् तेजसा मोहयित्वा
योगेनाविश्यात्मसत्त्वं चकार ।
न चैवैनां दूषयामास भानुस्
संज्ञां लेभे भूय एवाथ बाला ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

## ॥ त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥

कतिपयकालातिपाते कर्णस्य सहजकवचकुण्डलधारणेन कुन्त्यां जननम् ॥ १ ॥ कुन्त्या धात्र्या सह मन्त्रपूर्वकं जातमात्रस्य गर्भस्य मञ्जूषायां निक्षेपपूर्वकमश्वनद्यां विसर्जनम् ॥ २ ॥ सगर्भाया मञ्जूषायाः क्रमेण चर्मण्वतीयमुनाद्वारा गङ्गायां प्लवनेन चम्पापुरीप्रवेशः ॥ ३ ॥

वैशम्पायनः—

ततो गर्भस्समभवत् पृथायाः पृथिवीपते ।
शुक्ले दर्शोत्तरे पक्षे तारापतिरिवाम्बरे ॥ १

सा बान्धवभयाद् भीता गर्भं तं विनिगूहती ।
धारयामास सुश्रोणी न चैनां बुबुधे जनः ॥ २

न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ।
[1]कन्यापुरगतां बालां निपुणां परिरक्षणे ॥ ३

ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ।
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ॥ ४

तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्यक्षं ऋषभस्कन्धं यथा सवितरं तथा ॥ ५

जातमात्रं च तं गर्भं धात्र्या सम्मन्त्र्य भामिनी ।
उत्स्रष्टुकामा तं गर्भं कारयामास भारत ॥ ६

1. ख—इदमर्धं नास्ति

मञ्जूषां शिल्पिभिस्तूर्णं सुनद्धां सुप्रतिष्ठिताम् ।
प्लवैर्बहुविधैर्बद्धां प्लवनार्थे जले नृप ॥ ७
अजिनैर्मृदुभिश्चैवं संस्तीर्णशयनां तथा ।
मञ्जूषायामवद्ध्ये स्वास्तीर्णायां समन्ततः ॥ ८
मधूच्छिष्टस्थितायांतम् [1]असुखा रुदती तथा ।
श्लक्ष्णायां स्वपिधानायाम् अपिनह्यामवासृजत् ॥ ९
[2]जानतीं चाप्यकर्तव्यं कन्याया गर्भधारणम् ।
पुत्रस्नेहेन राजेन्द्र करुणं पर्यदेवयत् ॥ १०
समुत्सृजन्ती मञ्जूषाम् अश्वनद्यास्तथा जले ।
उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु ॥ ११

कुन्ती—

स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक ।
दिव्येभ्यश्चैव भूतेभ्यस् तथा तोयचराश्च ये ॥ १२
[3]शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः ।
आगमाश्च तथा सन्तु दिव्येन विधिना तव ॥ १३
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः ।
अन्तरिक्षेऽन्तरिक्षस्थः पवनस्सर्वतस्तदा ॥ १४
पिता त्वां पातु सर्वत्र तपनस्तपतां वरः ।

---

1. क—तमसुखां; ख—सा दुःखात् प्ररुदती तदा; घ—तं सुसुखा
2. ख—इदमर्धं नास्ति 3. क—नासीदमधेम्

येन दत्तोऽसि मे पुत्र दिव्येन विधिना त्विह ॥ १५

आदित्या वसवो रुद्रास् साध्या विश्वे च देवताः ।
मरुतश्च सहेन्द्रेण दिशश्च सदिगीश्वराः ॥ १६

रक्षन्तु त्वां सुरास्सर्वे समेषु विषमेषु च ।
वेत्स्यामि त्वां विदेशेऽपि कवचेनाभिसूचितम् ॥ १७

धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः ।
यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् ॥ १८

धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ।
यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज ॥ १९

कोनु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसम् ।
दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् ॥ २०

पद्मायतविशालाक्षं पद्मताम्रतलोज्ज्वलम् ।
सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति ॥ २१

धन्या द्रक्ष्यन्ति तत्रस्था भूमौ संसर्पमाणकम् ।
अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् ॥ २२

धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगे मुखे ।
हिमवद्वनसम्भूतं सिंहं केसरिणं यथा ॥ २३

वैशम्पायनः—

एवं बहुविधं राजन् विलप्य करुणं पृथा ।

ससर्ज तां तु मञ्जूषां सा सम्बोधभयात् पितुः ॥ २४

[1]रुदती पुत्रशोकार्ता निशीथे कमलेक्षणा ।
धात्र्या सह पृथा राजन् पुत्रदर्शनलालसा ॥ २५

विसर्जयित्वा मञ्जूषां सम्बोधनभयात् पितुः ।
विवेश राजभवनं पुनश्शोकातुरा ततः ॥ २६

मञ्जूषा अश्वनद्यां सा ययौ चर्मण्वतीं नदीम् ।
चर्मण्वत्याश्च यमुनां तथा गङ्गां जगाम ह ॥ २७

गङ्गायास्सूतविषयं चम्पामभ्याययौ पुरीम् ।
स मञ्जूषागतो गर्भस् तरङ्गैरुह्यमानकः ॥ २८

अमृतादुत्थितं पूर्वं तत् तु वर्म सकुण्डलम् ।
धारयामास तं गर्भं दैवं च विधिनिर्मितम् ॥ २९

एतद्गुह्यं महाराज सूर्यस्यासीन्महात्मनः ।
स सूर्यसम्भवः कर्णः कुन्त्या गर्भेण धारितः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

॥ ४३ ॥ कुण्डलाहरणपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये ३० श्लोकाः ]

---

1. ख—अर्धत्रयं नास्ति

## ॥ चतुष्षष्ट्यधिकद्विशततमोऽध्यायः ॥

स्नानाय भार्यया सह गङ्गां गतेनाधिरथनाम्ना सूतेन तत्रोत्प्लवमानायाः सगर्भमञ्जूषाया ग्रहणम् ॥ १ ॥ तथा मञ्जूषोद्घाटने दृष्टस्य गर्भस्य स्वपुत्रतया परिकल्पनेन नामकरणादिपूर्वकं प्रीत्या पोषणम् ॥ २ ॥ कर्णेन परशुरामादिभ्योऽस्त्रग्रहणपूर्वकं दुर्योधनेन सख्यकरणम् ॥ ३ ॥

वैशम्पायनः—

एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा ।
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ॥ १

तस्य भार्याऽभवद्राजन् रूपेणासदृशी भुवि ।
राधा नाम महाभागा न सा पुत्रमविन्दत ॥ २

अपत्यार्थे परं यत्नम् अकरोद्धि विशेषतः ॥ २॥

सा ददर्शाथ मञ्जूषाम् उह्यमानां यदृच्छया ।
दत्तरक्षाप्रतिसरामन्वालम्भितशोभिताम् ॥ ३॥

ऊर्मीतरङ्गैर्जाह्नव्यास् समासीनामुपान्तिकम् ।
[1]विवर्तमानां बहुशः पुनः पुनरितस्ततः ॥ ४॥

ततस्सा वायुना राजन् स्रोतसा च बलीयसा ।
उपानीतो यतस्सूतस् सभार्यो जलमाश्रितः ॥ ५॥

स तां कौतूहलात् प्राप्तां ग्राहयामास भामिनी ।

1. क—नासीदमर्धम्

ततो निवेदयामास सूतस्याधिरथस्य वै ॥ ६॥
स तामुद्धृत्य मञ्जूषाम् उत्सार्य जलमन्तिकात् ।
यत्नैरुद्घाटयामास सोऽपश्यत् तत्र बालकम् ॥ ७॥
तरुणादित्यसङ्काशं हेमवर्मधरं तथा ।
मृष्टकुण्डलयुक्तेन वदनेन विराजितम् ॥ ८॥
परिम्लानमुखं बालं रुदन्तं क्षुधितं भृशम् ।
स तु तं परया लक्ष्म्या दृष्ट्वा युक्तमथात्मजम् ॥ ९॥
स सूतो भार्यया सार्धं विस्मयोत्फुल्ललोचनः ।
अङ्कमारोप्य तं पुत्रं भार्यां वचनमब्रवीत् ॥ १०॥

सूतः—

इदमत्यद्भुतं भीरु यतो जातोऽस्मि भामिनि ।
दृष्टवान् देवगर्भोऽयं मन्येऽस्माकमुपागतः ॥ ११॥
अनपत्यस्य पुत्रोऽयं देवैर्दत्तो ध्रुवं मम ॥ १२

वैशम्पायनः—

इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते ।
प्रतिजग्राह सा चापि विधिवद्देवरूपिणम् ॥ १२
पुत्रं कमलपत्राक्षं देवगर्भं श्रिया वृतम् ॥ १३॥
स्तन्यं समस्रवच्चास्य दैवादित्यथ निश्चयः ।
पुपोष चैनं विधिवद् ववृधे स च वीर्यवान् ॥ १४॥

ततः प्रभृति चाप्यन्ये प्राभवन्नौरसास्सुताः ॥ १५
नामकर्म च चक्रुस्ते कुण्डले तस्य दृश्यते ।
कर्ण इत्येव तं बालं दृष्ट्वा कर्णे सकुण्डलम् ॥ १६
वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम् ।
नामाऽस्य वसुषेणेति ततश्चक्रुर्द्विजातयः ॥ १७
एवं स सूतपुत्रत्वं जगामामितविक्रमः ।
[1]वसुषेण इति ख्यातो वृष इत्येव च प्रभुः ॥ १८
स ज्येष्ठपुत्रस्सूतस्य ववृधेऽङ्गेषु वीर्यवान् ।
[2]चारेण विदितश्चासीत् पृथया दिव्यधृक् ततः ॥ १९
सूतस्त्वधिरथः पुत्रं विवृद्धं समये ततः ।
दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम् ॥ २०
तत्रैव सद्नं चक्रे द्रोणस्येष्वस्त्रकर्मणि ।
सख्यं दुर्योधनेनैवम् अगच्छत् सह वीर्यवान् ॥ २१
द्रोणात् कृपाच्च रामाच्च सोऽस्त्रग्रामं चतुर्विधम् ।
लब्ध्वा लोकेऽभवत् ख्यातः परमेष्वासतां गतः ॥ २२
सन्धाय धार्तराष्ट्रेण पार्थानां विप्रिये स्थितः ।
योद्धुमाशंसते नित्यं अर्जुनेन महात्मना ॥ २३
अर्जुनस्य च कर्णेन यतो दृष्टो बभूव सः ।

---

1. ख—इदमर्धं नास्ति　2. क—अर्धपञ्चकं नास्ति

तं तु कुण्डलिनं दृष्ट्वा वर्मणा च समन्वितम् ॥ २४
अवध्यं समरे मत्वा पर्यतप्यद्युधिष्ठिरः ॥ २४॥
यदा तु कर्णो राजेन्द्र भानुमन्तं दिवाकरम् ।
उपतिष्ठति मध्याह्ने प्राञ्जलिस्सलिलोत्थितः ॥ २५॥
तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतवः ॥ २६
नादेयं ह्यस्य तत्काले किञ्चिदासीद् द्विजातिषु ॥ २६॥
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः ।
स्वागतं चेति राधेयस् तमिदं प्रत्यभाषत ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुष्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥
॥ ४३ ॥ कुण्डलाहरणपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥

इन्द्रेण ब्राह्मणवेषधारणेन कर्णं प्रति कवचकुण्डलयाचनम् ॥ १ ॥ तस्येन्द्रत्वं जानता कर्णेन तस्माच्छक्तिग्रहणपूर्वकं तस्मै कवचकुण्डलदानम् ॥ २ ॥

---

वैशम्पायनः—

देवराजमनुप्राप्तं ब्राह्मणच्छद्मनावृषा ।
दृष्ट्वा स्वागतमित्याह [1]स बुबोधास्य मानसम् ॥ १

1. घ—("स बुबोधास्येत्ये"कः पादः "हिरण्यकण्ठीरि"त्यादि अर्धत्रयं च घ कोशे न)

हिरण्यकण्ठ्यः प्रमदा ग्रामान् वा बहुशः पशून् ।
किं ददानीति तं विप्रम् उवाचाधिरथिस्ततः ॥ २

ब्राह्मणः—
हिरण्यमुख्याः प्रमदा यदन्यच्चापि तद्धनम् ।
नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ॥ ३
यदेतत् सहजं वर्म कुण्डले च तवानघ ।
एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ ४
एतदिच्छाम्यहं भिक्षां त्वया दत्तां नरोत्तम ।
स एष सर्वलाभानां लाभः परमको मतः ॥ ५

कर्णः—
अवनिं प्रमदा गावो निर्वापं बहुवार्षिकम् ।
तत् ते विप्र प्रदास्यामि न तु वर्म न कुण्डले ॥ ६

वैशम्पायनः—
एवं बहुविधैर्वाक्यैर् वार्यमाणस्स तु द्विजः ।
[1]कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ॥ ७
सोऽर्चितश्च यथान्यायं पूजितश्च यथाविधि ।
नैवान्यं स द्विजश्रेष्ठः कारयामास वै तदा ॥ ८
यदा नान्यं प्रवृणुते वरं स द्विजसत्तमः ।
विनाऽस्य सहजं वर्म कुण्डले च विशां पते ॥ ९

1. क—अर्धद्वयं नास्ति

तदैनमब्रवीत् कर्णस् सहजं कवचं हि मे ।
[1]सहजं वर्म मे विप्र कुण्डले चामृतोद्भवे ॥ १०
तेनावध्योऽस्मि लोकानां ततो नैतद्ददाम्यहम् ॥ १०॥
विशालं पृथिवीराज्यं क्षेमं निहतकण्टकम् ।
मत्तः प्रतिगृह्णाण त्वं साधु ब्राह्मणपुङ्गव ॥ ११॥
कुण्डलाभ्यां विमुक्तोऽहं वर्मणा सहजेन च ।
दमनीयो भविष्यामि शत्रूणां द्विजसत्तम ॥ १२॥
यथान्यायं वरं वव्रे भगवान् पाकशासनः ।
ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः ॥ १३॥

कर्णः—

विदितो देवदेवेश प्रागेवासि मम प्रभो ।
न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् ॥ १४॥
त्वं हि देवेश्वरस्साक्षात् त्वया देयो वरो मम ।
अन्येषां चापि भूतानाम् ईश्वरो ह्यसि भूतकृत् ॥ १५॥
यदि दास्यामि ते देव कुण्डले कवचं तथा ।
वध्यतामुपयास्यामि त्वं च शक्रावहास्यताम् ॥ १६॥
तस्माद्विनिमयं कृत्वा कुण्डले वर्म चोत्तमम् ।

1. क-ख—नास्तीदमर्धम्

हरस्व शक्र कामं मे न वृथामहमन्यथा ॥ १७॥

शक्रः—

विदितोऽहं [1]रवेः पूर्वम् आयाचैव तवान्तिकम् ।
तेन ते सर्वमाख्यातं ममैतन्नात्र संशयः ॥ १८॥

काममस्तु तथा कामं तव कर्ण यथेच्छसि ।
[2]वर्जयित्वा तु मे वज्रं प्रवृणीष्व यथेच्छसि ॥ १९॥

वैशम्पायनः—

ततस्तु कर्णस्संहृष्टः उपसङ्क्रम्य वासवम् ।
अमोघां शक्तिमभ्येत्य वव्रे सम्पूर्णमानसः ॥ २०॥

कर्णः—

वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव ।
[3]अमोघां शत्रुशमनीं तर्जनीं पृतनामुखे ॥ २१॥

वैशम्पायनः—

ततस्सञ्चिन्त्य मनसा शक्तिदाने तु वासवः ।
शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ॥ २२॥

इन्द्रः—

कुण्डले मे प्रयच्छाद्य वर्म चैव शरीरजम् ।
गृहाण शक्तिं कर्ण त्वम् अनेन समयेन च ॥ २३॥

अमोघा शतशश्शक्तिश् शत्रून् मम करच्युता ।
पुनश्च पाणिमभ्येति दैत्यान् मम विनिघ्नतः ॥ २४॥

---

1. ख—रविः पूर्वमायचैव 2. अ-घ—नास्तीदमर्धम्
3. ख—इदमर्धं नास्ति

सेयं तव करं प्राप्य हत्वैकं रिपुमूर्जितम् ।
गर्जन्तं प्रतपन्तं च मामेवैष्यति सूतज ॥ २५॥

कर्णः—

एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ।
गर्जन्तं प्रतपन्तं च यतो मम भयं भवेत् ॥ २६॥

शक्रः—

एकं हनिष्यसि रिपुं गर्जन्तं तं महामृधे ।
त्वं तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ २७॥

यमाहुर्वेदविदुषो गोविन्दमजितं हरिम् ।
नारायणमचिन्त्यं हि तेन कृष्णेन रक्ष्यते ॥ २८॥

कर्णः—

एवमेतद्यथाऽऽत्थ त्वं दानवानां निषूदन ।
वधिष्यामि रणे शत्रुं यो मे स्याता पुरस्सरः ॥ २९॥

एवमप्यस्तु भगवन्नेकवीरवधो मम ।
अमोघयाऽनया शत्रुम् एकं हन्यां प्रतापिनम् ॥ ३०॥

उत्कृत्य तु प्रदास्यामि कुण्डले कवचं च ते ।
निकृत्तेषु च गात्रेषु न मे बीभत्सता भवेत् ॥ ३१॥

इन्द्रः—

न ते बीभत्सता कर्ण भविष्यति कथञ्चन ।
व्रणश्चापि न गात्रेषु यस्त्वं नानृतमिच्छसि ॥ ३२॥

यादृशस्ते पितुर्वर्णस् तेजश्च वदतां वर ।
तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ॥ ३३॥

विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ।
प्रमत्तो मोक्ष्यसे चेत् त्वं त्वय्येवैषा पतिष्यति ॥ ३४॥

कर्णः—

संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ।
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ॥ ३५॥

वैशम्पायनः—

ततश्शक्तिं प्रज्वलितां प्रतिगृह्य विशां पते ।
[1]शस्त्रमादाय विपुलं सर्वगात्राण्यकृन्तत ॥ ३६॥

सर्वे देवा मानुषाश्चापि सर्वे
निकृन्तन्तं कर्णमात्मानमेव ।
दृष्ट्वा सर्वे सिंहसङ्घाश्च नेदुर्
न ह्यस्यासीद्दुःखजो वै विकारः ॥ ३७॥

ततो दिव्या दुन्दुभयः प्रणेदुः
पपातोच्चैः पुष्पवर्षं च खाच्च ।
दृष्ट्वा कर्णं शस्त्रसङ्कृत्तगात्रं
[2]मुहुर्मुहुर्विस्मयानं नृवीरम् ॥ ३८॥

---

1. घ—"शस्त्रमादाय विपुलमि"त्यर्धं "सर्वेदेवा" इति श्लोकश्च घकोशे न
2. अर्धत्रयं पादएकश्च न क कोशे

ततश्चित्रं कवचं दिव्यमङ्गात्
तथैवार्द्रं प्रददौ वासवाय ।
ततो निकृत्य प्रददात् कुण्डले ते
वैकर्तनः कर्मणा तेन कर्णः ॥ ३९॥

ततो देवो मुदितो वज्रपाणिर्
दृष्ट्वा कर्णं शस्त्रनिकृत्तगात्रम् ।
ततश्शक्रः कर्मणा वञ्चयित्वा
कर्णं लोके यशसा योजयित्वा ॥ ४०॥

कृतं कार्यं पाण्डवानां हि मेने
ततः पश्चाद्दिवमेवोत्पपात ॥ ४१

श्रुत्वा कर्णं मुदितं धार्तराष्ट्रा
दीनास्सर्वे भग्नदर्पा इवासन् ।
तां चावस्थां गमिते सूतपुत्रे
श्रुत्वा पार्था जहृषुः काननस्थाः ॥ ४२

जनमेजयः—

कस्था वीराः पाण्डवास्ते बभूवुः
कुतश्चैतच्छ्रुतवन्तः प्रियं ते ।
किं वाऽकार्षुर्द्वादशेऽब्दे व्यतीते
तन्मे सर्वं भगवान् व्याकरोतु ॥ ४३

वैशम्पायनः—

लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा
विप्रैस्सार्धं काम्यकमाश्रयन्तः ।
मार्कण्डेयाच्छ्रुतवन्तः पुराणं
देवर्षीणां चरितं विस्तरेण ॥ ४४

प्रत्याजग्मुस्सरथास्सानुयात्रास्
सर्वैस्सार्धं सूतपौरोगवैस्ते ।
ततो ययुर्द्वैतवने नृवीरा
निस्तीर्यैवं वनवासं समग्रम् ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

॥ ४३ ॥ कुण्डलाहरणपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये ४४ श्लोकाः]

[कुण्डलाहरणपर्व समाप्तम्]

## ॥ षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥

(आरणेयपर्व)

युधिष्ठिरादिभिः काम्यकवनात्पुनर्द्वैतवनं प्रत्यागमनम् ॥ १ ॥ तत्र केनचिन्मृगेण तत्संकर्षवशात्स्वविषाणलग्नेन ब्राह्मणस्यारणिना सह पलायनम् ॥ २ ॥ ब्राह्मणप्रार्थनया तदानयनाय पाण्डवैस्तदनुधावनम् ॥ ३ ॥ ततस्तैः सुदूरं स्वापकर्षणपूर्वकमन्तर्हिते तस्मिन् श्रान्त्या वटमूले समुपवेशनम् ॥ ४ ॥

---

जनमेजयः—

एवं हृतायां भार्यायां प्राप्य क्लेशमनुत्तमम् ।
प्रतिलभ्य पुनस्तां च किमकुर्वत पाण्डवाः ॥ १

वैशम्पायनः—

[1]एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ २

पुनर्द्वैतवनं रम्यम् आजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं मार्कण्डेयाश्रमं प्रति ॥ ३

अनुभुक्तफलाहारास् सर्व एव मिताशनाः ।
न्यवसन् पाण्डवास्तत्र कृष्णया सह भारत ॥ ४

वसन् द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च भ्रातरौ ॥ ५

---

1. ख—इदमर्धं नास्ति

ब्राह्मणार्थे पराक्रान्ता महात्मानो यतव्रताः ।
क्लेशमिच्छन्ति विपुलं सुखोदर्कं परन्तपाः ॥ ६
तेषां च वसतां तत्र पाण्डवानां महारथम् ।
अजातशत्रुमासीनं भ्रातृभिस्साहितं वने ॥ ७
आगम्य ब्राह्मणस्तूर्णं सन्तप्त इदमब्रवीत् ॥ ७॥

ब्राह्मणः—

अरणीसहितं भाण्डं समासक्तं वनस्पतौ ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ८॥
तमादाय गतो राजंस् त्वरमाणो महामृगः ।
आश्रमात् त्वरितश्शीघ्रं [1]प्लवमानो महाजवः ॥ ९॥
तस्य गत्वाऽऽश्रमं शीघ्रम् आसाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ १०॥

वैशम्पायनः—

ब्राह्मणस्य वचश्श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः ।
धनुरादाय कौरव्यः प्राद्रवद्भ्रातृभिस्सह ॥ ११॥
सन्नद्धास्त्वरितास्सर्वे प्राद्रवन्नरपुङ्गवाः ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन् मृगम् ॥ १२॥
कर्णिनालीकनाराचान् उत्सृजन्तो महारथाः ।

1. क—अयं पादोऽनन्तरश्च नस्तः

नाविध्यन् पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् ॥ १३॥

तेषां प्रयतमानानां नादृश्यत वने मृगः ।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ १४॥

शीतलच्छायमासाद्य न्यग्रोधं गहने वने ।
ते क्षुत्पिपासापरीताङ्गाः पाण्डवास्समुपाविशन् ॥ १५॥

तेषां समुपविष्टानां दुःखितो नकुलस्तदा ।
अब्रवीद्भ्रातरं ज्येष्ठम् अमर्षात् कुरुसत्तम ॥ १६॥

नकुलः—

नास्मिन् कुले जातु ममज्ज धर्मो
न चालस्यादर्थलोपो बभूव ।
[1]अनन्तरास्सर्वभूतेषु भूप
ते स्म प्राप्तास्संशयं केन राजन् ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥
॥ ४७ ॥ आरणेयपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये १७॥ श्लोकाः]

---

1. ख—अनुत्तराः;
क—धनाढ्यस्सर्वभूतेषु सम्प्राप्तस्संशयं केन राजन्;
ङ—न चान्तरं सर्वभूतेषु राजन्नद्य प्राप्ताः

## ॥ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥

पिपासितेषु पाण्डवेषु युधिष्ठिरनियोगाद्वृक्षाग्रमधिरूढेन नकुलेन नातिदूरे किञ्चित्सरोविलोकनम् ॥ १ ॥ पानीयानयनाय सरोगतेषु नकुलादिषु यक्षवचनावमत्या पानीयपानेन दीर्घनिद्राश्रवणादनागतेषु युधिष्ठिरेणापि तत्सरोगमनम् ॥ २ ॥

युधिष्ठिरः—

नापदामस्ति मर्यादा न निमित्तं च कारणम् ।
धर्मस्तु विभजेदत्र ह्युभयोः पुण्यपापयोः ॥ १

भीमः—

प्रातिकाम्येन यः कृष्णां सभायां प्रेष्यवत् तदा ।
न मया निहतस्तत्र तेन प्राप्तास्म संशयम् ॥ २

अर्जुनः—

[1]वाचस्तीक्ष्णास्थिभेदिन्यस् सूतपुत्रेण भाषिताः ।
अतिरूक्षा मया क्षान्तास् तेन प्राप्तास्म संशयम् ॥ ३

सहदेवः—

शकुनिस्त्वां यदाऽजैषीर् अक्षद्यूतेन भारत ।
न मया निहतस्तत्र तेन प्राप्तास्म संशयम् ॥ ४

वैशम्पायनः—

ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ॥ ४॥

1. अ-क-ख—अर्धचतुष्टयं नास्ति

युधिष्ठिरः—

आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ५

पानीयमन्तिके पश्य वृक्षान् वाप्युदकाश्रयान् ।
एते हि भ्रातरश्श्रान्तास् तव तात पिपासया ॥ ६

वैशम्पायनः—

नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
तत उत्थाय मतिमाञ् शीघ्रमारुह्य पादपम् ॥ ७
अब्रवीद्भ्रातरं ज्येष्ठम् अभिवीक्ष्य समन्ततः ॥ ७॥

नकुलः—

पश्यामि बहुलान् राजन् वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादस् स तत्रोदकसंश्रयः ॥ ८॥

वैशम्पायनः—

ततोऽब्रवीत् सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ॥ ९

युधिष्ठिरः—

गच्छ सौम्य ततश्शीघ्रं तूर्णं पानीयमानय ॥ ९॥

वैशम्पायनः—

नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ १०॥
स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचम् अन्तरिक्षात् स शुश्रुवे ॥ ११॥

यक्षः—

मा तात साहसं कार्षीर् मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा [1]यथाकालं ततः पिब हरस्व च ॥ १२॥

वैशम्पायनः—

अनादृत्य तु तद्वाक्यं नकुलस्सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १३॥

चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमनन्तरम् ॥ १४॥

युधिष्ठिरः—

भ्राता चिरायते तात सहदेव तवाग्रजः ।
तं चैवानय भद्रं ते पानीयं च त्वमानय ॥ १५॥

वैशम्पायनः—

सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्शाचेतनं भूमौ भ्रातरं निहतं तदा ॥ १६॥

भ्रातृशोकाभिसन्तप्तस् तृष्णया च प्रपीडितः ।
अभिदुद्राव पानीयं ततो वागभ्यभाषत ॥ १७॥

यक्षः—

मा तात साहसं कार्षीर् मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं ततः पिब हरस्व च ॥ १८॥

---

1. क-ख— तु माद्रेय

वैशम्पायनः—

अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १९॥

[1]अथाब्रवीत् सव्यसाचिं कुन्तीपुत्रो युधिष्ठिरः ॥ २०

युधिष्ठिरः—

भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्शन ।
तौ चैवानय भद्रं ते पानीयं च त्वमानय ॥ २१

वैशम्पायनः—

तथेत्युक्त्वा गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत् सरः प्रत्यपद्यत ॥ २२
यतः पुरुषशार्दूलौ पानीयहरणे गतौ ।
ददर्श च हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ २३
विगतासू नरव्याघ्रौ शयानौ वसुधातले ।
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहस्सुदुःखितः ॥ २४
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ २४॥
स तत्र किञ्चिन्नापश्यद् भूतमस्मिन् महावने ।
सव्यसाची पिपासार्तः पानीयं सोऽभ्यधावत ॥ २५॥
अभिधावंस्ततो वाचम् अन्तरिक्षात् प्रशुश्रुवे ॥ २६

1. क—चिरायमाणे माद्रेये कुन्तीपुत्रो युधिष्ठिरः । [अधिकः पाठः]

यक्षः—

यत् त्वमिच्छसि पानीयं नैतच्छक्यं नरर्षभ ॥ २६॥

कौन्तेय यदि वै प्रश्नान् मयोक्तान् प्रतिवक्ष्यसि ।
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥ २७॥

वैशम्पायनः—

वारितस्त्वब्रवीत् पार्थो दृश्यमानो निवारय ।
यावद्बाणैस्तु निर्भिन्नः पुनर्नैवं वदिष्यसि ॥ २८॥

एवमुक्त्वा ततः पार्थश् शरैर्मन्त्राभिमन्त्रितैः ।
ववर्ष तां दिशं कृत्स्नां शब्दवेधं विदर्शयन् ॥ २९॥

कर्णिनालीकनाराचान् उत्सृजन् पुरुषर्षभः ।
अनेकैरिषुसङ्घातैर् अन्तरिक्षे ववर्ष सः ॥ ३०॥

यक्षः—

किं विघातेन ते पार्थ प्रश्नानुक्त्वा पयः पिब ।
अनुक्त्वा तु पिबन् प्रश्नान् पीत्वा तु निपतिष्यसि ॥ ३१॥

वैशम्पायनः—

स च मोघानिषून् दृष्ट्वा तृष्णया च प्रपीडितः ।
अनुक्त्वैव च तान् प्रश्नान् पीत्वैव निपपात ह ॥ ३२॥

ततोऽब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः ॥ ३३

युधिष्ठिरः—

नकुलस्सहदेवश्च बीभत्सुश्चापराजितः ।

चिरंगतास्तोयहेतोर् न चागच्छन्ति भारत ॥ ३४

तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ३४॥

वैशम्पायनः—

भीमसेनस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
यत्र ते पुरुषव्याघ्रा भ्रातरश्च निपातिताः ॥ ३५॥

तान् दृष्ट्वा दुःखितो भीमस् तृष्णया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ३६॥

स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ।
पास्यामि तावत् पानीयम् इति [1]पार्थो वृकोदरः ॥ ३७॥

ततोऽभ्यधावत् पानीयं पिपासुः पुरुषर्षभः ॥ ३८

यक्षः—

मा तात साहसं कार्षीर् मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वाऽथ कौन्तेय ततः पिब हरस्व च ॥ ३९

वैशम्पायनः—

एवमुक्तस्ततो भीमो यक्षेणामिततेजसा ।
[2]अनुक्त्वैव तु तान् प्रश्नान् पीत्वैव निपपात ह ॥ ४०

ततो धर्मसुतो राजा प्रचिन्त्य पुरुषर्षभः ।

---

1. क—" इति पार्थो वृकोदरे "त्येकः पादः" " ततोऽभ्यधावत्पानीयमि' त्येकः पादश्च ककोशे न

2. क-ख-ग—अविज्ञयैव च

समुत्थाय महाबुद्धिर् दह्यमानेन चेतसा ॥ ४०
अपेतजननिर्घोषं प्रविवेश महावनम् ॥ ४०॥

रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ।
नीलभास्वरवर्णैश्च पादपैरुपशोभितम् ॥ ४१॥

भ्रमरैरुपगीतं च पक्षिभिश्च समन्ततः ।
मृदुशाड्वलसङ्कीर्णभूमिभागं मनोहरम् ॥ ४२॥

स गत्वा कानने तस्मिन् हेमजालपरिष्कृतम् ।
ददर्श तत् सरश्श्रीमान् विश्वकर्मकृतं यथा ॥ ४३॥

उपेतं नलिनीजालैस् सिन्दुवारैश्च शोभितम् ।
केतकैः करवीरैश्च वञ्जुलैश्चापि संघृतम् ॥ ४४॥

ततो धर्मसुतश्श्रीमान् भ्रातृदर्शनलालसः ।
श्रमार्तस्तदुपाक्रामत् सरो दृष्ट्वा सुविस्मितः ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

॥ ४२ ॥ आरणेयपपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

## ॥ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥

युधिष्ठिरेण सरस्तीरशायिनां भ्रातॄणामवलोकनेन सकरुणं परिदेवनपूर्वकं पानीयपानाय प्रयतनम् ॥ १ ॥ तथा यक्षेण स्वीयप्रश्नानामुत्तरदानमन्तरा जलपानस्य दुश्शकत्वकथनेन तत्प्रतिषेधने तेषां समुचितोत्तरदानम् ॥ २ ॥ ततस्तुष्टेन यक्षेण भीमादीनां चतुर्णामुज्जीवनम् ॥ ३ ॥

वैशम्पायनः—

स ददर्श हतान् भ्रातॄँल्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रवैश्रवणोपमान् ॥ १
विप्रकीर्णं धनुष्पाणिं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चोभौ निर्विचेष्टान् व्यसूंस्तदा ॥ २
स दीर्घमुष्णं निश्श्वस्य शोकबाष्पपरिप्लुतः ।
स्वबुद्ध्या चिन्तयामास वीराः केन निपातिताः ॥ ३
नैषां शस्त्रप्रहारोऽस्ति पदं नैवास्ति कस्यचित् ।
भूतं महदिदं मन्ये भ्रातरो येन मे हताः ॥ ४
एकान्ते चिन्तयिष्यामि पीत्वा वेत्स्यामि वाऽप्यपः ।
भ्रातॄणां व्यसनं घोरं सममेव महात्मनाम् ॥ ५
स्यात् तु दुर्योधनेनेदम् उपांशु [1]परिकल्पितम् ।
गान्धारराजेन कृतं असता धर्मबुद्धिना ॥ ६

1. क—विहितं कथम्

यस्य कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेद्वीरो दुष्कृतेरकृतात्मनः ॥ ७
अथवा पुरुषैर्गूढैः प्रयोगोऽयं दुरात्मनः ।
भवेदिति महाबाहुर् बहुधा समचिन्तयत् ॥ ८
आचार्यं किं नु वक्ष्यामि द्रोणं भीष्मं कृपं नु किम् ।
[1]विदुरं किं नु वक्ष्यामि बृहस्पतिसमं नये ॥ ९
अम्बां च किं नु वक्ष्यामि सर्वदा दुःखभागिनीम् ।
दृष्ट्वा मां भ्रातृभिर्हीनं पृच्छन्तीं पुत्रगृद्धिनीम् ॥ १०
यदा त्वं भ्रातृभिस्सर्वैश् शक्रतुल्यपराक्रमैः ।
सार्धं वनं गतो वीरैः कथमेकस्त्वमागतः ॥ ११
कस्य किं नु विषेणेदम् उदकं दूषितं यथा ।
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् ॥ १२
एकैकशो बलवत इमान् पुरुषसत्तमान् ।
कोऽन्यः प्रतिसमासेत कालान्तकयमान् विना ॥ १३
एतेन व्यवसायेन तत् तोयमवगाढवान् ।
पातुकामश्च तत् तोयम् अन्तरिक्षात् प्रशुश्रुवे ॥ १४

यक्षः—

[2]अहं बकश्शैवलमत्स्यभक्षो
नीता मया प्रेतवशं तवानुजाः ।

---

1. ख—इदमर्धं नास्ति　　2. अ-ब—अर्धद्वयं नास्ति

त्वं पञ्चमो भविता राजपुत्र
न चेत् प्रश्नान् पृच्छतो व्याकरोषि ॥ १५

मा तात साहसं कार्षीर् मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ॥ १६

युधिष्ठिरः—

रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् ।
पृच्छामि को भवान् देवो नैतच्छकुनिना कृतम् ॥ १७

हिमवान् पारियात्रश्च विन्ध्यो मलय एव च ।
चत्वारः पर्वताः केन पातिता भुवि तेजसा ॥ १८

त्वयाऽतीव महत् कर्म कृतं बलवतां वर ।
विनिघ्नता महेष्वासांश् चतुरोऽपि ममानुजान् ॥ १९

यान् न देवा न गन्धर्वा नासुराश्च न राक्षसाः ।
न समर्था महायुद्धे कृतं त्वत्तेजसाद्भुतम् ॥ २०

न ते जानामि यत् कार्यं नाभिजानामि काङ्क्षितम् ।
कौतूहलं महज्जातं साध्वसं च गतं मम ॥ २१

त्वयेत्युद्विग्नहृदयस् समुत्पन्नशिरोज्वरः ।
पृच्छामि तस्माद् भगवन् को भवानिह तिष्ठति ॥ २२

यक्षः—

यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ।

मयैते निहतास्सर्वे भ्रातरस्ते पिपासिताः ॥ २३

वैशम्पायनः—

ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षराम् ।
यक्षस्य ब्रुवतो राजन् नाकम्पत तदाऽऽस्थितः ॥ २४

विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रितम् ।
ज्वलनार्कप्रतीकाशम् अधृष्यं पर्वतोपमम् ॥ २५

सेतुमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः ।
[1]घोराकृतिं महाराजं तर्जयन्तं महाबलम् ॥ २६

[2]उवाच यक्षः कौन्तेयं भ्रातृशोकप्रपीडितम् ॥ २६॥

यक्षः—

इमे ते भ्रातरो राजन् वार्यमाणा मयाऽसकृत् ।
बलात् तोयं जिहीर्षन्तो मया वै सूदितास्तदा ॥ २७॥

न पेयमुदकं राजन् प्राणानिह परीप्सता ।
[3]मा पार्थ साहसं कार्षीर् मम पूर्वपरिग्रहः ॥ २८॥

प्रश्नानुक्त्वा तु राजेन्द्र ततः पिब हरस्व च ॥ २९

युधिष्ठिरः—

नैवाहं कामये यक्ष तव पूर्वपरिग्रहम्॥ २९॥

अन्ये नैतत् प्रशंसन्ति सन्तो हि पुरुषास्सदा ।

1. क—ततो गम्भीरया वाचा ; घ—घोराकृतिं महावाचा
2. क—नास्तीदमर्धम्　　3. ख—इदमर्धं नास्ति

यदात्मना स्वमात्मानं प्रशंसेत् पुरुषः प्रभो ॥ ३०॥
यथाप्रश्नं तु ते प्रश्नान् प्रतिवक्ष्यामि पृच्छ माम् ॥ ३१

यक्षः—

किंस्विदादित्यमुन्नयति के च [1]तस्याभितश्चराः ।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ ३२

युधिष्ठिरः—

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मस्तमस्तं नयति सत्ये च प्रतितिष्ठति ॥ ३३

यक्षः—

केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत् ।
केनाद्वितीयो भवति राजन् केन च बुद्धिमान् ॥ ३४

युधिष्ठिरः—

श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या सहायवान् भवति बुद्धिमान् वृद्धसेवया ॥ ३५

यक्षः—

किं ब्राह्मणानां देवत्वं कश्च धर्मस्सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ३६

युधिष्ठिरः—

स्वाध्याय एषां देवत्वं तप एषां सतामिव ।

---

1. क—तस्य हितं चराः;

मरणं मानुषो भावः परिवादोऽसतामिव ॥ ३७

यक्षः—

किं क्षत्रियाणां देवत्वं कश्च धर्मस्सतामिव ।
क एषां मानुषो भावः किमेषामसतामिव ॥ ३८

युधिष्ठिरः—

[1]इष्वस्त्रमेषां देवत्वं दानमेषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ३९

यक्षः—

किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैषां वृणुते यज्ञं कां यज्ञो नातिवर्तते ॥ ४०

युधिष्ठिरः—

[2]प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः ।
वागेका वृणुते यज्ञं तां यज्ञो नातिवर्तते ॥ ४१

यक्षः—

किंस्विदापततां श्रेष्ठं किंस्विन्निपततां वरम् ।
किंस्वित् प्रतिष्ठमानानां किंस्वित् प्रवदतां वरम् ॥ ४२

युधिष्ठिरः—

वर्षमापततां श्रेष्ठं बीजं निपततां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रवदतां वरः ॥ ४३

---

1. अ-क—अर्धद्वयं नास्ति　　2. ब—श्लोका

यक्षः—

इन्द्रियार्थाननुभवन् बुद्धिमाँल्लोकपूजितः ।
निन्दितस्सर्वभूतानाम् उच्छ्वसन् को न जीवति ॥ ४४

युधिष्ठिरः—

देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानाम् उच्छ्वसन्न स जीवति ॥ ४५

यक्षः—

किंस्विद्गुरुतरं भूमेः किंस्विदुच्चतरं च खात् ।
किंस्विच्छीघ्रतरं वायोः किंस्विद्बहुतरी नृणाम् ॥ ४६

युधिष्ठिरः—

माता गुरुतरा भूमेः पिता उच्चतरश्च खात् ।
मनश्शीघ्रतरं वायोश् चिन्ता बहुतरी नृणाम् ॥ ४७

यक्षः—

किंस्वित् सुप्तो न निमिषेत् किंस्विज्जातं न चेङ्गते ।
कस्यास्विद्धृदयं नास्ति का च वेगेन वर्धते ॥ ४८

युधिष्ठिरः—

मत्स्यस्सुप्तो न निमिषेत् अण्डं जातं न चेङ्गते ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ४९

यक्षः—

किंस्वित् प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।

आतुरस्य तु किं मित्रं किंस्विन्मित्रं मरिष्यतः ॥ ५०

युधिष्ठिरः—

विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ५७

यक्षः—

किंस्विदेको विचरति जातः को जायते पुनः ।
हिमस्य भेषजं किंस्वित् किंस्विदावपनं महत् ॥ ५८

युधिष्ठिरः—

सूर्य एको विचरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ ५९

यक्षः—

किंस्विदेकपदं धर्म्यं किंस्विदेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ ५४

युधिष्ठिरः—

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ५५

यक्षः—

किंस्विदात्मा मनुष्यस्य किंस्विद्दैवकृतस्सखा ।
अस्योपजीवनं किंस्वित् किंस्विदस्य परायणम् ॥ ५६

युधिष्ठिरः—

पुत्र आत्मा मनुष्यस्य भार्या दैवकृतस्सखा ।

उपजीवनं तु पर्जन्यो दानमस्य परायणम् ॥ ५७

यक्षः—

धन्यानामुत्तमं किंस्विद् धनानां किंस्विदुत्तमम् ।
लाभानामुत्तमं किंस्वित् किं सुखानां तथोत्तमम् ॥ ५८

युधिष्ठिरः—

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेष्ठमारोग्यं सुखानां तुष्टिरुत्तमा ॥ ५९

यक्षः—

किंस्विद्धर्मात् परं लोके कश्च धर्मस्सदाफलः ।
किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्यते ॥ ६०

युधिष्ठिरः—

आनृशंस्यं परो धर्मस् त्रेताधर्मस्सदाफलः ।
मनो यम्य न शोचन्ति सन्धिस्सद्भिर्नजीर्यते ॥ ६१

यक्षः—

किं नु हित्वा प्रियो भवति किंनु हित्वा न शोचति ।
किं नु हित्वाऽर्थवान् भवति किंनु हित्वा सुखी भवेत् ॥ ६२

युधिष्ठिरः—

मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वाऽर्थवान् भवति लोभं हित्वा सुखी भवेत् ॥ ६३

यक्षः—

[1]किमर्थं ब्राह्मणे दानं किमर्थं नटनर्तके ।
किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ॥ ६४

युधिष्ठिरः—

धर्मार्थं ब्राह्मणे दानं यशोऽर्थं नटनर्तके ।
सङ्ग्रामार्थं च भृत्येषु भयार्थं चैव राजसु ॥ ६५

यक्षः—

केन स्विदावृतो लोकः केन स्विन्न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ६६

युधिष्ठिरः—

अज्ञानेनावृतो लोकस् तमसा न प्रकाशते ।
लोभात् त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति ॥ ६७

यक्षः—

कथं मृतस्स्यात् पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं च स्यात् कथं यज्ञो मृतो भवेत् ॥ ६८

युधिष्ठिरः—

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रिये श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ६९

यक्षः—

का दिक्किमुदकं पार्थ किमन्नं किं च वै विषम् ।

1. क—अर्धाष्टकं नास्ति

श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ॥ ७०

युधिष्ठिरः—

सन्तो दिग्जलमाकाशं गौरन्नं ब्राह्मणं विषम् ।
श्राद्धस्य ब्राह्मणः कालः किं वा त्वं यक्ष मन्यसे ॥ ७१

यक्षः—

व्याख्याता मे त्वया प्रश्ना यथातत्वं परंतप ।
पुरुषं त्विदानीं व्याख्याहि यश्च सर्वधनीश्वरः ॥ ७२

युधिष्ठिरः—

दिवं स्पृशति भूमिं च शब्दः पुण्येन कर्मणा ।
यावत् स शब्दो भवति तावत् पुरुष उच्यते ॥ ७३

तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।
[1]अतीतानागते चोभे स वै पुरुष उच्यते[2] ॥ ७४

भूतभव्यभविष्येषु निस्स्पृहश्शान्तमानसः ।
सुप्रसन्नस्सदा योगी स वै सर्वधनीश्वरः ॥ ७५

यक्षः—

[3]व्याख्यातः पुरुषो राजन् यश्च सर्वधनीश्वरः ।
तस्मात् तवैको भ्रातॄणां यमिच्छसि स जीवतु ॥ ७६

---

1. क-ख-ब—नास्तीदमर्धम्
2. क-ख-ब—समत्वं यस्य सर्वेषु स वै पुरुष उच्यते। [अधिकः पाठः]
3. क—नास्तीदमर्धम्

युधिष्ठिरः—

श्यामो य एष रक्ताक्षस् सालस्कन्ध इवोद्गतः ।
व्यूढोरस्को महाबाहुर् नकुलो यक्ष जीवतु ॥ ७७

यक्षः—

प्रियस्ते भीमसेनोऽयम् अर्जुनश्च परायणम् ।
त्वं कस्मान्नकुलं राजन् सापत्नं जीवमिच्छसि ॥ ७८

[1]यस्य नागसहस्रेण दशसङ्ख्येन वै बलम् ।
तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि ॥ ७९

[2]तथैव मनुजाः प्राहुर् भीमसेनं प्रियं तव ।
अथैकेनानुभावेन सापत्नं जीवमिच्छसि ॥ ८०

यस्य बाहुबलं सर्वे पाण्डवास्समुपाश्रिताः ।
तमर्जुनं कथं त्यक्त्वा नकुलं जीवमिच्छसि ॥ ८१

युधिष्ठिरः—

कुन्ती चैव तु माद्री च पाण्डोर्भार्ये उभे अपि ।
माद्र्यास्तु नकुलो जीवेत् कुन्त्या जीवामि चाप्यहम् ॥ ८२

[3]आनृशंस्यं परं धर्मात् परमार्थं च मे प्रियम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ ८३

[4]धर्मशीलस्सदाचार इति मां मानवा विदुः ।

---

1. अ-ब—अर्धद्वयं नास्ति
2. क—अर्धचतुष्टयं नास्ति
3. ख—इदमर्धद्वयं नास्ति
4. क—अर्धद्वयं नास्ति

स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु ॥ ८४
[1]यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
[2]मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ ८५

यक्षः—

यस्मात् ते पार्थ धर्माच्च आनृशंस्यं परं मतम् ।
तस्मात् ते भ्रातरस्सर्वे जीवन्तु भरतर्षभ ॥ ८६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
॥ ४४ ॥ आरणेयपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ८६ श्लोकाः]

## ॥ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥



यक्षेण युधिष्ठिरं प्रति स्वस्वरूपप्रकाशनपूर्वकमरणिहरणादेः शीलशोधनाय स्वकृतत्वकथनेन तदभिमतप्रदानम् ॥

वैशम्पायनः—

ततस्ते यक्षवचनाद् [1]उदतिष्ठन्त पाण्डवाः ।
क्षुत्पिपासे च सर्वेषां तत्क्षणादेव हन्यते ॥ १

युधिष्ठिरः—

सरस्येकेन पादेन तिष्ठंस्त्वामपराजितम् ।

1. क—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति
3. क—मुत्तिष्ठन्तिस्म पाण्डवाः
क्षुत्पिपासाकुलास्सर्वे क्षणे तस्मिन्नयुञ्जामम् ।

पृच्छामि को भवान् देवो न मे यक्षो मतो भवान् ॥　　२

अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ।
मम हि भ्रातर इमे सहस्रशतयोधिनः ॥　　३
न ते योधान् प्रपश्यामि येन स्युर्विनिपातिताः ॥　　३॥
सुखं प्रति प्रबुद्धानाम् इन्द्रियाण्युपलक्षये ।
स भवान् सुहृदोऽस्माकम् अथवा नः पिता भवान् ॥　　४॥

यक्षः—

अहं ते जनकस्तात धर्मो मृदुपराक्रम ।
त्वां दिदृक्षुरनुप्राप्तस् तद्विद्धि भरतर्षभ ॥　　५॥
यशस्सत्यं दमश्शौचम् आर्जवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यम् इत्येतास्तनवो मम ॥　　६॥
अहिंसा संयमः क्षान्तिस् तपश्शौचममत्सरः ।
दारानेतान् हि मे विद्धि प्रियो ह्यसि सुतो मम ॥　　७॥
दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता ।
द्वे पूर्वे मध्यमे वोभे द्वे चान्ये साम्परायिके ॥　　८॥
अहं प्रीतोऽस्मि भद्रं ते जिज्ञासुस्त्वामिहागतः ।
[1]आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ ॥　　९॥
वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ ।
ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ॥　　१०॥

---

1. क—अर्धचतुष्टयं नास्ति

युधिष्ठिरः—

अरणी तु हृता यस्य मृगेण वदतां वर ।

यस्याग्नयो न लुप्येरन् प्रथमोऽस्तु वरो मम ॥ ११॥

धर्मः—

[1]आरणेयमिदं तस्य ब्राह्मणस्य हृतं मया ।

मृगरूपेण कौन्तेय जिज्ञासार्थं तवानघ ॥ १२॥

वैशम्पायनः—

ददामीत्येव भगवान् उत्तरं प्रत्यप्रद्यत ।

अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ १३॥

युधिष्ठिरः—

वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।

तत्र ते न विजानीयुर् वसतो मनुजाः क्वचित् ॥ १४॥

वैशम्पायनः—

ददामीत्येव भगवान् उत्तरं प्रत्यपद्यत ।

भूयश्चापि हि कौन्तेयम् अवदत् सत्यविक्रमम् ॥ १५॥

यक्षः—

यद्यपि स्वेन रूपेण चरिष्यसि महीमिमाम् ।

न च विज्ञास्यते कश्चित् त्रिषु लोकेषु भारत ॥ १६॥

वर्षं त्रयोदशं चैव मत्प्रसादात् कुरूद्वहाः ।

विराटनगरे गूढा अज्ञाता विचरिष्यथ ॥ १७॥

यद्वा सङ्कल्पितं रूपं मनसा यस्य चैव हि ।

---

1. क—अरणीयमियं तस्य; ख—इदमर्धद्वयं नास्ति

तादृशं तादृशं रूपं छन्नं वै धारयिष्यथ ॥ १८॥
अरणीसहितं भाण्डं ब्राह्मणाय प्रयच्छथ ।
जिज्ञासार्थं मया ह्येतद् आहृतं मृगरूपिणा ॥ १९॥
त्वदीयं च गृहाण त्वं वरं मत्प्रभवं महत् ।
त्वं हि मत्प्रभवो राजन् विदुरश्च ममांशभाक् ॥ २०॥

युधिष्ठिरः—

देवदेवो मया दृष्टो भवान् साक्षात् सनातनः ।
यं यं वरं ददौ हृष्टस् तं ग्रहीष्याम्यहं पितुः ॥ २१॥
जयेयं लोभमोहौ च क्रोधं चैव सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं भवेत् ॥ २२॥

यमः—

उपपन्नो गुणैस्सर्वैस् स्वभावेनैव पाण्डव ।
भवान् धर्मपरश्चैको यथोक्तं ते भविष्यति ॥ २३॥

वैशम्पायनः—

इत्युक्त्वान्तर्दधे धर्मो भगवाँल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः ॥ २४॥
अभ्येत्य चाश्रमं वीरास् सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ २५॥

इदं समुत्थानसमागतं महत्
पितुश्च पुत्रस्य च पुण्यकीर्तनम् ।

पठन्नरस्स्याद्विजितेन्द्रियो वशी
सपुत्रपौत्रश्शतवर्षभाग् भवेत् ॥ २६॥

न चाप्यधर्मे न सुहृद्विभेदने
परस्वहारे परदारदर्शने ।
अकार्यभावे न रमेन्मनस्सदा
नृणां वराख्यानवरं च शृण्वताम् ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥
॥ ४४ ॥ आरणेयपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

आरणेयपर्व समाप्तम् ॥ समाप्तमिदमारण्यपर्व ॥

॥ अस्मिन् आरण्यपर्वणि ११०५६ श्लोकाः ८२ वाक्यानि ॥

अतःपरं विराटपर्व भविष्यति । तस्यायमाद्यश्श्लोकः ॥

जनमेजयः—

कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ १

॥ श्रीरस्तु ॥

# महाभारतस्य आरण्यपर्वस्थानां विषयाणाम्

# अक्षरमातृकाक्रमेण सूचनम्




| | अध्यायः-पुटम् |
|---|---|
| अकृतव्रणेन युधिष्ठिरं प्रति परशुरामचरितवर्णनम् | ९१—५८५ |
| अगस्त्येन पुत्रकामाय विदर्भराजाय कन्यारत्नप्रदानम् | ७८—५०३ |
| अगस्त्येन विदर्भराजं प्रति परिणयाय लोपामुद्रायाचनम् | ७८—५०४ |
| अगस्त्येन परित्यक्तवसनाभरणया परिगृहीतवल्कलादिकया च लोपमुद्रया सह गङ्गाद्वारे तपश्चरणम् | ७८—५०६ |
| अगस्त्येन धनलिप्सया श्रुतर्वाणं प्रति गमनम् | ७९—५०८ |
| अगस्त्येन श्रुतर्वादिभिस्सह धनयाचनायेल्वलं प्रति गमनम् | ७९—५१० |
| अगस्त्येन मेषीकृतवातापेर्जीर्णीकरणम् | ८०—५१२ |
| अगस्त्याश्रमं प्रतील्वलेन विवाजि सुवाजियुक्तरथेन वसूनां प्रापणम् | ८०—५१४ |
| अगस्त्येन स्वहननोद्यतस्येल्वलस्य भस्मीकरणम् | ८०—५१४ |
| अगस्त्योपात्तधनसन्तुष्टया लोपमुद्रयाऽपत्योत्पादनायाऽगस्त्यं प्रति याचनम् | ८०—५१४ |
| अगस्त्येन स्वपुत्रस्य 'इध्मवाह' इति नामकरणम् | ८०—५१५ |
| अगस्त्यप्रभाववर्णनम् | ८१—५१६ |
| अगस्त्येन विन्ध्यनिरोधप्रकारः | ८२—५३२ |
| अगस्त्येन समुद्रजले पीते देवैः दैत्यहननम् | ८३—५३५ |
| अग्न्युत्पादितधिष्ण्यमातॄणां नामानि | १८२-१११६ |
| अग्निवेष्टितेन कर्कोटकेन नागेन नलं प्रत्यात्मरक्षणप्रार्थना | ५४—३२१ |
| अग्निवंशजानां विस्तरेण नामनिर्वचनम् | १८१-११०८ |
| अग्निवंश्यानां स्वरूपस्वभावादिकथनम् | १८१-११११ |

| | अध्यायः–पुटम् |
|---|---|
| अग्निना मत्स्यानां सर्वभक्ष्यत्वशापः | १८२–१११४ |
| अग्नीनामुत्पत्यादि वर्णनम् | १७९–११०२ |
| अग्निरूपिणीनां कन्यानां स्कन्देन वरप्रदानम् | १८५–११३७ |
| अङ्गदेन रावणं प्रति श्रीरामोक्तिकथनम् | २३९–१३८३ |
| अङ्गिरसोपाख्यानम् | १७९–१०९८ |
| अजगराद्विमुक्तेन भीमेन सह युधिष्ठिरेण स्वाश्रमगमनम् | १५२—९१७ |
| अजगरेण दमयन्त्याः ग्रहणम् | ५१—३०५ |
| अजगरेण स्वस्याजगरत्वप्राप्तिकारणाभिधानम् | १५०—९०० |
| अजगरेणागस्त्योक्तशापविमोक्षप्रकारकथनम् | १५०—९०२ |
| अजगरेण युधिष्ठिरं प्रति भीमविमोक्षाय स्वप्रश्नोत्तरदान-याचनपूर्वं प्रश्नोपक्रमः युधिष्ठिरेणोत्तरकथनं च | १५१—९०८ |
| अजगरेण "युधिष्ठिरात् तव शापमोक्षो भविष्यति" इत्यग-स्त्योक्तिनिरूपणम् | १५२—९१६ |
| अद्भुताख्याग्निचरितम् | १८२–१११६ |
| अधिरथेन मञ्जूषास्थितस्य गर्भस्य पुत्रत्वेन पोषणम् | २६४–१४९८ |
| अध्यात्मकथनम् | १७६–१०७९ |
| अथर्वणः धात्वादिवस्तूत्पत्तिः | १८२–१११५ |
| अम्भसः उत्तीर्णेषुच्यवनाश्विषु त्रिषु रूपादिसम्पन्नेषु सुकन्यया च्यवनस्यैव पतित्वेन वरणम् | ९९—६२५ |
| अर्जुनप्रस्थानसमये ज्यैष्ठ्यकानिष्ठ्यक्रमेणपाण्डवाना-मभिवाद्याभिवादकत्व प्रतिपत्तिः | ३३—१९२ |
| अर्जुनस्य दुश्चरतपोभीतैर्महर्षिभिः शङ्करस्य शरणीकरणम् | ३४—२०३ |
| अर्जुने सुखेनेन्द्रभवने वसति सति तत्र लोमशमहर्षेरागमनम् | ४०—२४२ |
| अर्जुनस्येन्द्रार्धासनोपवेशं शङ्कितं लोमशं प्रति अर्जुनप्रभा-वस्येन्द्रेण कथनम् | ४०—२४३ |
| अर्जुनस्य पाशुपतास्त्रादिलाभं विदितवता धृतराष्ट्रेण सञ्जयं प्रति अर्जुनपराक्रमवर्णनम् | ४१—२४६ |
| अर्जुनविरहेण पाण्डवैः द्रौपद्या साकं परिशोचनम् | ४४—२६० |

| | अध्यायः—पृष्ठम् |
|---|---|
| अर्जुनविरहितैः द्रौपद्यादिभिः अर्जुनगुणादिस्मरणपूर्वकं निर्वेदवचनम् | ६४—२९४ |
| अर्जुनेन श्रीकृष्णाय दुर्योधनादिषु क्रुद्धाय तद्गुणकथनेन सान्त्ववचनपूर्वकं स्वस्य तदात्मत्वप्रतिपादनम् | ११—६२ |
| अर्जुनेन वासाय द्वैतवनदर्शनम् | २०—१२० |
| अर्जुनेन हिमवद्गिरौ तपश्चरणम् | ३४—२०३ |
| अर्जुनेन भगवति शङ्करे स्वापराधक्षमापणम् | ३५—२१२ |
| अर्जुनेन श्रीमहेश्वरात् पाशुपतास्त्रयाचनम् | ३५—२१३ |
| अर्जुनेन स्वस्य कृतकृत्यतया कृतार्थत्वचिन्तनम् | ३६—२१६ |
| अर्जुनेन यमवरुणकुबेराणां सन्दर्शनम् | ३६—२१७ |
| अर्जुनेन मन्दरशैलमामन्त्र्य रथारोहणम् | ३७—२२५ |
| अर्जुनेन स्वर्गलोकं गतेन देवगन्धर्वादिभ्यस्सपर्याग्रहणम् | ३८—२२८ |
| अर्जुनेन वृत्तस्य चरितस्य चित्रसेनद्वारेन्द्रं प्रति ज्ञापनम् | ३९—२४० |
| अर्जुनेन भगवन्तं प्रति स्वसारथ्यकरणयाचनम् | ४३—२५६ |
| अर्जुनेन विनाकृतैः पाण्डवैः काम्यकवनं विसृज्य द्रौपद्या सह स्थलान्तरं प्रति निर्गमननिर्धारणम् | ६४—२९३ |
| अर्जुनेन गन्धमादनमागतेन युधिष्ठिरादीनां हर्षोत्पादानम् | १३७—८३० |
| अर्जुनेन स्वस्य शक्रदत्तधनादीनां स्वप्रियायै द्रौपद्यै प्रतिपादनम् | १३७—८३१ |
| अर्जुनेन स्वेन सम्पादितास्त्रलाभप्रकारस्य सङ्ग्रहेण कथनम् | १३७—८३२ |
| अर्जुनेन नानादेवतादर्शनवर्णनम् | १४०—८४४ |
| अर्जुनेन नानादेवताभ्योऽस्त्रग्रहणवर्णनम् | १४०—८४५ |
| अर्जुनेन स्वर्लोकगमनसमये विचित्र नानादेशादिदर्शनकथनम् | १४०—८४८ |
| अर्जुनेन स्वस्मा इन्द्रेण प्रतिपादितास्त्रप्रकारनिरूपणम् | १४०—८५० |
| अर्जुनेन स्वस्मै शक्रेण प्रतिपादित किरीटकवचादिलाभवर्णनम् | १४०—८५२ |
| अर्जुनेन युयुत्सया निवातकवचपुरगमनम् | १४१—८५४ |
| अर्जुनेन स्वेन सह निवातकवचानां युद्धप्रकारवर्णनम् | १४२—८५७ |
| अर्जुनेन दिव्यास्त्रैर्मायानिरसनपूर्वकं दैत्यहननम् | १४३—८६० |
| अर्जुनेन हिरण्यपुरावलोकनम् | १४५—८६९ |

| | अध्यायः-पुटम् |
|---|---|
| अर्जुनेन हिरण्यपुरे पौलोमकालकेयानां हननोद्यमः | १४५—८७१ |
| अर्जुनेन मायाविनां कथञ्चिदपि अवध्यानां पौलोमकालकेयानां वधः | १४५—८७६ |
| अर्जुनेन युधिष्ठिरायास्त्रप्रदर्शनम् | १४७—८८२ |
| अर्जुनेन दिव्यास्त्रप्रदर्शनसमये जगतां क्षोभः | १४७—८८३ |
| अर्जुनेन गन्धर्वराजं प्रति स्वपराक्रमकथनम् | १९९-१२१२ |
| अर्जुनेन गन्धर्वान् प्रति दुर्योधनादिबन्धविमोचनकथनम् | २००-१२१४ |
| अर्जुनेन स्वोक्तिमनङ्गीकुर्वतो गन्धर्वान् प्रति बाणप्रयोगः | २००-१२१५ |
| अर्जुनेन मायिनं चित्रसेनं प्रति ताडनम् | २०१-१२१९ |
| अर्जुनायेन्द्रेण पुनस्तपश्चरणाभ्यनुज्ञानकथनम् | १४०—८४५ |
| अर्जुनेनेन्द्रसमागमः | ३६—२१८ |
| अर्जुनेनेन्द्रात् स्वस्य कवचकिरीटादि प्राप्तिकथनम् | १४६—८७९ |
| अर्जुनेनोत्तरदिग्गमनम् | ३३—१९७ |
| अर्जुनेनोर्वशीं प्रति स्वस्य तस्यां गुरुपत्नीत्वसम्भावनम् | ३९—२३८ |
| अविन्ध्याख्येनामात्येन रावणस्य सीतावधोद्यमाद्विनिवर्तनम् | २४४-१४०३ |
| अविन्ध्याख्यराक्षसेन श्रीरामसमीपं प्रति सीतायाः आनयनम् | २४६-१४०९ |
| अशरीरिण्या सगरं प्रति षष्टिसहस्रपुत्रसंरक्षणोपायकथनम् | ८४—५४१ |
| अशोकवने सीतावशीकरणाय राक्षसीभिस्तर्जनम् | २३५-१३५८ |
| अश्वपतिना सावित्र्याः सत्यवत एव दानाध्यवसायः | २४९-१४२९ |
| अश्वपतिना सावित्र्याः द्युमत्सेनं प्रति तत्पुत्राय दानकथनम् | २५०-१४६० |
| अश्विभ्यां सुकन्यायां सल्लापः | ९९—६२२ |
| अश्विभ्यां सुकन्यां प्रति च्यवनस्य रूपसम्पन्नयुवत्वकरणाभ्यनुज्ञानपूर्वकमन्यतरस्मिन् पतित्वयाचनकथनम् | ९९—६२४ |
| अश्विनोर्नियोगात् रूपार्थिनः च्यवनस्य जलप्रवेशः | ९९—६२५ |
| अक्षहृदयज्ञानबलात् कलेर्निस्सरणं कर्कोटकविषस्योद्गिरणं च | ५७—३६१ |
| अष्टावक्रेण ब्राह्मणेषु जलादुत्तीर्णेषु सत्सु स्वपितृमातुलाभ्यां सह स्वाश्रमगमनम् | १०९—६७५ |
| अष्टावक्रद्वारपालयोस्संवादः | १०७—६६३ |
| अष्टावक्रेण प्रश्नोत्तरकथनपूर्वकं राजानुमत्या सभाप्रवेशः | १०७—६६७ |
| अष्टावक्रेण वादे वन्दिनः पराजयः | १०८—६६९ |

अध्यायः-पृष्ठम्

आर्ष्टिषेणेन कैलासवर्णनम्  १३२—७९५
आर्ष्टिषेणेन युधिष्ठिरं प्रति मेरुमन्दरवर्णनम्  १३६—८२१
आर्ष्टिषेणेन युधिष्ठिरं प्रति सर्वगोचरकुशलप्रश्नः  १३२—७९४
आर्ष्टिषेणेन मेरौ सप्तर्षिदक्षादिप्रजापतिवर्णनम्  १३६—८२२
आर्ष्टिषेणेन प्रकृतेः परस्ताद्वर्तमानस्य श्रीवैकुण्ठस्य वर्णनम्  १३६—८२३
आर्ष्टिषेणेन चन्द्रसूर्यादिगतिनिरूपणम्  १३६—८२४
अंशुमता यज्ञीयाश्वगवेषणम्  ८४—५४८
इन्द्रप्रस्थं गतेन कृततपसा चार्जुनेनान्येन च तपस्विना
तत्रत्येन सह संवादः  ३३—१९७
इन्द्रस्कन्दयोः युद्धप्रकारः  १८५-११३५
इन्द्रसेनेन सान्त्वितयाऽपि धात्रेयिकया विलापः  २२२-१३००
इन्द्रसेनेन द्रौपद्या हरणचिन्तनम्  २२३-१३०१
इन्द्रसेनेन द्रौपदीगवेषणचोदनेन तद्गवेषणम्  २२३-१३०३
इन्द्रजिति माययान्तर्हिते तत्र श्रीरामगमनम्  २४३-१३९९
इन्द्रजिच्छरबन्धेन रामलक्ष्मणयोर्मोहाधिगमे विभीषणेन प्रज्ञा-
नास्त्रेण तदपनोदनम्  २४४-१४००
इन्द्रजितो लक्ष्मणेन वधः  २४४-१४०३
इन्द्रद्युम्नोपाख्यानकथनम्  १६५-१०१३
इन्द्रादिभिः वृत्रासुरवधाय ब्रह्माणं प्रति गमनम्  ८१—५१७
इन्द्रादिभिः दधीचाश्रमगमनम्  ८१—५१८
इन्द्रियनिग्रहानिग्रहाभ्यामेव सुखदुःखोत्पत्तिकथनम्  १७५-१०७६
इन्द्रेणाऽर्जुनं प्रति स्वर्गागमनाय चोदनम्  ३६—२२१
इन्द्रेणार्जुनस्य सबहुमानमर्धासनारोपणम्  ३८—२२९
इन्द्रेणार्जुने परमप्रेमप्रदर्शनम्  ३८—२३०
इन्द्रेणोर्वशीं प्रति अर्जुनकामपूरणाय चित्रसेनप्रेषणम्  ३९—२३१
इन्द्रेणार्जुनं प्रति शापस्य शुभोदर्कत्वकथनम्  ३९—२४०
इन्द्रेण लोमशं प्रति काम्यकवने युधिष्ठिरायार्जुनवृत्तान्त-
कथनप्रार्थनम्  ४०—२४५

| | अध्यायः-पृष्ठम् |
|---|---|
| इल्वलेनागस्त्याय मेषीकृतवातापिमांसपरिवेषणम् | ८०—५११ |
| इल्वलेनागस्त्यं प्रति स्वस्मात् ईप्सितयाचनकथनम् | ८०—५१२ |
| इन्द्रेण च्यवनस्य प्रसादोत्पादनम् | १००—६३० |
| इन्द्रेण गुरोर्मुखाद्वेदोपदेशमसहमानेन यवक्रीतेनेन्द्रं प्रति पुनः दुश्चरतपश्चरणम् | ११०—६८२ |
| इन्द्रेण युधिष्ठिरं प्रति स्वपुत्रप्रभावकीर्तनपूर्वकमाशीर्वचनम् | १३८—८३४ |
| इन्द्रेण स्वभवनं प्रत्यागमनाय नियम्यितेनार्जुनेन स्वर्लोकप्रस्थानकथनम् | १४०—८४७ |
| इन्द्रेणाद्भुतकर्माणमर्जुनं प्रति आलिङ्गनपूर्वकं श्लाघावचनम् | १४५—८७८ |
| इन्द्रचोदितेन नारदेन दिव्यास्त्रप्रदर्शनप्रतिषेधः | १४७—८८४ |
| इन्द्रेण मानशैले कस्याश्चित् कन्याया अवलोकनम् | १८३-१११९ |
| इन्द्रेण कन्यानिमित्तं ताडितेन केशिना पलायनं कन्यायाः कुलादिप्रश्नः कन्यया स्वस्याः दक्षपुत्रीत्वकथनं च | १८३-११२० |
| इन्द्रेण कन्याया भर्तृयाचनाय ब्रह्मलोकगमनम् | १८३-११२२ |
| इन्द्रेण श्रीरामाय निजरथप्रेषणम् | २८५-१४०५ |
| इन्द्रेण कर्णं प्रति कवचकुण्डलयाचनम् | २६५-१५०१ |
| इन्द्रेण शक्तिदानपूर्वकं कर्णात् कवचकुण्डलग्रहणम् | २६५-१५०५ |
| उदङ्केन कृता भगवतस्स्तुतिः | १६६-१०१९ |
| उदङ्काय भगवता वरदानम् | १६६-१०२० |
| उदङ्केन बृहदश्वं प्रति धुन्धुमारहननचोदना | १६६-१०२२ |
| ऊर्वश्यादिभिर्गीयागानपुरस्सरं नृत्यप्रदर्शनम् | ३८—२३१ |
| ऊर्वशीसमीपे चित्रसेनेनार्जुनप्रभावकथनम् | ३९—२३२ |
| ऊर्वश्याऽर्जुने स्वकीयकामप्रवेदनम् | ३९—२३३ |
| ऊर्वश्या अर्जुनभवनं प्रति प्रस्थानम् | ३९—२३४ |
| ऊर्वश्याः विलासादिवर्णनम् | ३९—२३५ |
| ऊर्वश्या जितमन्मथमर्जुनं ज्ञात्वा चित्रसेनोक्तिकथनम् | ३९—२३६ |
| ऊर्वश्या स्वकामालाभरुष्टयाऽर्जुनं प्रति षण्ढत्वशापप्रदानम् | ३९—२३९ |
| ऋतुपर्णेन नलस्याश्वाध्यक्षतायां नियमनम् | ५५—३३५ |

अध्यायः-पृष्ठम्
ऋतुपर्णेन बाहुकस्य हयज्ञतां वीक्ष्य तस्मिन् बहुधा विकल्पनम् ५७—३५५
ऋतुपर्णेन बाहुके नलत्वाध्यवसायः ५७—३५६
ऋतुपर्णेन बाहुकं प्रति पुञ्जीभूतवस्तुपरिसंख्याने स्वीय-
सामर्थ्यनिवेदनम् ५७—३५७
ऋतुपर्णेन भीमराजं प्रति स्वागमननिमित्तमप्रतिपाद्य
दर्शनमात्रप्रयोजनकथनम् ५७—३६६
ऋतुपर्णसमक्षं दूतीबाहुकयोः सम्भाषणम् ५७—३६८
ऋतुपर्णेन नलं प्रति स्वापराधक्षापणवचनम् ६२—३८३
ऋतुपर्णेन नलादश्वविद्याग्रहणपूर्वकं स्वपुरं प्रति प्रतिनिवर्तनम् ६२—३८३
ऋतुकाले समाहूतया लोपामुद्रया महार्हवसनाभरणानि
याचितेनागस्त्येन तत्साधनाय प्रस्थानम् ७८—५०७
ऋश्यशृङ्गचरितम् ८७—५६२
ऋश्यशृङ्गेन विभण्डकं प्रति वेश्याकुमार्यां मुनिकुमारत्वव्यप-
देशेन स्वस्य तदासक्तिकथनम् ८९—५७१
ऋचीकेन गाधिसुतायाः सत्यवत्याः परिणयनम् ९१—५८७
ऋत्विजा सोमकं प्रति बहुपुत्रोत्पत्त्युपायकथनम् १०२—६४१
ऋषिभिर्देवेन्द्रप्रशंसनम् १८६—११४०
ऋषिपत्न्यादिभिः स्कन्दं प्रति पुत्रभावप्रार्थनम् १८७—११४५
ऋतुस्नातया कुन्त्या मन्त्रपरीक्षणाय सूर्याह्वानम् २६१—१४८५
कन्यया लोकोत्तरपतिप्रार्थनम् १८३—११२१
कयाचिद्वेश्यया ऋश्यशृङ्गप्रलोभनम् ८८—५६६
कपिलेनांशुमन्तं प्रति वरप्रदानम् ८४—५४८
कयाचन पतिव्रतया कौशिकाय भिक्षादानाय विलम्बेन
स्वगृहान्निर्गमनम् १७०—१०४१
कर्कोटकनागेन नलं प्रति दंशनकारणकथनपूर्वकमृतुपर्णराज-
समीपप्रेषणम् ५४—३३३
कर्कोटकनागेन नलं प्रति वरप्रदानपूर्वकं वस्त्रयुग्मप्रदानम् ५४—३३४
कर्कोटकनागोक्त्या नलेन बाहुकसंज्ञाकथनपूर्वकमृतुपर्णी-
समीपोपसर्पणम् ५५—३३४

अध्यायः-पुटम्

कर्णशकुन्यादिभिः पाण्डवानां द्वैतवनप्रस्थापने घोषयात्रायाः उपायत्वकथनम् १९४-११९२

कर्णस्य नामकरणे निमित्तकथनम् २६४-१३९९

कर्णेन परशुरामादिभ्योऽस्त्रग्रहणपूर्वकं दुर्योधनेन सख्यकरणम् २६४-१३९९

कर्णेन दुर्योधनं प्रति पाण्डवानां द्वैतवनप्रस्थापनेन राज्यानुभवचोदना १९३-११८७

कर्णेन कुशलं पृष्टेन दुर्योधनेन सखेदवचनम् २०३-१२२४

कर्णेन प्रायोपवेशनान्निवर्तनाय सान्त्वोक्तिः २०६-१२३३

कर्णेन प्रायोपवेशने कृतनिश्चयं दुर्योधनं प्रति बहूनि सान्त्ववचनानि २०७-१२३४

कर्णेनेन्द्राय दानप्रतिज्ञानम् २५५-१४६७

कर्णेनेन्द्राय दानाभ्यनुज्ञानयाचनम् २५७-१४७२

कल्क्यवतारेण लोकमर्यादास्थापनम् १६३—९९६

कलिना स्वं प्रति क्रुद्धे शापदानोन्मुखे च नले सान्त्ववचनम् ५७—३६१

कलिद्वापराभ्यां नलस्य राज्याद्भ्रंशने समुद्यमः ४९—२८९

कलिना पुष्करं प्रति नलदेवनचोदनपूर्वकमशुचेर्नलस्यान्तः प्रवेशः ४९—२९०

कलियुगे ब्राह्मणादीनां वृत्तिविपर्ययः १६०—९६२

कलौ मानुषाणां गवादीनां च रीतिवर्णनम् १६०—९६४

कलौ धर्महानिकथनम् १६०—९६५

कलौ यथाकालं वृष्ट्यभावः आयुःक्षयश्च भवत इति वर्णनम् १६०—९६६

कलौ वर्णाश्रम वैपरीत्यवर्णनपूर्वकमायुरारोग्यादिह्रासवर्णनम् १६२—९८५

कलौ ब्राह्मणानां व्रतलोपवर्णनम् १६२—९८६

कलौ जगतः म्लेच्छप्रायतायाः पितृपुत्रयोरन्योन्यघातकतायाः साधूनां धनकलत्रादीनां बलाद्ध्रियमाणतायाश्च वर्णनम् १६२—९८७

कलौ भाविनः अनर्थस्य विशेषतः कथनम् १६२—९८८

काम्यकवने युधिष्ठिरस्य नारदेन समागमः ६४—३९७

| | अध्यायः-पुटम् |
|---|---|
| कालेयैस्त्रैलोक्यनाशोद्यमः | ८१—५२३ |
| कालेयैः मुनीनां भक्षणम् | ८१—५२४ |
| कालेयैः जगतः निरुत्साहीकरणम् | ८१—५२५ |
| कालेयभीतैर्देवैः भगवतश्शरणीकरणम् | ८१—५२६ |
| काश्यपेन भूमेः प्रसादनम् | ९०—५८३ |
| कार्तवीर्यार्जुनदायादैः जमदग्निहननम् | ९२—५९३ |
| कालोचितयोः कोपशान्त्योस्सुखहेतुत्ववर्णनम् | २४—१३९ |
| काश्यपोक्तक्षत्यनुवादः | २५—१४५ |
| काम्यकं प्रति लोमशस्य प्रस्थानम् | ४०—२४५ |
| काम्यकवने पाण्डवावलोकनाय व्यासागमनम् | २१४-१२६३ |
| काम्यके पाण्डवैः मृगयाविहारः | २१८-१२७९ |
| काम्यकवने युधिष्ठिरादिषु दिव्यकटाक्षप्रदानाय भगवता श्रीकृष्णेनागमनम् | १५४—९२१ |
| काश्यपादिभिस्तपश्चरणेनाग्न्युत्पत्तिकथनम् | १८०-११०५ |
| काश्यपादिभि र्देवानामुत्पत्तिकथनम् | १८०-११०६ |
| किर्मीरस्य युधिष्ठिरस्य च संवादः | १०—५३ |
| किर्मीरस्य युद्धप्रकारकथनम् | १०—५६ |
| किर्मीरवधेन पाण्डवानां द्रौपद्या सह काम्यकवने सुखेनावस्थानकथनम् | १०—५९ |
| किरातार्जुनाभ्यां वाराहीमाकृतिं दधतो राक्षसस्य हननम् | ३५—२०६ |
| किरातहनने प्रयुक्तानां बाणानां नैष्फल्यं चिन्तयताऽर्जुनेन किराते देवत्वादिसम्भावनम् | ३५—२०८ |
| किरातार्जुनयोर्युद्धवर्णनम् | १३९—८३८ |
| कुबेरेणाऽर्जुनं प्रति अन्तर्धानाख्यास्त्रप्रदानम् | ३६—२२० |
| कुबेरेण भीमकृतस्य पुष्पाहरणस्याभ्यनुज्ञानम् | १२७—७६२ |
| कुबेरदर्शनेन भीमस्याविकारिता | १३४—८१२ |
| कुबेरस्य भीमकृत्यदर्शनेन सन्तोषः | १३४—८१३ |
| कुबेरेण युधिष्ठिरं प्रति अगस्त्यात् स्वस्य शापप्राप्तिकथनम् | १३४—८१४ |
| कुबेरेण युधिष्ठिरं प्रति क्षत्रियधर्मकथनम् | १३५—८१६ |

अध्यायः—पृष्ठम्

कुबेरेण पाण्डवप्रशंसनम् १३५—८१७
कुबेरेण स्वावासं प्रति प्रस्थानम् १३५—८१९
कुमारपराक्रमवर्णनम् १८४—११२८
कुमारेण क्रौञ्चगिरिदारणपूर्वकं श्वेतपर्वतभेदनम् १८४—११२९
कुन्त्या दुर्वाससः परिचर्यया परितोषणम् २५९—१४७९
कुन्त्या शापभयात् सूर्ये कृच्छ्रात् सङ्गाङ्गीकरणम् २६२—१४८९
कुन्त्या कवचकुण्डलधारणेन कर्णस्य जननम् २६३—१४९३
कुन्त्या जातमात्रस्य गर्भस्य मञ्जूषायां निक्षेपपूर्वकमश्वनद्यां
विसर्जनम् २६३—१४९४
कुन्त्या गर्भरक्षणाय सकलदेवताप्रार्थनम् २६३—१४९४
कुन्तिभोजोपाख्यानम् २५८—१४७५
कुन्तीपूजया प्रसन्नेन दुर्वाससा तां प्रति वरप्रार्थनचोदना २६०—१४८३
कुवलाश्वखानितात् समुद्रादुत्थितेन धुन्धुना सर्वाश्व-
भक्षणपूर्वकं कुवलाश्वपुत्राणां स्वतेजसा दहनम् १६८—१०३३
कुवलाश्वेन धुन्धुमारस्य ब्रह्मास्त्रेण दहनं देवेभ्योवरग्रहणं च १६८—१०३४
कृत्यया द्रावितेन यवक्रीतेन स्वपितुरग्निहोत्रगृहप्रवेशः १११—६८९
कृतयुगे नानाप्रकारेण क्षेमलाभवर्णनम् १६३—९९७
केनचिद्व्याधेनाजगराद्दमयन्त्या विमोचनम् ५१—३०६
कोटिकाख्येन द्रौपदीं प्रति तत्पितृभर्तृकुलादि प्रश्नः २१९—१२८२
कौरवाणां भीष्मादिभि वैलवत्ताकथनम् ३२—१८५
कौशिकेन भैक्षाय ग्रामगमनम् १७०—१०४०
कौशिकेन स्वात्मोपालम्भनम् १७०—१०४५
कौशिकेन विप्रेण धर्मावगतये धर्मव्याधं प्रति गमनम् १७१—१०४६
कौशिकेन स्वगृहमेत्य स्वपित्रोः शुश्रूषणम् १७८—१०९७
गन्धर्वैस्सह कौरवाणामायोधनम् १९७—१२०१
गन्धमादनं प्रस्थितेषु पाण्डवेषु मध्येमार्गं महावृष्टेरुद्भवः ११७—७०८
गन्धर्वेण श्रीरामं प्रति सुग्रीवं प्रति गमनचोदना २३४—१३५२
गङ्गां गतेनाधिरथनाम्ना सूतेन सगर्भमञ्जूषाग्रहणम् २६४—१४९७
गयकृतयागवर्णनम् ९७—६१४

| | |
|---|---|
| | अध्यायः–पृष्ठम् |
| गारुडरूपधारिण्या स्वाहया अग्नेः रेतसां श्वेतपर्वते काञ्चनकुण्डे प्रक्षेपः स्कन्दोत्पत्तिश्च | १८४–११२७ |
| घटोत्कचानुचरैः पाण्डवानां वहनम् | ११९—७१६ |
| च्यवनेन शर्यातियाजनकथनम् | ९७—६१७ |
| च्यवनेन शर्यातिं प्रति सुकन्याया वरणम् | ९८—६२१ |
| च्यवनेनाश्विनोः वरप्रदानम् | ९९—६२५ |
| च्यवनेन शर्यातेर्याजनम् | १००—६२६ |
| च्यवनेनाश्विभ्यां सोमरसदानोद्यमे कृते तद्धननायेन्द्रेण वज्रोद्यमनम् | १००—६२८ |
| च्यवनविसृष्टया कृत्यया इन्द्रं प्रत्यभिसरणम् | १००—६२९ |
| च्यवनेन मदस्य स्त्र्यादिषु विभजनम् | १००—६३० |
| चारणादिभिः पाण्डवावलोकनाय समागमः | १३३—७९९ |
| चित्रसेनेनार्जुनं प्रति स्वसखित्वकथनम् | २०१–१२१९ |
| चित्रसेनेन दुर्योधनबन्धनकारणाभिधानम् | २०२–१२२० |
| चित्रसेनादिभिः विरथीकृतेन कर्णेन पलायनम् | १९७–१२०४ |
| चित्रसेनेन बद्धैः दुर्योधनसैनिकैः पाण्डवानां शरणीकरणम् | १९८–१२०६ |
| जनकोपाख्यानम् | २—१० |
| जमदग्न्युत्पत्तिः | ९१—५८९ |
| जमदग्निना पुत्रेषु शापदानम् | ९२—५९१ |
| जमदग्निनियोगात् रामेण परशुना कण्ठच्छेदनम् | ९२—५९२ |
| जमदग्निना रामं प्रति मात्रादिपुनरुज्जीवनवरप्रदानम् | ९२—५९२ |
| जमदग्न्याश्रमे कार्तवीर्येण गोवत्सापहरणपूर्वकं तदाश्रमपीडनम् | ९२—५९२ |
| जमदग्निना रेणुकायां व्यभिचारदर्शनम् | ९२—५९१ |
| जन्तुनामकपुत्रेण पिपीलिकादंशनेन रोदनम् | १०२—६४० |
| जटासुरेण भीमासन्निधाने युधिष्ठिरादीनामपहरणम् | १३०—७७१ |
| जनमेजयेन पाण्डवानां गन्धमादनवासमुद्दिश्य प्रश्नः | १३३—७९७ |
| जयद्रथेन द्रौपदीं प्रति स्वभार्यात्वयाचना | २२१–१२८७ |
| जयद्रथेन पुनः द्रौपदीं प्रति भीषणोक्तिकथनम् | २२२–१२९४ |

| | अध्यायः-पृष्ठम् |
|---|---|
| जनकयज्ञशालां विविक्षोरष्टावक्रस्य द्वारपालेन निरोधः | १०७—६६२ |
| जयद्रथं प्रति द्रौपद्या स्वभर्तॄणां निर्देशः | २२४-१३०६ |
| जयद्रथेन द्रौपदीविमोचनपूर्वकं पलायनम् | २२५-१३१४ |
| जयद्रथेन पाण्डववधाय रुद्रं प्रति तपश्चरणम् | २२६-१३२१ |
| जयद्रथं प्रति रुद्रेण विनाऽर्जुनं चतुर्णां पाण्डवानां युद्धे निवारण वरप्रदानम् | २१६-१३२१ |
| तपस्यता कौशिकेन पुरीषोत्सर्जनेन बलाकायाः सक्रोध-निरीक्षणेन दहनम् | १७०-१०३९ |
| तपस्विवेषधारिणेन्द्रेणार्जुनं प्रति सकलास्त्रप्रापणाय प्रथमं श्रीमहादेवदर्शनस्य कर्तव्यत्वोपदेशः | ३३—१९९ |
| त्वष्ट्रा दधीचास्थिभिः वज्रायुधनिर्माणम् | ८१—५१९ |
| तापसैः दमयन्तीं प्रति शुभोदर्कानुग्रहविधिः | ५२—३१८ |
| त्रिजटास्वप्नवृत्तान्तः | २३५-१३५९ |
| दमयन्त्या नलं प्रति सुरक्षितगृहप्रवेशप्रश्नः | ४६—२७८ |
| दमयन्त्या नलस्यैव वरणीयतोपायकथनम् | ४७—२८० |
| दमयन्त्यास्स्वयंवरमण्डपे नलाकृतिषु देवेषु नलवितर्कः | ४८—२८२ |
| दमयन्त्या नलवरणाय देवानां शरणीकरणम् | ४८—२८४ |
| दमयन्त्या नलं प्रत्यक्षक्रीडातो विरामयाचनम् | ४९—२९१ |
| दमयन्त्या निर्जने वने हृतसर्वस्वं नलं प्रति स्वपरित्यागशङ्कया निजदुःखकथनम् | ५०—२९८ |
| दमयन्त्या नलविरहेणाऽऽक्रन्दनम् | ५१—३०३ |
| दमयन्त्याः वने नलं प्रत्याक्रोशप्रकारः | ५१—३०४ |
| दमयन्त्या स्वस्यां कामपरवशं व्याधं प्रति मरणरूपशापदानम् | ५१—३०७ |
| दमयन्त्याः वनमध्ये नलं प्रति शोकप्रकारकथनम् | ५२—३०८ |
| दमयन्त्या वनसञ्चारिणस्सिंहादीन् प्रति स्वभक्षणयाचनम् | ५२—३१२ |
| दमयन्त्या यं कञ्चन पर्वतं प्रति स्ववृत्तान्तकथनपूर्वकं नलदर्शनप्रश्नः | ५२—३१३ |
| दमयन्त्या तापसारण्ये तापसान् प्रत्यभिवादनम् | ५२—३१५ |
| दमयन्त्या तापसान् प्रति कुशलप्रश्नपूर्वकं स्ववृत्तान्तनिवेदनम् | ५२—३१६ |
| दमयन्त्या अशोकवृक्षं प्रति स्वपतिसन्दर्शनप्रश्नः | ५२—३२० |

अध्यायः-पुटम्

| | |
|---|---|
| दमयन्त्या वनमध्ये जनसार्थदर्शनम् | ५२—३२१ |
| दमयन्तीं प्रति नानाविधैर्जनैः नानाप्रकारेण शङ्का | ५२—३२१ |
| दमयन्त्या सार्थवाहादीन् प्रति स्वीयवृत्तान्तनिवेदनम् | ५२—३२२ |
| दमयन्त्या सार्थेन सह चेदिराजपुरं प्रति प्रस्थानम् | ५३—३२४ |
| दमयन्त्या चेदिपुरे राजमात्रे वृत्तचरित्रकथनम् | ५३—३२७ |
| दमयन्त्या राजमातरं प्रति स्वनियमकथनम् | ५३—३२९ |
| दमयन्त्या सुनन्दानाम्न्या सख्या सहवासः | ५३—३३० |
| दमयन्त्या पितृगेहप्रस्थानयाचनम् | ५६—३४४ |
| दमयन्त्या नलं प्रति ब्राह्मणेभ्यो वक्तव्यवचनोपदेशः | ५६—३४६ |
| दमयन्त्या पर्णादमुखान्नलस्य ऋतुपर्णगेहेऽवस्थित्यवगमः | ५७—३५० |
| दमयन्त्या स्वमातरं प्रति सुदेवमुखात् नलानयनयाचनम् | ५७—३५१ |
| दमयन्त्या नलानयनाय सुदेवं प्रति ऋतुपर्णानयनरूपोपायकथनम् | ५७—३५२ |
| दमयन्त्या ऋतुपर्णस्य रथघोषश्रवणेन तत्सारथौ नलसम्भावना | ५७—३६३ |
| दमयन्त्याः नलसंयोगाभावे प्रतिज्ञावचनम् | ५७—३६४ |
| दमयन्त्या नलवितर्केन दूतीप्रेषणम् | ५७—३६६ |
| दमयन्त्या नलपरीक्षायै पुनः प्रेषितया दूत्या तं परीक्ष्य पुनर्निवृत्तया सत्या दमयन्त्यै विशेषतस्तच्चरित्रकथनम् | ५७—३७२ |
| दमयन्त्या नलनिर्णयाय तत्पाचितमांसानयनाय दूतीप्रेषणम् | ५७—३७४ |
| दमयन्त्या नलपाचितमांसाशनेन नलं प्रत्याक्रोशनम् | ५८—३७४ |
| दमयन्त्या बाहुकस्य केशिन्या स्वगृहानयनम् | ६१—३७५ |
| दशरथेन रामस्य यौवराज्याभिषेचने चिकीर्षिते रामेण कैकेयीवचनात् सीतालक्ष्मणाभ्यां सह वनगमनम् | २३१—१३२३ |
| दानप्रशंसने मुद्गलोपाख्यानम् | २१६—१२६८ |
| दानवेभ्यो भीतेन गूढेन चार्जुनेन परिचिन्तनम् | १४४—८६५ |
| दारुकिना युद्धस्थलादन्यत्रापयानस्य कारणप्रतिपादनम् | १५—९६ |
| दाल्भ्य समागमः | २२—१२८ |
| दाल्भ्येन ब्राह्मणानां प्राशस्त्यवर्णनम् | २२—१२८ |
| दाल्भ्येन ब्राह्मणानां सकलश्रेयः प्राप्तिहेतुत्ववर्णनम् | २२—१३० |

अध्यायः-पृष्टम्

दासोऽस्मीति कथितवतो जयद्रथस्य युधिष्ठिरसमीपप्रापणम् । २२६-१३१९
दिलीपेन गङ्गानवतारेण शोचनम् ८४—५५०
दिवं गच्छद्भिरिन्द्रादिभिर्मध्येमार्गं कलिद्वापरयोर्दर्शनम् ४९—२८७
दुर्ग्रहाणां शान्तिप्रकारकथनम् १८७-११५१
दुर्योधनानुशासनं प्रति धृतराष्ट्रप्रार्थितेन व्यासेन मैत्रेयं प्रति तत्प्रार्थनविधानम् ९—४६
दुर्योधनेन पाण्डवानां द्वैतवनप्रस्थापने उपायपरिचिन्तनम् १९४-११९०
दुर्योधनेन गन्धर्वाणामुत्सारणाय सेनाप्रेषणम् १९६-२१९९
दुर्योधनं प्रति तद्भटैः गन्धर्वपरुषोक्तिकथनम् १९६-१२००
दुर्योधनेन युधिष्ठिरसमीपे विलापः १९९-१२१०
दुर्योधनेन स्वीयरक्षायाचनम् १९९-१२११
दुर्योधनेन सस्त्रीकेन स्वपुरं प्रति प्रस्थानम् २०२-१२२३
दुर्योधनेन कर्णं प्रति सानुजपरिवारस्य स्वस्य गन्धर्वेभ्यःबन्धनादिपराभवस्यभीमादिभिस्तद्विमोचनाय तैस्सह युद्धप्रकारस्य च कथनम् २०४-१२२६
दुर्योधनेन बन्धमोचनप्रकारवर्णनम् २०५-१२२८
दुर्योधनस्य पराभवासहिष्णुतया प्रायोपवेशनाध्यवसायः २०५-१२२९
दुर्योधनेन दुश्शासनं प्रति राज्यपालनविधानम् २०६-१२३१
दुर्योधनेन राजसूयकरणाय सम्भारसङ्ग्रहणायाज्ञापनम् २१०-१२४९
दुर्योधनं प्रति ब्राह्मणैः राजसूययाजननिषेधपूर्वकं मन्यसत्रकरणचोदना २१०-१२५०
दुर्योधनदुश्शासनाभ्यां यज्ञे निमन्त्रणाय सकल ब्राह्मणानां पाण्डवानां चानयनाय दूतप्रेषणम् २११-१२५२
दुर्योधनसभायां कर्णेनार्जुनवधप्रतिज्ञानम् २१२-१२५८
दुश्शासनविलापवचनम् २०६-१२३२
दुर्योधनं प्रति शकुनिना सान्त्ववचनम् २०८-१२३६
दुर्योधनं प्रायोपवशने स्थिरबुद्धिं ज्ञात्वा तदानयनाय पातालवासिभिः दैत्यदानवैः जपादिभिः कृत्यासर्जनम् २०८-१२३८
दुर्योधनस्य कृत्यया रसातलप्रापणम् २०८-१२३९

